स्स्थानापन्नस्तद्धर्मं लभते" इति न्यायेन जगद्गुरुपदवींदेवीमर्हन्ति । परिशिष्टाः पीठत्रयाधीशास्त्वाचार्यकपदभाजो भवन्तीति विवेकस्तयोरधिगम्यते समस्तैरेव साम्प्रदायिकव्यवहरणैः ॥

नियमेन किलानेनैव साम्प्रतमत्र वरिष्ठद्वारकाशारदापीठस्य परमाचार्याः "श्रीमद्राजराजेश्वरशङ्कराश्रमस्वामिनो" निजपीठपूर्वाचार्यसरणिमनुरुन्धानास्समुपात्तविजययात्राः सौराष्ट्रादिनानादेशीयब्रह्मक्षत्रमहाराजवन्दितपादारविन्दाश्च बहुतरविद्यातपोविभूतिभिरात्मनो दिशि दिशि वितन्वाना विराजन्ते । त एते यात्रायामेतस्यां श्रौतानि हि तत्त्वान्युच्चावचफलप्रकारपरितुन्दिलान्यतिविशदपुरुषार्थविशेषपर्यवसायीन्याधिकारिकजनानतितरामेव ग्राहयामासुराचार्यचरणा अनुप्रसङ्गम् । तेभ्यः किल तत्त्वेभ्यो बहिर्भूतान्वातुलव्रातपारभावितात्मनः पुनरीदृक्करानविचारितचेतोमोहघटनामात्रकुशलानशिक्षयन्वा चिरं जम्बूकालापविषयसमवायसहोदरान्वैष्णवम्मन्योद्धारितविकृतप्रक्रियागर्हितगात्रांश्चानेकत्र वा यथायोग जल्पाकान् । परममी निबन्धमुखेनैव निर्णीता उपकारायाशेषाणां सम्पद्येरन्निति विवेचकमतीनामभ्यर्थनाभिरारचितोयं निबन्धोऽभ्यवसीयते सदर्थं प्रयुज्यमानाभिस्तदनन्तरम् । स एष रामानुजीयादिकल्पिततापादिसंस्काराणां सहैव स्वोपजीव्यश्रीभाष्यश्रुतप्रकाशिकावाग्भिर्निरसनातिशयशरीरी सदसद्वस्तुस्वरूपप्रत्यायनैकहेतवे निरमाय्यादरभराद्भगवद्भिर्जगद्गुरुचरणैरिति स्वाभिप्रायपर्यालोचनपुरस्सरमिह सङ्कल्पावन्त प्रवर्तन्ताम्मा पुनस्तत्सम्पत्तिदेवतामन्तरा दुरावेशदूषितमनीषा दूषणसामान्यचेष्टायामापद्यन्तामिति खल्वावेदयाम्यहं विद्वज्जनान् ।

मूल्यम् १।) . रामचन्द्रगङ्गाधरशास्त्री ।

श्री १११०८ मन्महेश्वरापरावतारशङ्करभगवत्पूज्यपादा
जगद्गुरवो विजयन्ते तराम् ।

———***———

# ॥ त्रिदण्डिमतविभेदिनी ॥



अचिन्त्याण्डोद्भूतिस्थितिविलयतिसत्तासुकृतभाक्
कृतिव्रातस्फूर्तिस्थिततरसमारम्भवननम् ।
निधानं निर्द्वन्द्वव्यवहृतिभरस्य प्रशमिनाम्
भजामः श्रीकण्ठावतरणमहो मोक्षसुमनम् ॥ १ ॥

अभेद्यापत्पद्याविवशजगतीचक्रकमिदम्
दुरुच्छेद्यच्छायावचनरचनावीचिनिहतम् ।
समुद्धर्तुं सद्यस्त्रिदशविभुभिः सार्धमभव-
न्नमामस्सर्वेशस्तमिह भगवत्पादमजिरम् ॥ २ ॥

तदनु मदनं निर्भिद्यैव व्यपेतसदात्मना-
मसुरसुधियामन्तर्नेता प्रसाधितनैगम-

क्रमिकसदनो विश्वं दीप्ते हिरण्यरितिप्रदैः
स खलु भगवान्नाराराध्यो युगीगतिभूतये ॥ ३ ॥

हते ऽपि शतधा तले वसुमतीसुमित्राकृते-
र्गणे विगुणकिन्नरामुदयमाप्नुवत्येव तम् ।
मुधाविधिपरावृतं निजवितण्डितानात्मकम्
सुवादहरिताशयैर्मथितजीवनं मन्महे ॥ ४ ॥

एवंविधे विविधनिग्रहगोचरे नो
निर्मत्सरोऽयममिमं सुविभाव्य भूयः ।
श्रीभाष्यके मतिपरिभ्रमवाग्विलापे
लोप्यभयत्ननिलये कलपेपुरार्पाः ॥ ५ ॥

१ ग्रन्थारम्भः

अत्र हि तापत्रयपापच्यमानप्राणभृत्करणत्रयीप्रशान्तिहेतवे निगमग्रामः किल कृत्स्नार्थावाप्त्युपायरत्नाकरो महेश्वराकारमज्ञानैकविशालमूर्तिश्च-राचरमचारव्यवस्थाविभागमागिप्रक्रियाविभासकः कर्मोपास्तिज्ञानानां नामोपद-र्शिततापारातिपरंतपभूतानामुद्योतको व्यष्ट्या पुनः समष्ट्या नः सर्वतन्त्रसिद्धान्त-मवगाह्यमानस्तन्त्रान्तरं च न्यक्कुर्वाणो विराजते त्रिलोक्याम् ।

२ तदुपोद्घातः

नन्वत्र विप्रतिपन्नानां नाम रामानुजादीनामभिमतन्तावच्छ्रीवैष्णवत्वादि श्रौतं भवत्युत स्मार्तमथ वा पौराणिकमाहोस्वित्तान्त्रिकमिति जिज्ञासुजनचिन्ता-यां न भवत्येव श्रौतं नापि स्मार्तं न वा पौराणिकं तात्पर्याद्धि परमात् । कि-न्तर्हि परिशेषात्तान्त्रिकमेवेति वदामः । न ह्येवंविधसङ्केतनिकेतनं बत वैष्ण-वत्वं क्वचिदपि लक्षितं वेदेष्ववजानीमहे । तद्बोधकप्रमाणत्वा-नामनवगमात् । न त्वन्तरा वाक्यप्रतीतिं तथाविधार्थाभ्युपगमो विदुषा-मिष्यते निराबाधम् । मानबाह्यार्थावलीपरिग्रहस्य सुमतयोग्यताभावसत्त्वैकनि-रूपकत्वात् । न चायं मतविभेदश्चतुर्वेदसंहितासु वाक्यैर्नैकतमेन वा ऽङ्गीकृतो गम्यते यतस्तत्र श्रीवैष्णवपदस्यात्यन्ताभावः । विष्ण्वादिशब्दैरुल्लसच्छ्रुति-ततीनाम्भूयस्त्वे ऽपि साक्षात्परम्परया वा तासामनुपाधिकैकपरमात्मनो माहात्म्य-

मात्रप्रतिपादने परं निर्भरभरत्वात्। न चायमनन्यात्मैव वैकुण्ठाधिपतेर्भगवतो मूर्तिमतः परमात्मेति वाच्यम्। वैकुण्ठाधिपतेव लोकान्तराणामप्याधिपत्यं, तस्य निरङ्कुशं गम्यमानं सच्छ्रीवैष्णवमतिमद्भिरभ्युपात्तस्य तु विष्णोरनवस्थितविग्रहविशेषवतो दूरीकरोत्येव भावनां यस्मात्।

ननु "इदं विष्णुर्विचक्रमे। त्रीणि पदा विचक्रमे। तद्विष्णोः परमम्पद" मित्याद्याः श्रुतयो वैकुण्ठेश्वरस्यैव विष्णोस्तेपङ्किङ्कर्यक्रियाकर्मीभूतस्य परं तं महिमानं विनिवेदयन्त्यो विजयन्त इति चेन्मास्मैवं मंस्थाः। वैलासेश्वरस्यापि महेश्वरस्य सर्वेश्वरत्वसार्वज्ञयोः प्रतिपादने बद्धादराणां "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतं। पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्य" मित्येवञ्जातीयकानां श्रीवैष्णवादिमतव्यूहविध्वंसिनीनां च श्रुतीनां श्वेताश्वतरसंहितामागगानां प्रत्यनुसन्धातव्यत्वात्। अतो ऽपि पुनः प्रमाणान्तरजिज्ञासायां "सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः। जनिता ऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णो" रित्यस्या ऋचो नैरुक्ते निगदव्याख्यातायासंशयोच्छेदपरमकरवालत्वात्। न च ऋगेषा सूर्यपरतयैव तत्र व्याख्याता सती कथमिहोदाह्रियते महेशमाहात्म्यवादितयेति भ्रमितव्यम्। आदित्यमण्डलाखण्डलावच्छेदेन महसो, माहेश्वरस्यैव ब्रह्माण्डगोलकबाह्याभ्यन्तरप्रकाशातिशयशालिनो गीयमानत्वात्। तथा चाम्नायते "असौ यस्ताम्रो अरुण उत बभ्रुः सुमङ्गलः। सहस्राक्षाय मीढुषे।" अथ य एषो ऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः। नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतये ऽम्बिकापतय उमापतये पशुपतये नमो नम" इति। तदुपबृंहणभूतकूर्मादिवचनैश्च "सर्वात्मा सर्वलोकेशो महादेवः प्रजापतिः। सूर्य एव त्रिलोकस्य मूलं परमदैवतम्। द्वादशान्ये तथा ऽऽदित्या देवास्ते ह्यधिकारिणः। वरुणो माघमासे तु सूर्यः पूषा तु फाल्गुने। चैत्रमासि च वेदाङ्गो धाता वैशाखतापनः। ज्येष्ठे चैव तु देवेन्द्र आषाढे सविता रविः। विवस्वान् श्रावणे मासि प्रोष्ठपद्यां भगः स्मृतः। पर्जन्यो ऽश्वयुजे त्वष्टा कार्तिके मासि भास्करः। मार्गशीर्षे भवेन्मित्रः पौषे विष्णुस्सनातनः। एको देवो महादेवो भास्वान् सा-

३ विष्णोरेव सर्वेश्वरत्वशङ्काया महेश्वरस्यापि तद्वत्ता व्यवस्थापकप्रमाणप्रदर्शनम्।

क्षान्महेश्वरः । एष रुद्रो महादेवः कपर्दी च घृणी हरिः । आदित्यो भगवान् सूर्यो नीलग्रीवस्त्रिलोचनः । अधीयते सहस्रांशुः सामगाध्वर्युहोतृभिः । भूर्भुवस्स्वस्त्वमोङ्कारः सर्वो रुद्रस्सनातनः । त्वमेव विश्वं बहुधा जातं यज्जायते च यत् । नमो नमस्ते रुद्राय त्वामहं शरणं गतः । हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः । अम्बिकापतये तुभ्यमुमायाः पतये नमः । नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने । विलोहिताय भर्गाय सहस्राक्षाय ते नमः । नमस्यामि परं ज्योतिर्ब्रह्मणां त्वां परामृतम् । विश्वं पशुपतिं भीमं नरनारीशरीरिण ,, मित्येवमादिभिरादित्यान्तर्यामित्वतन्मूर्तिधरत्वविश्वप्रकाशकत्वविश्वव्यापित्वानि सदा महेश्वरे समुल्लासगोचराणि प्रतिपादितानि भवन्ति । न च " त्रयीमयी विष्णुशक्तिरवस्थाने करोति वै ,, इत्यादिना विष्णोरादित्यमण्डलादिव्यापारनियन्तृत्वाधिगमेन कथमत्र शिवस्य प्रतिपाद्यते तद्वत्तेत्याशङ्कनीयम् । शिवांशावेशवशेनैव तस्मिन्तद्योग्यतापादकशक्तिविशेषोपचारप्रतिपत्तेः ।

४ शिवस्य हि सर्वेश्वरत्वससिद्धया जीवकोटयन्तर्गतत्वविष्णुभक्तत्वादिदुर्मतेर्नास्तिकानां परीहार. ।

ननु शिवस्य जीवकोटिप्रविष्टत्वे विष्णोर्भगवतो भक्ताग्रगण्यत्वे च कथङ्कारमुदीरितप्रमाणवाणीभिर्वा सर्वेश्वरत्वमुपपाद्यतामिति । अत्राभिधीयते यथाशास्त्रमुपपाद्यत इति । तस्य हि जीवत्वभक्तत्वयोर्ग्राहकवचनभेदानामेकादशरुद्रान्तर्देयरुद्रादिविशेषविषयाणां च पौराणिकादीनामपौरुषेयश्रुतिमण्डलीपरिहास्यमानानामुदितार्थव्यवस्थापनानुकूलप्रभुताया एवाभावात् । तथा च श्रुतिः " मायिनं तु महेश्वर " मित्यादिका । सेयं शिवमेव ब्रह्मेति बोधयन्ती जीवभावं कथं नु तस्याभिदध्यात् । तदव्यवहितोत्तरश्रुत्यवयवो हि " तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगदि ,, त्याऽत्मा भुवनजातं व्याप्नुवतां स्वांशभूतजीवानां नियामकतया महेश्वरं, परमात्मानमाचक्षाणः कथं वा जीवात्मानं तमेतमभिव्याहरेत् । न चैतावता " वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवस्स विज्ञेय ,, इति श्रुतिमेतामचोदाहरता ऽस्ति हि जीवभावस्तात्त्विक एवेति शक्यते वदितुं वादिना मन्दात्मना वा । " स चानन्त्याय कल्पत इति तदव्यवहितोत्तरमन्त्रवर्णेन तु दशान्जीवस्य व्यावहारिकीं समाप्य पारमार्थिकीमेव ब्रह्मानन्यस्वभावां विभावयतां जीवत्वस्य प्रशान्तिपुरस्सरमेव ब्रह्मात्मभावयोग्यताकृत्वप्रतिपत्तेः कैवल्यरूपाया. परं प्रतिपाद्यमानत्वात् । न चापि हरिविरि-

ञ्च्यादीनां ललाटमुखेभ्योऽङ्गेभ्यश्शम्भोः प्रादुर्भूतिम्पुराणादिभ्यो नानाविधेभ्यो ऽवगच्छाम इति युक्तम्प्रत्याययितुम् । प्रादुर्भूतेरेतस्यास्संहाररुद्रतदवयवभूतानां श्रीमन्महेशविभूतिविशेषाणामेव गत्या हि तया तया विषयीकरणात् । मूर्तित्र-

५ उदितार्थसंसाधकप्रमाणवचनोपन्यसनम् ।

योत्तीर्णस्य तु महेश्वरस्य भगवतो न कुतोपि जननमुपपद्यते । नैतावता तेषां नारायणहिरण्यगर्भाभ्यामपकर्षः कदाचिदप्याकलनीयः । कल्पादिभेदेन कदाचिद्विष्णोः कदाचिद्विरिञ्चेः कदाचित्तेषामपीति तदर्थसमानयोगक्षेमत्वोपपत्तेः । यथोक्तं वायुसंहितायां शिवपुराणे " त्रयस्ते कारणात्मानो जातास्साक्षान्महेश्वरा ,, दित्युपक्रम्य " तपसा तोषयित्वा तं पितरं परमेश्वरं । ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णू जगन्मयः । विष्णुश्च भगवांस्तद्वद्ब्रह्माणमसृजत्पुनः । नारायणं पुनर्ब्रह्मा ब्रह्माणं च पुनर्भवः । एवं कल्पेषु कल्पेषु ब्रह्मविष्णुमहेश्वराः । परस्परस्माज्जायन्ते परस्परजयैषिणः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः । प्रभावः कथ्यते तेषां परस्परसमुद्भवात् । तानि तानि प्रणीतानि विद्वांस्तत्र न मुह्यति । अयम्परस्त्वयमिति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशय ,, इति कर्मविपाके पुनः " यो ब्रह्मविष्णुरुद्राणाम्भेदमुत्तममावतः । साधयेदुदरव्याधियुक्तो भवति मानव,, इति महेश्वरांशभूतानां तेषान्दोषविशेषप्रसाधने दोषोत्कीर्तनात् ।

एवञ्चायम्परिहारः पारमार्थिको भवन्नपि साक्षान्महेश्वरस्यैव 'तुष्यतु न्यायेन विष्णुविरिञ्च्योर्ललाटदेशाज्जननमङ्गीकृत्याप्यदोषावहमेव तदेतदिति परं व्यवस्थाप्यते । विष्णोर्विरिञ्चेश्चाविमुक्तोपासनास्थानतया ऽतिनिर्मलाल्ललाटदेशादाविर्भूतिं महेश्वरस्य न तु नासापुटाद् ब्रह्मणो नारायणस्येव तत्पौत्रात्कश्यपान्मानवमात्राद्वा जननं महादेवस्याविर्भावे च क्वचिदपि नारायणस्येव न मानववीर्यानुप्रवेशो न वा योषिद्गर्भादिवासादिः । यदि तद्योनिप्रभवत्वं तत्र तत्राविर्भावमात्रेण चेदवद्यमापद्येत तदा सन्जातनिदर्शनैर्नारायणस्य क्लृप्ततरैः कियदवद्यमापद्येत । यदि पुनराविर्भावमात्रम्महेश्वरस्य जननदोषतयैवोद्घाटयेत बालिशकिशोरैस्तदा तदेतन्नारायणस्यैवातिमात्रमुद्घाटितं स्यादेव शश्वत् । रामकृष्णावतारयोर्मोहभयशोकादिप्रबन्धस्य यथाभूतजननैकमूलीभूतस्य तत्तत्प्रकरणे प्रकीर्तिततया तच्चापि तैरेवोद्घाटितं स्यादेव सर्वशः ।

न चायद्भमलासनादिसम्प्रार्थितस्याकर्मवशवर्त्येव नारायणस्याखिलोऽप्यवतारः स्वात्मेच्छापरिग्रहप्रयुक्तमानवजन्मादिरञ्जनैकप्रयोजनो वा शोकमोहाद्यभिनयप्रकार इति मन्तव्यम् । प्रवर्तिते हि प्रमाणपर्यनुयोगे विकल्पोत्तरत्वादुत्तरमतेः । पुराणवचनेभ्य एव चेन्मतिभेताद्ग्राहयेयुस्तदा तेभ्य एव वा महेश्वरस्याप्याविर्भूतिं पितामहादिमार्थितस्यात्मेच्छापरायत्ताद्कुतो न सङ्कचेयुरन्। तानेतान "नादिनिधनो देवश्चैनन्यादिममान्वितः । ज्ञानानि च वशे यस्य तारकादीन्यशेषतः । अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमं । सृष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थित प्रभु । स हि पूर्वोत्के राजँस्तोपिनस्तपसा विधेः । ललाटादनियोज्यो ऽपि पुत्रत्वेन प्रकल्पितः। अहञ्च भवतो वक्त्रात्कल्पान्ते घोररूपधृक् । शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः । निर्दिष्ट, परमेशेन महेशो नीललोहितः । पुत्रो भूत्वा ऽनुगृह्णाति ब्रह्माणं ब्रह्मणो ऽनुजः । तस्य त्वत्कमलस्थस्य नियोगाद्दशनो विभुः । ललाट तस्य निर्भिद्य प्रादुरासीन्महेश्वर,, इति महाभारतकूर्मपुराणयोरात्मेच्छापरायत्तामेव शिवस्याभिव्यक्तिंब्रह्मनारायणयोर्ललाटदेशादनुजानीमहे यथान्यायम् ।

विष्णोस्तु "अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभो । उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् । स वै समाधियोगेन कश्यपस्तदबुध्यत । प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षण । सो ऽदित्यां वीर्यमाधत्त तपसा चिरसम्भृतम् । समाहितमना राजन् दारुण्यग्निमिवानिलः । अदितौ निहिते गर्भे भगवन्तं सनातनं । हिरण्यगर्भो विज्ञाय समीडे गुडनामभिः । इत्थं विरिञ्चिस्तुतकर्मवीर्यं प्रादुर्बभूवामृतभूरदित्यां । चतुर्भुज शङ्खगदाब्जचक्रः पिशङ्गवासा नलिनायतेक्षण,, इति वामनावतारप्रस्तावे भागवते पुरुषवीर्यानुप्रवेशनतत्स्त्रीगर्भवासतद्योनिप्रभवत्वानि दर्शितानि भवन्ति । आख्यानादमुष्मान्मानवादिवदेव कतिपयकालावस्थायिनी गर्भे तस्यावस्थितिस्सूचिता सती वामनपुराणे पुनः स्पष्टमेव वर्णिता ।

तत्र तावत्प्रह्लादेन विष्णुम्भगवन्तमन्वेषमाणेन तमेतद्कुत्राप्यलब्ध्वा रत्नसानोरधस्तात्तेजो ऽतिरेकाञ्च गीर्वाणजननीं दितिमहानाम्नीं दृष्टवता कुक्षौ तस्या प्रतिष्ठमेव तं निश्चितवता च साक्षात्कृत एव विष्णुस्तत्रेति "तान्दृष्ट्वा देवजननीं सर्वतेजोऽधिकां मुने। विवेश दानवपतिरन्वेष्टुं मधुसूदनं। स दृष्ट्वा जगतानाथं माधवं वामनाकृतिं । सर्वभूतवरं देवं दृष्ट्वा मातुरथोदर,, इत्या-

दिना गम्यते हि विस्पष्टम् । इत्थञ्च मा त्वं मधुसूदनस्येव महादेवस्यापि गर्भवासादिकं नियतमेव तदा तदा ऽभूदिति ब्रूयाः । विकारवर्गनायकस्य वस्तुवृत्त्या ननु नेतृभावातिशायिकार्यानुप्रवेशादिव्यापारासम्भवात् । अन्यथा ऽनन्यसाधारणमेवाजन्मेति विशेषणं श्रीकण्ठस्य साभिप्रायं न प्रसिध्येत् । न चेष्टापत्तिः । तद्विषयप्रमाणवाक्यव्याकोपात् । मन्त्रवर्णस्तावच्छ्वेताश्वतराणामुदाहृतः पुरस्तात् । परस्ताच्चेहा "जात इत्येवं कश्चिद्भीरुः प्रपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यमितीममुदाहरामो मन्त्रवर्णमेव पुनस्तत्रत्यम् । अस्यायमर्थः । रुवं संसारदुःखं द्रावयति वियोजयतीति रुद्रः "रोदेर्णिलुक्चेति रक्प्रत्ययः । रुत्या प्रणवरूपया स्वात्मानं प्रापयतीति रुद्रः । रुतिं शब्दं वेदात्मानं ब्रह्मणे कल्पादौ राति ददातीति वा रुद्रः तस्य सम्बुद्धिर्हे रुद्र । त्रिविधायामप्यस्यां व्युत्पत्तौ "वशुभद्रावको रुद्रो यज्जहार पुनर्भवम् । तस्माच्छिवस्ततो रुद्रशब्देनात्राभिधीयते । चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो ऽस्य त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश । यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये„ इति यथाक्रममेव भारती स्मृतिः श्रुती चात्रार्थे प्रामाणानि वेदितव्यानि । तथा विच हे रुद्र । इति शब्दो हेत्वर्थः यस्मात्त्वमेवाजातो जन्मजराऽशनायापिपासाधर्मवर्जितः । इतरत्सर्वं विनाशिदुःखान्वितं तस्माज्जन्मजरामरणाशनायापिपासाशोकमोहान्वितात्संसाराद् भीरुर्भीतस्सन् कश्चिन्मोक्षार्थी त्वामेव शरणं प्रपद्यते तथैवाहं मोक्षार्थी सन् त्वामेव शरणं प्रपद्ये । यत एवमतो यत्ते दक्षिणं मुखं उत्साहजननं ध्यातमाह्लादकरं अथवा दक्षिणस्यां दिशि भवं दक्षिणं मुखं तेन मां सर्वदा रक्षस्वेति भाष्यकृद्भिर्भगवद्भिर्भाषितो ऽधिगम्यते ।

६ रुद्रस्य सर्वेश्वरत्वे सिद्धे तद्रूपोपस्थापकतत्पदोर्थनिर्वचन पुनस्तान्निरूपकश्रुत्याद्युपवर्णनम् ।

अत्रार्थे "अजातमिममेवैकं मत्वा जन्मानि भीरवः रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिण मुख मिति तदुपबृंहणायमानशिवपुराणवचोविशेष उन्नीयते । एतेन "यस्याङ्गाज्जायन्तो हरिरुद्रमुख्या मोहं न जानन्ति सुरेन्द्रमुख्याः । ममापि विष्णोर्जनकं देवमीड्यं यो ऽन्तकाले सर्वलोकान्स जह्रे । नित्यस्सत्यस्सर्वसाक्षी महेशो

७ शिवस्यैव सर्वेश्वरत्वे श्रुतिभिरपि सिद्धे तन्मानस्यैव निरतिशयत्वबोधकपराशरस्मरणोदाहरणम्।

नित्यानन्दो निर्गुणो निर्विकल्पः । आनन्दरूपो भगवान्गिरीशः स्वाविद्यया मोहितमातनोती,, त्येवमादिकाना पिप्पलादशाखीयश्रुतिवाक्यानामात्मगतपदाति-शयतात्पर्यपर्यालोचनया महेश्वरस्तावदेक एव सन्सर्वेश्वरस्सर्वसाक्षी चाजन्मा तद-न्ये तु सर्व एव हरिब्रह्मादयो जनिमन्त इत्यवधार्यते अपर्यन्तस्य तावत्कालस्य समुद्राम्भस इव विप्लुषो रामकृष्णाद्यवस्थानकालावयवस्य तदितिकर्तव्यतानाकृचा-लनायत्तोच्चावचोपाख्यानतात्पर्यपरिचिन्तया तेषामपि ,देहत्यागादिव्यापारव्या-पृतस्य स्वेतरजनाधीदैवपारवश्यसमानस्वभावाभिधायिनो माहात्म्यं ननु नाईत्येव तौल्यकथागन्धमनाद्यनवच्छिन्नकालकारणभूतेन परमात्मना परं रुद्रेण । तथा च मन्त्रवर्णः श्वेताश्वतराणां "स विश्वकृद्विश्वविदात्मयोनिः कालकालो गुणी स-र्वविद्य,, इति । स्मृतिरपि पाराशरी "एवंमानेन वर्षाणां ब्रह्मणश्च उदाहृतः ब्रह्मणश्च शतेनापि विष्णोरेकमहर्भवेत् । एवंविधास्समासेन प्रयाते ऽब्दशते द्विजाः । रुद्रस्यात्मनि लीयन्ते भूतभौतिकमृत्स्य,, इत्येवञ्जातीयका च पाकशासनपद्मासन-पद्मनाभानां यथाऽधिकारमेव मानमुपन्यस्यात ऊर्ध्वं रुद्रमानमेव परमावधिरू-पेण बोधयन्ती तस्मिन्नेव ब्रह्माण्डमण्डलस्य प्रविलयमात्यन्तिकमवगाहयतीति गम्येत चातितराम् । न चैष महिमा रुद्रस्य गम्यमानो ऽपि ताम-सत्वनिर्घृणत्वाभ्यां नेष्टे नस्सेव्यस्य विष्णोस्सत्वप्रधानस्य कारुण्यसिन्धोः क-रुपन्तमधरीकर्त्तुङ्कदाचिद्धेति शक्यमाक्रोशीकर्त्तुम् । तत्कल्पाल्पताऽऽपाद-नानुरूपप्रवृत्तिभिन्नप्रवृत्तेरेव स्मृतेरस्यास्सुतरामप्रत्ययात् । प्रत्युत प्रकरणस्यैवा-स्य तदर्थत्वाच्च ।

यदुक्तम्भगवति शिवे तामसता ऽस्तीति तदयुक्तम् । कालाग्निरुद्रमूर्त्ति-स्वरूपधारिणस्तस्य नियततरजगत्संहारप्रक्रियामुपाददानस्य प्राणिसामान्यविश्राम-परमसदनस्य कदाचित्कया विद्वदपेक्षयोपदर्शिततमःप्रादुर्भाव-स्य च वस्तुस्थित्या गुणत्रयप्रचारमात्रोत्तीर्णस्य तत्प्रयुक्तया-वद्दूषणसम्पर्कासम्पृक्तत्वात् । न ह्यत्र संहारप्रक्रियामालक्ष्य नैर्घृण्यं रुद्रे वा कालाग्निसंज्ञके शक्यते सम्भावयितुम् । तार-तम्येपितया च प्रयोजनानन्ततृष्णया व्याम्रियमाणप्राणिमात्रचि-न्तासन्तानजन्योपद्रवनातस्यात्यान्तिकप्रहाणायात्मन्यप्ययापरपर्यायविश्रान्तिविशेष-दानाऽत्मने स्वकाल एव प्रवृत्तस्य हि तस्य संहाराह्वयस्य वस्तुनो नैर्घृण्यगोच-

८ शिव तामस मन्यमानाना म तीरपाकृत्य तस्यै-व सात्विकताम्-रूपादकवेदादिप्र माणस्य व्यक्ती-करणम् ।

रशङ्काकलङ्कानास्पदत्वात् । न ह्युन्मार्गगामिनः पुत्रादीन् शिक्षयतान्तावत्पि-त्रादीनामवात्सल्यलेशो बोद्धाव्यते क्वचिदपि तावत्तत्वार्थविद्भिर्वा सद्भिः । पुत्रादिषु गुणार्जनैकसम्पत्सम्पत्तये पित्रादिभिः प्रयुज्यमानायाश्शास्तेः पुनः प्रेमातिशयपर्यवसिताया आभ्युदयपारम्परीपरिप्राप्त्याधायकत्वात् । यथा वा दुष्टात्मन्येकस्मिन्निधनं प्रापिते व्यालव्याघ्रादाववश्यमेव प्राणिनाम्बहूनामुपजायते खलु क्षेमातिशयः । न चैष वधः पापायावकल्पते अपि तु पुण्यायैव मोदानुवादिने । "मोदेत साधुरपि वृश्चिकसर्पहत्यये,,त्येवमादिकानामर्थशास्त्रवाचामनुग्राहिणीनां जागरूकत्वात् । चोरादिवधोऽपि वसुमत्यां क्षेममात्रपर्यवसाय्येव सद्भाभिप्रेयते दुरितहेतुतया शास्त्रैर्वा शास्त्रस्थैः । उत्कटपाप्मनाञ्च कृते प्रयुक्तो ह्युग्रतरो ऽपि वधो न लोकविद्विष्टो न वा शास्त्रविद्विष्टश्च । अपि तूभाभ्यां न्याय्य एव मन्यमानो व्यवतिष्ठते । यथोक्तं "राजनिर्धूतदंडास्तु कृत्वा पापानि मानवाः ॥ निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा । यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भरः । प्रजास्तत्र विवर्धन्ते नेता चेत्साधु पश्यती,, त्यादिना मनोः स्मृतौ विष्णोश्च भगवतः । न ह्येवमपि त्रिपुरादिदैत्योत्तंससंहारकारणीभूतस्य हि तस्य क्रौर्यादेर्न्याय्यत्वेऽपि दक्षाध्वरविध्वंसनहिरण्यगर्भपंचमशिरोलवनादिकर्म क्रौर्यैकमूलमनुचितमेवेति वोपपद्यते । सूक्ष्मतरापराधसञ्जातदोषविशेषस्यैव ब्रह्मादिगतस्य पुराणाद्युन्नीतस्य च तत्रापि हेतुतावगमात् । तथा च पुत्रादिनिग्रह इव ब्रह्मादिनिग्रहो ऽपि न्यायप्राप्त एवेति स्थिते । "ये पुनर्निग्रहाः केचिद् ब्रह्मादिषु निदर्शिताः । तेऽपि लोकहितायैव कृताः श्रीकण्ठमूर्तिना । अण्डस्यास्याधिपत्यं हि श्रीकण्ठस्य न संशयः । श्रीकण्ठाख्यां शिवो मूर्तिं क्रीडन्तीमधितिष्ठति । सदोषा एव देवाद्याः निगृहीता यथोचितम् । ततस्तेऽपि विपाप्मानः प्रजाश्च विगतज्वराः । निग्रहोऽपि स्वरूपेण विदुषां न जुगुप्सितः । अत एव हि दुष्टेषु दण्डो राज्ञः प्रशस्यते । यत्सिद्धिरीश्वरत्वेन कार्यवर्गस्य कृत्स्नशः । न स चेदीशताङ्कुर्याज्जगतः कथमीश्वरः । हिते सदा निषण्णानामीश्वरः स्यान्निदर्शनम् । स कथं दूष्यते सद्भिरसतामेव निग्रहात् । सर्वोऽपि निग्रहो लोके न च विद्वेषपूर्वकः । न हि द्वेष्टि पिता पुत्रं यो निगृह्यापि शिक्षये,,दितीमाः प्रवर्तन्ते वाचो व्यासाचार्याणां शिवपुराणे । न चैवङ्क्रौर्यादेः परिहृतत्वेऽपि तमोऽभि-

भूतता तु तस्यास्त्यैवान्यथिवेति चोदितव्यम्पुनर्दुरात्मभिः । निद्राचलितबन्धनताडनाभृगुपत्नीताडितवादौ यदुनन्दनकृतच्छद्मवादौ चान्यायांश्चैव परं क्रौर्यादिकं शोकमोहादिचेतोविकाराश्च दृष्टा एव रामकृष्णावतारयोर्निद्रापारवश्यं पुनर्यस्मात् ।

आह स्म च सभापर्वणि महाभागो भीष्मः "आदिदेवः पुरात्मा निद्रावशमुपागतः । शेते स्म स सदा विष्णुर्मोहयन्नगदव्यय,,मित्यादिना स्कान्दे पुनस्सर्वेश्वरश्रारमो "यन्नामसकलाङ्गलेशगृहीतस्त्वं पयोनिधौ । निद्रापरवशश्शेषे नेदन्तव गुणावह,,मिति निनिन्द बहुधा नारसिंहं भगवन्तम् ।

शल्यपर्वणि तत्तन्महारथमारणोपायभूताश्छलिकव्यापाराः खलु श्रीकृष्णस्य दुर्योधनेन पाण्डवयुद्धे परिगणिताः क्रोधाविष्टेन पुनस्तेन भगवन्तम्प्रत्यावेदिताश्च "कंसदासस्य दायाद न ते लज्जा ऽस्त्यनेन वै । अधर्मेण गदायुद्धे यदहं विनिपातितः । ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्या यदिच्छसि । किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः । घातयित्वा महीपालानृजुयुद्धान्सहस्रशः । जिह्मैरुपायैर्निपुणैर्न ते लज्जा न ते घृणा । अहन्यहनि शूराणां कुर्वाणः कन्दनं महत् । शिखण्डिनं पुरस्कृत्य घातितः स पितामहः । अश्वत्थाम्नः सुनामानं हत्वा नागं सुदुर्मते । आचार्योत्त्याजितं शस्त्रं किं तन्न विदितं मम । स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् । हन्यमानस्त्वया दृष्टो न चैनं समवारयत् । वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च । घटोत्कचे व्यसर्जयाः कस्त्वत्तः पापकृत्तमः । छिन्नबाहुः प्रायगतस्तथा भूरिश्रवा रणे । त्वया विसृष्टेन हतः शैनेयेन दुरात्मना । कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिघांसया । व्यसनेनाश्वसेनस्य पन्नगेन्द्रसुतस्य वै । पुनश्च पतिते चक्रे व्यसनार्तः पराजितः । यदि मां चैव कर्णं च भीष्मद्रोणौ च संयुगे । अर्जुनं प्रति युध्येथाः न ते स्याद्विजयो ध्रुवम् । त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः । स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः । त्वया मायाविना कृष्ण मायां कर्मप्रमोक्षणीम् । कृत्वा हतसिन्धुपतिः किं तन्न विदितं मम । न मे विषादो भीमेन पादेन शिर आहतम् । काका वा कङ्कगृध्रा वा निधास्यन्ति पदं क्षणा,,दिति वासुदेवभीमसेनयोस्तिरस्कारक्रियाविषयाः प्रगल्भन्ते । दुर्योधनाकलितपराक्रमानोत्त-

रकालं दिवि देवताभिः प्रशंसा तस्य समकारि चात्यन्तम् । ततस्तस्योपरि कृता ताभिः कुसुमवृष्टिर्वर्णिता विशेषेण । तत ऊर्ध्वं कृष्णादीनामन्यायाचरितशाठ्यादिमवृत्तिनिमित्तं च लज्जाचिन्ताद्युपवर्णितं भवति । ततोऽप्यूर्ध्वं "अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः । दुर्योधनस्य पूजा च कृत्वा व्रीडामुपागमन् । हतांश्चाधर्मतो दृष्ट्वा शोकार्ताः शुशुचुर्नृपान् । भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च । तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवादीनचेतसः । प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिःस्वन,, इतीदं वचनजातं दृश्यते हि साभिप्रायम् ।

आश्वमेधिके पुनः पर्वणि "उत्तङ्को मुनिरायया,, वित्यारभ्य महता शाठ्येन विनिपातिता हन्त दुर्योधनादय इति मुनिना तेन कारुणिकेन कृत. कोपो वर्णितो भवति । "आयान्तमेत्य गोविन्दं समन्युर्मुनिरब्रवीत् । सर्वांस्त्वं धार्तराष्ट्रादीन्शाठ्येनानाशयन्नृपान् । अतः शपेयं त्वाङ्कृष्णेत्युक्तस्तु हरिराह स,, इति वचोविशेष उपलभ्यते विस्पष्टम् । दुरभिनिवेशे तर्हि शिवे ननु परे ब्रह्मणि रामकृष्णाद्याराधिते तामसताऽदिकमध्यारोपयता तामससेवकसेवकग्राहसेवकेन श्रीवैष्णवंमन्येन दुष्कृतङ्घोरतरमात्मना कृतमिव स्येयमिति फलितम् ।

नन्वेवमपि "श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्यु,, रिति भागवतवचनोपजीव्येन बहुतरपुराणवचोनिचयेन विष्णोरेव सत्त्वैकविग्रहस्य मोक्षमहादातुस्सत्त्वास्थितौ बहुतरपुराणादिप्रामाण्योपपन्नतामसतनुं तावद्रुद्रमाराधयितुं न शक्नुमो वयं सात्त्विकाङ्गाः कथञ्चिद्वेति चेन्नैव वादीः । प्रभुसम्मिताभिराम्नायमहागीर्भिर्भगवतो रुद्रस्यैव सात्त्विकतनुदीव्यताधिगमात् । विष्ण्वादिकास्वशेषास्वपि देवतासु सनत्कुमारादिष्वाजानसिद्धेषु वसिष्ठवामदेवादिषु नो ब्रह्मर्षिप्रवरेष्वमातशत्रु जनकादिषु च राजर्षिधुर्येषु तरतमभावेन प्रतीतिमापन्नस्य सर्वस्यैवास्य सत्त्वाशस्य पराशिवप्रसादैकजन्मन. सत्त्वार्णवाब्धिन्दुस्थानीयतया परम्प्रतिपत्तेः । तथा च श्वेताश्वतरोपनिषदि "महान्प्रभुर्वै पुरुषस्सत्वस्यैष प्रवर्तकः । रुद्र यत्ते दक्षिणं मुखं तेन मा पाहि नित्य,,मित्याम्नायते । एतेन सत्त्वैकविग्रहः परमात्मा हि रुद्रोऽमृतांशुरिवात्मभूतसत्त्वकिरणावलीभिर्हरिब्रह्मेन्द्रादिकुमुदजगच्चराचरमाह्लादयन्ननुपलं पुष्णातीति विज्ञायते । यो ऽसौ निजसत्त्वप्रकाशनेनान्यान्सात्त्विकीं वृत्तिमापादय-

ति स सत्त्वालयः सत्त्वधर्नीति चाख्यायते योगिजनो जगत्याम् । किमुतात्र दि-क्कालाद्यनवच्छिन्नो जगन्नियन्ता च रुद्रस्सत्त्वार्णव एव सत्त्वात्मभूतं ननु सत्त्वं भुवने किलाखिले स्वातन्त्र्येण सदा प्रवर्तयतीति । सत्त्वांशमरीचीनां वितरणेन देवतादिकञ्जगदनुगृह्णन्ती या तनुश्शिवा सा सदा सत्त्वमय्येव । या च पु-नस्सगद्व्यापारवेलायां नियामिकी सती निग्रहानुग्रहप्रवृत्तिप्रयोजिका भवति सैव तनुर्घोरा भूत्वा तमोमयीन्तावत्प्रक्रियान्तात्कालिकीमात्मनो व्यपदिशतीत्य-ध्यवसीयते ।

यथा चाम्नायते यजुस्संहितायामध्याये शतरुद्रीये "याते रुद्र शिवा त-नूरघोराऽपापकाशिनी तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि । या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी शिवा रुद्रस्य भेषजी तया नो मृडजी-वसे,, इति ऋचोरनयोरयमर्थः = हे रुद्र गिरिशन्त गिरौ कैलासे सदैवाविर्भूतो भ-क्तेभ्यो यत्सुखं तनोति विस्तारयति स गिरिशन्तः तस्य सम्बोधनं हे गिरिशन्त शनोतेर्डप्रत्ययः । अथवा गिरिर्मेघः तस्मिन्स्थित्वा भूतेभ्यः पर्जन्यरूपेण यः शं तनोति । यद्वा गिरि वेदे तिष्ठन् ज्ञातव्यार्थद्वारा शं तनोति । गिरि प्रणवे व-र्तमानस्सन् ध्येयरूपेणानवधिकातिशयात्मानन्दात्मकं शं तनोति या । ते तव शिवा भक्तानामनुग्राहिका तनूः शरीरं तनुशब्दपर्यायस्तनूशब्द ऊप्रत्ययान्तः । अ-घोरा भक्तानामहिंसिका शिवेत्युक्तेऽप्यघोरेति पुनर्वचनं स्वपरायत्तभयद्वयनिमित्ता-भावप्रदर्शनार्थम् । अपापकाशिनी पापमनिष्टं तस्याप्रकाशयित्री अव्ययपूर्वपद-प्रकृतिस्वरत्वम् । यद्वा भक्तानां पापापनोदकत्वात्पापफलानान्तावत्तापानामप्रका-शयित्री तया शन्तमया सुखतमया सत्त्वफलभूतनिरतिशयानन्दस्वभावया इयङुव-ङ्अधिकारे तन्वादीनाञ्छन्दसि बहुलमित्युवङादेशः । नोऽस्मानभिचाकशीहि ता-दृशीं तनुं स्वदीयामस्मान्प्रति भक्तजनानातिशयेन प्रकाशय काशतेश्छान्दसं ह्र-स्वत्वम् । अथवा चाकशीतिः पश्यतिकर्मा यङ्लुगन्तश्छान्दसः । हे रुद्र या ते तव शिवा कल्याणकरी तनूः सेयं विश्वाहभेषजी । विश्वान्यहानि विश्वाहाः । राजाहःसखिभ्यष्टच् । तेषु भेषजी सर्वेष्वप्यहस्सु भेषजभावात्र मुच्यते "भिषक्तमं त्वा भिषजां शृणोमी,,ति मन्त्रवर्णात् । वनितासुतराज्यस्वर्गादिसांसारिकसुख-विशेषदातृत्वेनात्यन्तिकससारोपरमपूर्वकमोक्षैकसुखदातृत्वेन च शिवत्वं तस्यास्त-न्वा उभयविधं महीयते । तया नो भक्तान्ब्रह्मविदश्च यथाधिकारं स्वर्गापवर्ग-

प्रदानद्वारेण जीवसे जीवयितुं तारयितुमिति यावत् । मृड सुखयेति प्रार्थनम् । एतेनाभ्युदयनिःश्रेयसे हि शिवाधीने भवत इति फलिते तत्पादपद्मरजसे हन्त मश्लेऽस्पृहयाणाः प्रत्युत पराः पुनर्वैरवृत्तीः प्रतिपलम्प्रयुञ्जानास्त्र जान्तादयो दशाङ्काङ्कां न गन्तारो दुरतिक्रमामिति व्यक्ततरम् । न चात्र रुद्रस्य तनुद्वयस्यास्तित्वे केन चिद्भ्रमितव्यम् । "रुद्रो वा एष यदग्निः तस्यैते तनुवौ घोरा ऽन्या शिवा ऽन्या । यच्छतरुद्रीयञ्जुहोति यैवास्य घोरा तनूस्तान्तेन शमयति यद्वसोर्धाराञ्जुहोति यैवास्य शिवा तनूस्तान्तेन प्रीणाती,,ति ब्राह्मणवचोबलेन तन्वोरुभयोरपि रुद्रस्य पृथक्पृथङ्निर्देशात् । तच्छमनप्रीणनयोरप्युपायविशेषस्य हवनस्नपनादिलक्षणस्य चोद्दिष्टत्वात् । एवञ्च शिवस्य सत्वैकविग्रहसत्तानिरूपकस्य "महान्प्रभुर्वै पुरुष,, इति श्वेताश्वतरमन्त्रवर्णस्योपबृंहणवाक्यानि "यस्य मायागतं सत्वं शरीरं स्यात्तमोगुणः । संहाराय त्रिमूर्तीनां स, रुद्रः स्यान्न चापरः । तथा यस्य तमः साक्षाच्छरीरं सात्विको गुणः । पालनाय त्रिमूर्तीनां स विष्णुः स्यान्न चापर,, इत्येवंरूपाणि पठ्यन्ते सूतसंहितायाम् । एतेन शिवस्य विग्रह एव सत्वम्भवति तमस्तु स्वकार्यकरणोपाधिः विपरीतमेवैतद्विष्णोरित्यपि विज्ञायते ।

वस्तुतस्तु शम्भोरन्यत्र न क्वापि सत्वं निरतिशयं सम्भवत्सम्भीयते । पालनोपाधितामात्रेण विष्णावपि सत्वमुपचर्यते । तदपि यथोपन्यस्तविधया मनोभवमदाहकेन हि शिवेनैव परब्रह्मणा तया तया गत्या तत्र तत्र प्रवर्तितम्भवतीति प्रतिपद्यते "अथो ये ऽस्य सत्वानो हन्तेभ्यो ऽकरं नमः । सत्वनां पतये नम,, इत्याभ्यामृग्यजुर्भ्यां शिवस्य हि शरणमुपयातास्सर्वविधा एव प्राणिनो भृत्यरूपाश्चस्त एते सर्वसज्जननमनार्हाः सात्विकीभूय सायुज्यं लभन्त इति स्थिते किम्पुनरत्र सत्वोदन्वानुमाजानिर्मोक्षमहादातेति ।

नन्वेतावता कथमुपपाद्यतां मोक्षप्रदत्वं शिवस्येति चेदित्थम् । "नमो भवस्य हेत्यै,, इति मन्त्रेण संसारमहीरुहोच्छेदप्रक्रियायाश्शिवोदासनापरिपाकोत्तरकालीनपरमप्रसादपरायत्ततावधिगम्यते । यथा ऽऽहुः "कोटिजन्मार्जितैः पुण्यैश्शिवे भक्तिः प्रजायते । ईश्वरानुग्रहादेषा पुंसामद्वैतवासने,, ति । प्रज्ञा च सा संसर्गाभिव्यक्तिसम्पद्स्मतिप्रमाणर्थान्तरभूता "नमः श्लोक्याय चावसान्याय चेति,, मन्त्रेणा-

१ परब्रह्मत्वेनैव शिवस्य मोक्षप्रदत्वप्रतिपादकश्रुत्याद्युपन्यासः ।

न्नायान्नेष्वेवोल्लसन्ती तदात्मा हि शिव एवेति परं सम्पद्यते । श्रूयते पुनरीशानस्सर्वविद्यानामीश्वरस्सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवो,, मिति “ ज्ञानानि च वशे यस्य तारकादीन्यशेषत,, इति स्मर्यते च महाभारते । एतेन वेदशास्त्रादिविद्यासर्वस्वसञ्चालनाधीननिरतिशयनियन्तृत्वप्राणिमात्रकृत्स्नप्रवृत्तिप्रयोजकप्रभुतावत्त्ववेदोदयैकहेतुत्वहिरण्यगर्भादिदेवताजातजनयितृत्वमोक्षमहादातृत्वपरब्रह्मत्वादयो हि धर्मा महेश्वरे परमुपपन्नाः प्रतीयन्ते । यथोदीरितैश्वर्यशालितायां शिवस्य “सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य । ज्ञानं विरागतैश्वर्यं तपः सत्यं क्षमा धृतिः । स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च । अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे । ज्ञानमप्रतिमं यस्य वैराग्यञ्च जगत्पतेः । ऐश्वर्यञ्चैव धर्मश्च सहसिद्धं चतुष्टय,, मित्याद्याः स्मृतयो यथोदाहृतात्याश्रमोपनिषद्वचोवल्लरीलावण्यसम्मीलिताः सर्वैरेव मुमुक्षुगणैरवधार्यन्तान्नावदादरभरैः ।

१० श्वेताश्वतरोपनिषदा तदुपबृंहणेन च शिवस्य परब्रह्मत्वप्रतिपादनम् ।

ननु श्वेताश्वतरोपनिषदः परब्रह्ममहिमानमवबोधयन्त्याः कथमन्यथा शिवतत्त्वप्रतिपादनपरतेति चेन्नैवम् । उपनिषदः खल्वेतस्या उपक्रमपरामर्शोपसंहारैरसाधारणाभिर्हरशिवरुद्रेशानमहेश्वरादिगीर्भिरुपर्युपर्याऽदृततराभिश्शिवपरब्रह्मभावसमर्पणपरताया एवाप्रत्यूहमुपपत्तेः । उपक्रमे तावद् “ब्रह्मवादिनो वदन्ति किङ्कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठिताः अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्था,, मिति केषाञ्चिद्ब्रह्म जगत्कारणमित्येतावदवजानतां विशिष्य तदेतदविजानतामृषीणामेव ब्रह्मवादिनां तन्निर्णयाय विचारणा किल दर्शिता भवति । किङ्कारणं ब्रह्मेत्यनेन पुनर्जगत्कारणे ब्रह्मणि सामान्येन सन्देहस्सूचितोऽवगम्यते । कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्य संयोग एषां न त्वात्मभावादात्माऽप्यनीशस्सुखदुःखहेतो,, रिति मन्त्रेणानन्तरेण जगत्कारणे सन्देहगोचरधर्मिसिद्धिः प्रदर्शिता भवति । इत्थं सन्दिहानानामृषीणां स्वतो निर्णेतुमशक्तानां ब्रह्मविद्याधिदेवताया उमायाः प्रसादेन तन्निर्णयमिच्छमानानां तत्प्रसादेन जगतां कारणं ब्रह्म शिव एवेत्यासीत्तेषां निर्णय इत्येतत्प्रदर्शनार्थं “ते ध्यानयोगा अनुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढां

यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येक,, इत्यादिरुत्तरो मन्त्रः । उपनिषद्यस्यामग्रिममन्त्रेषु "विश्वाधिपो रुद्रो महर्षिः । तस्मात्सर्वगतः शिवः । क्षरं प्रधानममृताक्षरं हरः । एको हि रुद्रो न द्वितीयाय तस्थुः । मायां तु प्रकृतिं विद्यान्मायिनन्तु महेश्वर,,मित्यादिषु महीयमानैर्महेश्वरहरशिवरुद्रेशानादिशब्दैर्भगवान् शिव एव जगत्कारणपरब्रह्मात्मतया निर्णीतः सिद्धान्तितश्चेति विस्पष्टमाधिगम्यते ।

एवञ्च कृत्स्ना हीयमुपनिषदनन्यभावेन शिव एव परब्रह्मभावं प्रतिष्ठापयन्ती विजयतेऽतितरामिति स्थिते उपनिषद्येतस्यां "किङ्कारणं ब्रह्मेति,, मन्त्रविशेषा "समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः। वितेनिरे बहून्वादानात्मविद्यासंश्रयान् । किमस्य जगतो मूलमात्मा वाऽस्माकमेव हि । कोऽपि स्यात्सर्वभूतानां हेतुरीश्वर एव वा । इत्येवं मन्यमानानां ध्यानकर्मावलम्बिनां आविरासीन्महादेवी गौरी गिरिवरात्मजा । ब्रह्मविद्याधिजननी मुनीनां मुक्तिसिद्धय,, इत्युपक्रम्य "निरीक्षितास्ते परमेशपत्न्यास्तदन्तरे देवमशेषहेतुं पश्यति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराण,, मित्युपबृंहिताः कूर्मपुराणे । शिवपुराणे पुनः "मुमुक्षया पुरा केचिन्मुनयो ब्रह्मवादिनः । संशयाविष्टमनसो विमृशन्ति यथायथम् । किं कारणं कुतो जाता जीवामः केन वा वयं क्व चास्माकं सम्प्रतिष्ठा वर्द्धिताः केन वा वयम् । केन वर्त्तामहे शश्वत्सुखेष्वन्येषु वा ऽनिशं अविलङ्घ्या च विश्वस्य व्यवस्था केन वा कृता । कालः स्वभावो नियतिर्यदृच्छा नात्र युज्यते । भूतानि योनिः पुरुषो योगो वैषां परोऽथवा । अचेतनत्वात्कालादेश्चेतनत्वेऽपि चात्मनः सुखदुःखाभिभूतत्वादनीशत्वाद्विचार्यते । ते ध्यानयोगाऽनुगताः प्रापश्यन् शक्तिमैश्वरीं पाशविच्छेदिकां साक्षान्निगूढां स्वगुणैर्भृशम् । तया संछिन्नया शास्ते सर्वकारणकारणं शक्तिमन्तं महादेवमपश्यन् दिव्यचक्षुषा । यः कारणान्यशेषाणि कालात्मसहितान्यपि । अप्रमेयो ऽनया शक्त्या साकमेको ऽधितिष्ठती,, त्यादि । अत एव "नमस्ताराये,, ति मन्त्रवर्णः प्रणवप्रतिपाद्यत्वेन परब्रह्मभावं शिवे अवबोधयत्यस्यर्थम् ।

११ अत्रैव मन्त्रान्तरोदाहरणम् ।

संसारसागराज्जन्तूंतारयतीति तारः पचाद्यच् । शिवस्य प्रणवप्रतिपाद्यताया "अत्र हि जन्तोः प्राणेषूत्क्रममाणस्य रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षी भवती,, ति जाबालश्रुत्या पुनरविमुक्तोपासनया प्र-

सादितस्य हि शिवस्योपासनासगर्थे ससारतरणोपायतमप्रणवमहातात्पर्यभूतपरब्रह्म विद्याप्रदत्वमैककण्ठेयन सस्तूयते । विद्याया पुनरेतस्या जीवन्मुक्तिविदेहमुक्ति लक्षणफलसिद्धावर्वाचीनमानवमनोमोहविलसिता देवतान्तरलोकाप्तिलक्षणा पुनर्जन्मपरंपराप्रापिका वा मुक्ति किमर्थेति विभाव्यतान्तावद्वेदार्थमहातात्पर्यविद्भिर्येतोऽत्र मानिकव्यवहारनिवहात्प्रत्याव्यात्ममतौ शिव एव परे ब्रह्मण्यन्तःकरणगुहायामासीने जीवजातस्यार्पयित्वा रमणमेव तत्र परफलावह विधायते यथावत् । तथाचाम्नायते "स्तुहि श्रुत गर्तसदं युवान मृगं न भीममुपहत्नुमुग्रम् । " अङ्गुष्ठमात्र पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य स एवाद्य स उश्व एतद्वैतत् । यो वेद निहित गुहाया परमे व्योमन् । सोऽश्नुते सर्वान्कामान्सह । हृत्पुण्डरीके विरज विशुद्ध विचिन्त्य मध्ये विशद विशोकं मानिन्त्यमव्यक्तमनन्तमव्यय शिव प्रशान्तममृत ब्रह्मयोनिं तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतं उमासहाय परमेश्वर विभु त्रिलोचन नीलकण्ठ प्रशान्त ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्ता,, दिति । स्मर्यते च "ईश्वरःसर्वभूताना हृद्देशे ऽर्जुन तिष्ठती,,ति । श्रुतेरादिमाया अयमर्थः । श्रुत विश्वविख्यात वेदप्रसिद्ध वा "विश्वस्याधिपो विश्वस्याधिष्ठाता विश्वाकारस्त्व,, मिति । गर्तसद हृदयाभ्यन्तर गर्त यथा ऽऽहुः । "गिरति यवनयति विश्वमिति गर्त विश्वस्यावरकस्तमोविशेष कश्चित् । गीर्यन्ते ऽग्निना भक्ष्यन्ते प्रजा अत्रेति गर्तं श्मशाने शब्दवानाकाशो वा गर्त तत्र स्वमहिम्ना सीदतीति,, तीकाराः । युवान नित्यतरुण "युवा पिता स्वया रुद्र एषा,, मिति मन्त्रवर्णात् मृग न भीमं मृगः सिंहादिः सिंह एव वा मृगराट् तमिव भीमं भयंकरस्वरूपमुन्मार्गगामिनो दैत्यादीन्प्रति उपरिष्टादुपचारत्वादुपमार्थीयो न शब्दः । उपहत्नु उपसहर्तारमन्यानामसन्मार्गानुगामिनामुपसहरणायोद्यत्तुहनिभ्या क्नुरिति क्नुप्रत्ययः । छान्दसो ऽत्र तकारोपजनः उग्र सर्वैरप्यत्न मिभवनीयतेजोऽतिरेक । एवरूप परमशिव भगवन्त स्तुहीति । श्रुतिपूत्तरास्वपि दीप्यन्तो हि शिवेशानत्रिलोचनोमासहायादयो धर्मिग्राहकशब्दविभेदाः पार्ष्णिग्राहन्यायेनार्थान्तरमनवकाशीकुर्वाणाः परब्रह्मभूत नाम शिवमेवादित्याद्यन्तर्यामिणमसाधारणतरविशेषणैस्समभिव्याहृता भवन्त्यतिशयेनाभिदधाना इति गम्यते तावच्छिरोभाषम् ।

ननूदाहृतश्रुतिवर्णितमहिमातिशयस्य स्वप्रकरणाधीनपरब्रह्ममात्रगोचरतया कथमकस्माच्छिवपरताम्प्रत्याययसीति चेन्नायन्दोष। शिवब्रह्मणोरात्यन्तिकानन्यतोद्भासकेभ्यः परमेश्वरादिशब्देभ्यश्च स्वघटकेभ्यः परब्रह्मानर्थान्तराशिवमाहात्म्याधिगमादतितराम्। यथोक्तं महाभारते "युधिष्ठिरो धर्ममयो महाद्रुमो स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः माद्रीसुतौ पुष्पफले समृद्धे मूलं कृष्णो ब्रह्म च ब्राह्मणाश्चे,, ति। अत्र हि ब्रह्मशब्दः शिवाभिधायी विद्योतते। वृक्षरूपेण वर्णितस्य तावद्युधिष्ठिरस्य "मूलंब्रह्मे,, तिनिरूपयता हि भगवता बादरायणाचार्येण शिव एव परम्ब्रह्मेति द्योतितं यस्मात्। ननु न ब्रह्मशब्द ईशानवाची क्वचिद्वा लक्ष्यते। वेदविष्णुविप्रजातितपोहिरण्यगर्भादीनामेवावबोधनादिति। मैवम्। "ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलं ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नम,, इतिश्रुतेः। "त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदांवर,, इति शान्तिपर्वान्तर्हृदयपदसाहस्त्याश्च शिवस्य भगवतः परब्रह्मत्वप्रतिपत्तेः। न च शिवस्य भूयः सङ्कीर्णत्राणीव्यवहृतजीवभावभावितया वैष्णवप्रायायितया च सम्भावनामात्रमेव ब्रह्मत्वं तन्निष्ठमिति मनोरथैर्हापितव्यम्। श्रुतिस्मृतीतिहासपुराणेषु हि तस्य ब्रह्मत्वपरमात्मत्वसर्वभूतान्तरात्मत्वादेर्घण्टाघोषात्। अत्र हि ब्राह्मणानां विष्णोश्च पृथगुपादानात्तपोवेदयोस्साधनभूतयोश्चेतनवर्गमध्यपाठाङ्गीकारे प्रायःपाठविरोधाच्च ते नितरां ग्रहणमर्हन्ति अपि तु तेभ्यो विलक्षणस्यैव युधिष्ठिरसाम्राज्यमहाहेतुभूतस्योपादानं भवति न्याय्यम्। स चेह भगवान् शिव एवेति परम्प्रतीयते परिशेषादिति। न च "रूपं ज्योतिश्शब्द आकाशो वायुर्दिव्यः स्पर्शः सलिलं गन्ध उर्वी कालो धर्मो ब्रह्म च ब्राह्मणाश्च त्वत्सम्भूताः स्यास्नु चरिष्णुचेद,, मित्येवं प्रवृत्ते द्रोणपर्वणि नारायणकृतशिवस्तोत्रे ब्रह्मपदस्य ब्राह्मणपदसमभिव्याहृतत्वेऽपि वेदैकवाचित्ववदिहापि तस्यैव वाचिता कुतो न स्यादित्याशङ्कनीयम्। रूपं ज्योतिरित्याद्यचेतनसमभिव्याहारेण प्रायस्तत्र चेतनपाठाभावादत्र च तद्भावाच्च। एवञ्च शिव एव चेतनो ब्रह्मशब्देनेहाधिगम्यते प्रमाणप्रभावैः। न चैवमपि "मम प्राणा हि पाण्डवा,, इति वासुदेववचनात्तस्य युधिष्ठिरसाम्राज्यस्थितिहेतुता सर्वप्रकारकसाहाय्यभरतयाऽस्ति हि प्रसिद्धा। "अनुध्यानेन जप्येन विधास्यामश्शिवं तवे,,ति वनं व्रजन्तं धर्मराजमनुव्रजनेनानुगृहीतुकामानां वाक्येन ब्राह्मणानामपि जपादिभिराशीर्भिश्चोपकारिता वर्णिता

१२ ब्रह्मशिवयोरभेदाभिधायकेति हासश्रुतिवचनानामुपन्यसनम्।

भवति । एतेन ब्रह्मेति गीर्वासुदेवमेव विनिवेदयन्ती न तु शिवं तस्मादन्यं श-क्नुयात्तदुपकारकतयाऽधिगमयितुमुक्तदाविद्येति चतुरस्रम् । श्रीकृष्णवचनेभ्योऽपि प्रेमभरवारिलहरीविलासिभ्यः शिवस्यैव परब्रह्मतया युधिष्ठिरसाम्राज्यस्थित्यैकहेतु-तया चात्यन्तमुपपत्तेः ।

न च पुनर्मयैवैते निहिताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्निति,, गीतावचनात्कौरवसेनासंहारकर्तृत्वन्तावदात्मनिष्ठतयैव प्रतिज्ञात-म्भगवति युक्तमध्यवसातुम् । तस्मिन्नतिरथे द्रोणे निहिते पार्षतेन वै कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जय. । दृष्ट्वा सुमहदाश्चर्य-मात्मनो विजयावहम् यदृच्छया गतं व्यासं पप्रच्छ भरतर्षभ,,

१२ पाण्डवविजयैकहेतुत्व भगवति शिव एवेति भारतस्थवासुदेववचनादेवधारणम् ।

इत्यारभ्य "सङ्ग्रामे न्यहनच्छत्रून् शरौघैर्विमलैरहम् । अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् । ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते । तस्यां दिशि विशीर्य्यन्ते शत्रवो मे महामते तेन भग्नानरीन्सर्वान् मद्भग्नान् मन्वते जनाः । तेन दग्धानि सैन्यानि पृष्ठतोऽनुदहाम्यहम् । भगवंस्तन्ममाचक्ष्व को वै स पु-रुषोत्तमः शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः । न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसे,, त्यर्जुनप्रश्नं प्रस्तुत्य "प्रजापतीनां प्रथमं तेजसां प्रभवं विभुम् । भुवनं भूर्भुवं देवं सर्वलोकमहेश्वरं । ईशानं वरदं पार्थ दृष्टवानासि शङ्करम् तं गच्छ शरणं देवं वरदं भुवनेश्वरम् । महादेवं महात्मानमीशान जटिलं विभुम् । त्र्यक्षं महाभुजं रुद्रं शिखिनं चीर-वाससम् । महादेवं हरं स्थाणुं वरदं भुवनेश्वरम् । जगत्प्रधानमजितं जगत्प-तिमधीश्वरम् । जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् । विश्वात्मानं वि-श्वसृजं विश्वमूर्तिं यशस्विनं । विश्वेश्वरं जगत्प्रीतिं कर्मणामीश्वरं प्रभुम् । शं-म्भुं स्वयम्भुं भूतेशं भूतभव्यभवोद्भवम् । योगं योगेश्वरं देवं सर्वलोकमहेश्वर-म् । सर्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् । लोकत्रयविधातारमेकं लोकत्र-याश्रयं शुद्धात्मानं भव भीमं शशाङ्ककृतशेखरम् । शाश्वतं भूधरं देवं सर्ववागी-श्वरेश्वरं सुदुर्जयं जगन्नाथं जन्ममृत्युजरातिगम् । ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्विदं । दातारञ्चैव भक्तानां प्रसादाविहितान्वरान् । तस्य पारिषदा दिव्या रू-पैर्नानाविधैर्विभोः वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः । महाकाया महो-त्साहा महाकर्णास्तथा परे आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः । ईदृशः स

महादेवः पूज्यमानो महेश्वरः स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः । तस्मिन्घोरे सदा पार्थ सङ्ग्रामे लोमहर्षणे द्रौणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः । कस्तां सेनां तदा पार्थ मनसाऽपि प्रधर्षयेत् । ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् । स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते न हि भूतं समं तेन त्रिषु लोकेषु विद्यते । गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च । तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ये भक्ता वरदं देवं शिवं रुद्रमुमापतिं अनन्यभावेन सदा सर्वेशं समुपासते । इह लोके सुखं प्राप्य ते यान्ति परमां गतिं नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदे,, ति प्रवृत्तस्य श्रीमद्बादरायणाचार्य्यवचनजातस्य विस्पष्टार्थपर्य्यालोचनया पाण्डवसाम्राज्यनिमित्तभूतकौरवसैन्यसामान्यसंहारित्वस्य पाण्डवपरमाराधितश्रीमदुमारमणैकनिष्ठत्वावगमात् ।

न च तावता "मयैवैते निहिताः पूर्वमेव,, त्युक्तिरकिञ्चित्करेति शाक्यशङ्का । दर्शितदिशा ऽहंपदाभिधेयभूतप्रत्यगर्थानर्थान्तरमहेश्वरैकलक्ष्यीकरणात्तदुक्तेः । न च पुनः पार्थसारथ्याद्यत्यासन्नसमारम्भनिर्वाहकवाक्यान्तरसहस्रेण भगवत्येव केवलं तत्कर्तृताऽवगम इति युक्तमावेदयितुम् । भगवति केवलं तदुपसर्जनीभूतसन्नाहक्रियायोग्यताकत्वे ऽपि तत्प्रधानभूतसंहारकर्मणः पिनाकिन्येव सर्वेश्वरे विश्रामात् । संहरणप्रक्रियायास्ततो ऽन्यगामिन्या नूनं मूल एव व्यभतरत्वे साक्षात्तदामिलापकप्रमाणप्रकाण्डेष्वन्यथासमाचारस्यासामायिकत्वात् । नन्वनवधिकातिशयवशित्वादिविख्यापनानुकूलविश्वरूपप्रदर्शनस्य निरवशेषमहिमावधारणभूम्याशिशुपालादिहर्तर्य्येव विश्रुततया कथमकस्मादुदितावस्थानप्रपञ्चाधिगमस्तत्र स्यादिति चेद् बाढमेवं स्यात् । द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम । योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् । दिव्यन्ददामि ते चक्षुः पश्य मे योगमैश्वरम् । महायोगेश्वरो हरिः । दर्शयामास पार्थाय परमं रूपमैश्वर,, मित्याद्याभिर्विश्वरूपाध्यायगर्भाभिर्गीर्भिर्योगमाहात्म्यप्रतीत्यन्वयिनावच्छेदकमाहेश्वरमहोनिष्ठकिञ्चिन्दर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्वस्य भगवद्वासुदेवदेहावच्छेदेनाविर्भावमात्राभ्युपगमात् । न चैवमपि विष्णुरूपप्रादुष्करणप्रक्रियायाम-

१४ वासुदेवदर्शितविश्वरूपन्तु परमशिवस्यैव विजयते नतु भ्रातु विष्णोरिति निरूपणम् ।

त्यासन्नायामात्मगतायामेवात्रापूर्वेतरत्रैवस्वरूपविशेषणाक्रान्ततया तद्रूपोपवर्णनमकाण्डताण्डवप्रायममिपश्यामह इति मत्यवस्थातव्यम् । ऐश्वरादिशब्दवाच्यतावच्छेदकव्यापारमहिम्ना ह्युपक्रमपरामर्शोपसंहारादीनिर्णायकसामग्रीमुद्रया तद्रूपस्वीयताम्युपगमाभावविशिष्टशिवमहोमात्रप्रद्योतनोत्पादनाया भगवद्वासुदेवप्रतिज्ञानगोचरायाः प्रज्ञायमानत्वात् । "नमो हिरण्यबाहवे सेनान्ये दिशाञ्च" इत्युपक्रम्य "नम आमीवत्केभ्य" इत्यन्तम्परमपुरुषे पुरत्रयहर्तरि वैश्वरूप्यप्रतिपादनैकबद्धप्रतिज्ञशतरुद्रीयानुवाकभूरिभाषाविचारणाया ब्रह्माण्डपुण्डरीकमूलीभूतशाम्भवमहोमहाव्यक्तेर्विश्वरूपापरपर्यायाया योगाधिराजयादवाधीशप्रसाधितायाः परं विभावनीयत्वाच्च । अन्यथा रुद्ररूपाभिलापकस्य "कालो ऽसि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्त" इति वाक्यस्य सर्वतः पाणिपादन्तत्सर्वतो ऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति १ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् २ ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ३ द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः घोरा चान्या शिवाचा ऽन्या ते तनू बहुधा पुन. ४ घोरा तु या तनुस्तस्य सो ऽग्निर्विष्णुस्सभास्करः । सौम्या तु पुनरेवास्य आपोज्योतींषि चन्द्रमाः ५ वेदाङ्गास्सोपनिषदः पुराणाध्यात्मनिश्चयाः । यदत्र परमं गुह्यं स वै देवो महेश्वरः ६ गन्धमादनविन्ध्यौ च कृत्वा वंशान्तरौ हरः । पृथ्वीं ससागरवनां रथङ्कृत्वा तु शंकरः १ अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचन. । चक्रे कृत्वा तु चन्द्रार्कौ देवदेव पिनाकधृक् २ अणीकृत्वैलपुत्रञ्च पुष्पदन्तन्त्रियम्बकः । युगङ्कृत्वा तु मलयमवनाहं च तक्षकम् ३ योक्त्राण्यङ्गानि सत्वानि कृत्वा शर्वः प्रतापवान् । वेदान्कृत्वा ऽथ चतुरश्चतुरश्वान्महेश्वरः ४ उपवेदान्खलीनांश्च कृत्वा लोकत्रयेश्वरः । गायत्रीम्प्रग्रहङ्कृत्वा सावित्रीञ्च महेश्वरः ५ कृत्वोङ्कारं प्रतोदञ्च ब्रह्माणञ्चैव सारथिम् । गाण्डीवं मन्दरङ्कृत्वा गुणङ्कृत्वा तु वासुकिम् ६ विष्णुं शरोत्तमङ्कृत्वा शल्यमग्निं तथैव च । वायुङ्कृत्वाऽथ वाजाम्यात्पुङ्खे वैवस्वतं यमम् ७ विद्युत्कृत्वा ऽथ निश्राणं मेरुङ्कृत्वा तथा ध्वजम् । आरुह्य स रथन्दिव्यं सर्वदेवमयं शिवः ८ त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः । धाता च स विधाता च विश्वात्मा विश्वकर्मकृत् ॥

सर्वासान्देवतानाञ्च धारयत्यवपुर्वपुः १ सर्वेदेवैस्स्तुतो देवस्सैकधा बहुधा च सः । शतधा सहस्रधा चैव भूयश्शतसहस्रधा २ विश्वेदेवाश्च यत्तस्मि-

१५ छन्दार्थस्यापकानामानुशासनिकपर्ववर्तिवचनानामुदाहरणम्।

न्विश्वरूपस्ततस्स्मृतः । सर्वात्मा सर्वविख्यातः सर्वस्सर्वकरो भवः । सर्वभुक्सर्वभूतात्मा विश्वरूपो महाहनुः विश्वरूपस्स्वयं श्रेष्ठो । दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च । अजश्च बहुरूपश्च । सहस्रहस्तो विजयो । सुतीक्ष्णदशनश्चैव ।

महाकायो महाननः । सर्वधारी धरोत्तमः । सर्वदस्सर्वतोमुखः । अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हविः कृष्णवर्णस्सुवर्णश्च । महोरस्को ह्यन्तरात्मा । धाता शक्रश्च विष्णुश्च । युगरूपो महारूपः । सहस्रपात् सहस्रमूर्द्धा देवेन्द्रः सर्वदेवमयो गुरुः । अनन्तरूपो नैकात्मा तिग्मतेजाः स्वयम्भुवः । चराचरात्मा सूक्ष्मात्मा । विश्वक्षेत्रं प्रजाबीजम् । स्वर्गद्वारम्प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् । उद्भित् त्रिविक्रमः । ललाटाक्षो विश्वदेवो । भवच्छरीरे पश्यामि सोममग्निञ्जलेश्वरम् । आदित्यमथ वै विष्णुम्ब्रह्माणञ्च बृहस्पतिम् । खड्गजिह्वाय दंष्ट्रिणे । कटङ्कटाय दण्डाय नमः पचपचाय च । हुंहुंहुंकारपाराय हुहुंकारप्रियाय च । नमस्सहस्रशीर्षाय सहस्रचरणाय च सहस्रोद्यतशूलाय सहस्रनयनाय च । सहस्रसूर्यप्रतिम तपोनित्य नमोऽस्तु ते । त्वं गदी त्वं शरी चापी खट्वाङ्गी शरी तथा । छेत्ता भेत्ता प्रहर्ता त्वं नेता मन्ता पिता मतः । मृत्युःश्रुरश्च कृत्यश्च । विश्वकृद्विश्वकृतो वरेण्यस्त्वं विश्वबाहो विश्वरूपस्तेजस्वी विश्वतोमुखः । यं विनिद्रा जितश्वासाः सत्वस्थाः संयतेन्द्रिया ज्योतिः पश्यंति युञ्जानास्तस्मै योगात्मने नमः । जटिले दण्डिने नित्यं लम्बोदरशरीरिणे । कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः । यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु । कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः । सम्भक्ष्य सर्वभूतानि युगान्ते पर्य्युपस्थिते । यश्शेते जलमध्यस्थस्तम्प्रपद्येऽम्बुशायिनम् । प्रविश्य वदनं राहोर्यस्सोमम्पिबते निशि । ग्रसत्यर्कञ्च स्वर्भानुर्भूत्वा मां सोऽभिरक्षतु,, इतीदमाद्याम्नायमौलिमहाभारतवचोमञ्जरीविभवाभिराञ्जितस्योदाहृत "तेन मन्त्रानरीन्सर्वान् मद्भक्तान्मन्वते जनाः । न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चती" त्यादिवाक्यैकवाक्यतापन्नस्य भयानकादिप्रकर्णैकपदान्वयातिशयसम्भीयमा-

१६ तद्गोचरशङ्कासमाधानामुपदर्शनम्।

नस्य च महाभारतमहानात्पर्यैदम्पर्य्यपर्य्यालोचनया व्याकोप आपतेदतो यथोक्तमुनीर्थैः कृष्ण एव चेत्तस्माच्छिवांशावतारत-

या कृष्णस्वरूपसङ्कीर्तनस्य “सप्तमोऽहं वंशे तव भविष्यामी”ति गोपबालकम्प्रत्यनुग्राहकमहादेववचनप्रदानलक्षणस्य ब्रह्मोत्तरखण्डेऽवगमाच्छिवांशभूते श्रीकृष्णे शैवस्वरूपापरनामविश्वरूपाभिव्यक्तिरनुकूलतरेत्यवधेयम् । अन्यथा “दर्शयामास पार्थाय परमं रूपमैश्वरमि”ति परोक्षतया तद्रूपव्याख्यानं वा विरुध्येत । न च ‘किरीटिनं गदिनं चक्रिणञ्चे,त्यादिपदेभ्यो हि गम्यमानं रूपं वैष्णवमेवेति भ्रमितव्यम् । प्रमाणगम्यस्यास्य साहजिकत्वेऽपि प्रमाणान्तरगम्यमानतात्त्विकमाहेश्वरमहसः कृष्णमूर्तौ व्यक्तीभूतस्याभ्यर्हिततरत्वात् । न ह्येवं सति विष्णुत्वशिवत्वाभ्यामितरेतरसङ्कीर्णाभ्यामेकतराया अप्यसिद्धि “र्व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थिति”रिति जातिबाधकमानादिति भवति । स्वरूपतो हिरुङ्निरूप्यमाणतद्धर्मावच्छिन्नहरिहरमहसोरसङ्कीर्णत्वात् । वस्तुतस्तु नित्यतया पराभ्युपेतायास्तस्याः श्रुत्या बाधनाच्च । ईशशब्दाः शिववाचकपदपारम्परीमध्यपातितया रूढतया च तत्रैवामरसिंहादिभिस्सङ्ग्रथिततया किल प्रतिपत्तिर्व्याकुप्येत । न च “सर्वः शर्वः शिवः स्थाणुः प्रभवः प्रभुरीश्वर” इति विष्णोः सहस्रनामावलीगतपर्यायपदपद्धत्या पुण्डरीकाक्षादर्थान्तरं नाभिधत्ते प्रकृतेऽपीशपदमिति भ्रमितव्यम् । रूढयौगिकादिभेदभिन्नपदप्रतिष्ठानप्रक्षयापत्तेस्तथासति दुष्परिहरत्वात् । इतरेतरकृत्यस्येतरेतरेण साध्यत्वापत्तेश्च । न च श्रीमद्भगवत्पूज्यपादैर्निरधार्य्यत्रैवायमर्थो यतः पद्मनाभादभिधेयान्तरं न न्यरूपीति हर्षितव्यम् । वादिभेदाभिमतविकृतविष्णुतत्वासंस्पृष्टनिर्विशेषब्रह्मात्मैकत्वप्रतिपत्तिप्रतिपादनपरव्याख्यानातिशयस्य भगवतां शरणीकरणे हताः स्थ यूयं वर्धामहे वयञ्च । तत्वतस्तु परब्रह्मानन्यत्वप्रतिपत्तिकमाहेश्वरमेव महो विश्वरूपानर्थान्तरत्वेन यथोपन्यस्तप्रमाणैस्सुप्रतिष्ठितमुज्जृम्भते । न तु सा परैरभ्युपेतवैष्णवी प्रभा कथञ्चित् । तस्याश्चोक्तलक्षणलक्षितत्वे क्षोदक्षमत्वात् । भगवति गोपिकावल्लभे तद्रूपप्रादुर्भावस्तु निरवद्ययोगमाहात्म्यनिबन्धन एवेति स्थितम् । ननु “या स्वयं पद्मनाभस्य मुखपद्माद्विनिर्गतेति” वचनाद्भिन्न पौराणिकश्लोकामेताम्भगवद्वदनाम्बुजातनिर्यातत्तया ब्रुवाणङ्कथमत्र साहसमात्रेण विश्वरूपन्तच्छैवमेवेत्युक्तिमिमामनुमोदयेदिति चेन्नैवम् । श्रीमन्महेश्वरैकसत्तासमुन्मीलितत्वाद्भारतसङ्ग्रामसमयावच्छिन्नवासुदेवकृतव्यक्तीकाराक्रियासमाश्रितत्वाच्चार्जुनम्प्रति गीतायाः । न हि प्रकटीकरणप्रक्रियाऽतिशयशालिनस्तस्याः श्रीकृ-

१७ बहुतरवाङ्कापुरस्सर गीतायाः सनातनतैव नतु जातु वासुदेवकर्तृतेति सङ्कीर्तनम्

ष्णस्य प्रणेतृना समापतेच्छङ्क्यसम्भावना । प्रकटीकर्तुः प्रणेतृत्वव्यपदेशस्यौपचारि-
कतयाऽऽत्मकार्यकारितापत्तेराकिञ्चित्करत्वात् । न "चेमं विवस्वते योगं प्रो-
क्तवानहमव्यय,,मिति भगवत उक्त्या गीतायां निजनिर्मातृकतामेव ताम्प्रति प्रति-
पद्यामह इति साम्प्रतम् । उक्तैव स्वसजातीयया "विवस्वान्मनवे प्राह मनुरि-
क्ष्वाकवेऽब्रवीदि" त्यव्यवहितोत्तरया तस्यास्त्वम्बकालीनप्रचारणव्यापारपरीतात्म-
नामप्यतत्कर्तृणां नूनं विवस्वन्मनुप्रमुखानाङ्कर्तृत्वापत्तेस्ताम्प्रत्यनपनोद्यत्वात् । "ए-
वं परंपराप्राप्तमिमं राजर्षयो विदु"रित्युपदेष्टृपरम्पराविशेषप्रबोधिन्यश्च गिरः पर-
तराः प्रकुप्येयुर्यतः । उपदर्शितया खल्वनया देशिकव्यक्तीनाम्परम्परया स्व-
मूर्लीभूतमहेश्वरव्यक्तेः परिश्रान्तस्वातिरिक्तव्यक्तिगामिनत्प्रणेतृकशङ्काविभेदायास्सं-
सिद्धत्वादेव च सर्वशः । नन्वेतस्या महेशनिर्मातृनाऽभिलापकपदाभत्यये कथङ्का-
रन्तास्मिन्तत्सत्ताधीनसत्तावत्प्रचारगोचरो दुराग्रहः स्वाभिप्रेतम्प्रसाधयेदिति चेदत्र
वदामः प्रोदितप्रकारैरभिलापकादिविमर्शनविषयीभूताः प्रश्नविशेषा उक्तोत्तरास्स-
दाग्रहः किंलास्माकीनस्तु स्थानिभावप्रकाण्डभागीति । तदपि पुनर्दुर्वासनापीड्य-
मानदुरशङ्काप्रसञ्जने पुनरत्र प्रबोधयामस्सन्ति हि शब्दास्तस्यैवमभिलापकास्समप-
न्तत इति तथा हि । "शङ्करस्य परात्मनो महाताण्डवप्रसं-
ङ्गतः प्रादुरासन्सूत्रजातानि, सम्भारेभ्यो डमर्वादिभ्यः कैलासे
योगसूत्रं प्रत्याहारसूत्रं चिकित्सासूत्रञ्च तदनु ह था गीतिस्वरा-

१८ गीतादीनां महेश्वरस्य सङ्कल्पमात्रप्रसूतत्वप्रमापकवचनापन्यासः

स्सप्त य एते 'साम्नाममीषां मूलप्रकृतयो गीताः पुनरेतामनूत्तानपादाजानश्रुत्यादि-
संसेविता" इति लाट्यायनधर्मसूत्रं विजयते हि छन्दोगानाम् । योगसूत्रशब्दो
हि हिरण्यगर्भपातञ्जलादिसूत्रमूलीभूतानां नाम सकलादिमानामेव माहेश्वरसूत्राणा-
न्तावद्योगविषयाणामभिधायकः । प्रत्याहारसूत्राणि तु 'अइउण्,त्यादिमाहेश्वर-
सूत्राण्येव तानि च बृहस्पतिकाश्यपभारद्वाजपाणिन्यादिव्याकरणसूत्राणाम्प्रमेयप्रमाप-
काण्येव भवन्ति । चिकित्सासूत्रपदेनाश्विनधन्वन्तरिचरकात्रिमुनिरगीतानाद्भिलायु-
र्वेदतन्त्राणाम्मूलीभूतसूत्ररत्नान्येव माहेश्वराण्यधिगम्यन्ते । सप्त च गीतिस्वराः
स रि ग म प ध नी त्येवंरूपाः । मनूत्तानपादाजानश्रुत्यादिसंसेविता हि गीता
भवति हन्त भगवद्गीता एव । न तु ततोऽन्या गीताऽत्र गीतापदवेद्या । सौत्रैः
खलु मन्वादिपदैः 'मनवेप्राहे' त्यादिगीतानाम्मूलनिष्ठकपदार्थाविरूपतात्पर्यसङ्ग्राहकै-
रध्यात्मधियाप्रसङ्गेषु प्रस्तुततरैरन्यासां हन्त गीतानामनवकाशो वरीवर्त्येव यत. ।

न'न्वहम्ममे'त्याभ्याङ्खलु पदाभ्यां प्रश्नप्रतिवचनानुकूलव्यवहारनिर्वाहकाभ्यामने-
कत्र भगवद्व्याहारधाराया गीतायामुपेतत्वे ततोऽतिरिक्तकर्तृताकल्पना न न्या-
य्येति चेन्नैवम् । 'अहम्ममे,तिपदयोस्तत्रत्ययोरन्यार्थत्वात् । न हि भगवाना-
त्मन उपाधिभूतं वै देहं अजवसुमत्यादिसमुन्मिषितविलासाद्यास्पदं च विषयीकृत्य
तत्तादात्म्याभिमानजन्यव्यवहारकर्तृतयाऽऽत्मानं पदाभ्यामेताभ्यामभिधत्ते । न
वा 'बहूनि मे व्यतीतानि जन्मानी'त्यात्मवचनगम्यमानप्राचीनवपुरवच्छिन्नव्यवहा-
रनिवहाभिमानितया तस्य वर्तेते पदे ते । अपित्वपमृदि-
ताशेषाविशेषेण वपुरादिविक्रियासहस्रैकसाक्षिणा ब्रह्मणा शिवे-
न स्वरूपसत्तया तादात्म्यमभिपन्नस्याविर्भूततन्महोमाहात्म्यस्य
गीताभिस्तत्वस्यार्जुनम्प्रत्युपदेशविशेषवेलायां भगवतः कृष्ण-
स्य वाचौ ते तद्दृष्ट्या सङ्गच्छेते । ब्रह्मविदामात्मोपदेशद-
शायान्तत्तादात्म्याभिमानवा'ह्यहम्ममे,त्यादिवचोविभेदैर्व्यवहर-
णस्य स्वरूपानुसन्धानसंपत्त्या श्रुत्यादावनुभूयमानत्वात् । यथा चाम्नायते ।
अग्निरस्मि जन्मना जातवेदाः । अहं रुद्रेभिर्वसुभिश्चरामि । गर्भे नु सन्नन्वेषामहं
देवानां जनिमानि विश्वा । अहं मनुरभवं सूर्यश्च । योऽसावादित्ये पुरुषः सोऽसा-
वहम् । योऽसावसौ पुरुषस्सोहमस्मि । दृशिस्वरूपं गगनोपमं परं सकृद्विभातं
त्वजमेकमक्षरं । अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्त ओमिति ।
दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः पुर-
स्तिरश्चोर्ध्वमधश्च सर्वशः सुपूर्णभूमाऽहमितीव भावये''त्यादिकमृक्सामसंहितादौ ।
एवञ्च 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'त्यादिना परोक्षतया तावत्कथनं
भगवतो महेश्वरात्मसाम्राज्यसत्तासमवगाह्यैव सद्गीतायास्तत्तन्त्रतामादरमरैरधिगमय-
ति । एतदेवाभिप्रेत्य भगवच्चरणैर्भाष्यादौ 'तदुक्तमीश्वरगीताया'मित्यादिपदवि-
शेषैरुन्नीयमानोदाहरणवैसरी हि यथोदाहृतलाटचायनधर्मसूत्रार्थतात्पर्यानुग्राहिणी-
ति गम्येत नूनं यथायोगम् । इत्थञ्च गीता हीयं महेशलीलाप्रसादमभवैव स-
म्मीयते । न तु जातु पाण्डवसङ्ग्रामैककालीनोत्पत्तिमती । किन्तर्हि यथोपदर्शित-
सूत्रादिप्रादुर्भूतितुल्यकक्षाकाऽथ सनातनीति सिद्धम् ।

एतावता निरूपणेन महेश्वरे समारोपितानान्तावद्दूषणानाञ्जीवत्व—वि-
ष्णुदासत्व—तामसत्वादिभेदाभिधानाम्पराकरणपूर्वकं वैष्णवत्वासिद्धिः प्रतिष्ठापित-

१९ गीतायामहम्ममेति वचनानां भगवतो निरुपाधिकब्रह्मस्वरूपानुसन्धानगमकतामात्रपरतैव नतु किञ्चिद्देहावच्छिन्नयादवेन्द्रबोधकतेति कथनम् ।

१० वैष्णवमताना वेदादिवाह्यतासंसिद्धिपुरस्सरं तदभ्युपेततप्ताङ्कनादिपञ्चसंस्काराणां वृथात्वमानाभासविवरणेय त्वव्यवस्थापनोपक्रमः ।

तराऽपि तैरेतैरुपस्थापितदुर्वादतमस्तोमानां नाम पञ्चसंस्कारदुश्चेष्टावेष्टितानामवशिष्टतयाऽत ऊर्ध्वम्प्रकृष्टप्रमाणप्रकाशरश्मिभिरपहारो विधास्यते तथा हि । "तापःपुण्ड्रस्तथा नाम मन्त्रो यागश्च पञ्चमः । अमी परमसंस्काराः परमैकान्त्यहेतव" इत्यादिकं वचनं भारद्वाजीयतयोदाहरद्भिर्दग्धाङ्गैः परिगणिता भवन्ति पञ्चसंस्काराः । तल्लक्षणलक्षिता च वैष्णवदीक्षा पुनस्तैरभिमन्यते । अत्रैवम्पुनश्चिन्त्यते किमिमे श्रौता उत स्मार्ता आहोस्वित्पौराणिका अथवा तान्त्रिका इति । न प्रथमः । तन्निरूपकश्रुतिवचनस्यात्यन्ताभावात् । न द्वितीयः । तथाविधायाः स्मृतेरप्यप्रसिद्धेः । न वा तृतीयः । तन्निर्धारणाधीनवचसः पौराणिकस्येतरेतरविगानविषयत्वात् । नापि चतुर्थः । श्रुत्यादिबाह्यतन्त्राणान्तावदतन्त्रताव्यवहारयोगयोग्यत्वात् । परिशेषादिमे दुराग्रहैकविग्रहा एवोपनमन्ते ते पञ्चसंस्काराः कृत्स्नप्रमाणपदवीबहिर्वासरूपिनत्वेऽपि तद्वत्तादुरावेशकलुषीकृतचेतःप्रचारचित्रितत्वात् । ननु स्मृतेरेतस्या 'मन्वात्रिविष्णुहारीतयाज्ञवल्क्ये'ति स्मृतिकारनामोत्कीर्तनप्रतीतिमत्पराशरस्मृतिगिरा परिगदितहारीतप्रणेतृकत्वे कोन्वत्र विद्वेषो विज्ञापितसंस्कारव्यक्तौ वेदवाग्वल्लीविलासलास्यायामिति । नायन्दोषः । मन्वात्रिमैत्रावरुणियाज्ञवल्क्यगौतमादिभिरप्रतिपादिततत्संस्कारवादित्वादेव स्मृतेरेतदीयायाः । न चेतरेतरानिरूपितविषयविशेषनिरूपकत्वादितरेतरस्य स्मृतिकृतान्तत्र तत्र गम्यमानतया नेदमारोहेद्दूषणसरणाविति वाच्यम् । सत्वेन संवादस्थितेस्तथाविधार्थस्य प्रामाण्याभ्युपगमादत्र तु स्मृतिकारान्तरस्य संवादसामान्याभावोन्मीलनाच्च । यदि स्मृतिप्रवृत्तिमूलीभूतश्रुतेरत्रार्थे कथञ्चिद्धानिर्भरः स्यात्तदा तत्तत्वरहस्यपारदृश्वानः स्मृतिकारास्ते कुत एतन्निजकर्तव्यतया नाभिदध्युः पञ्चसंस्कारान् । मूलीभूतश्रुतेरेवाभावात्तु स्मृतवन्तो नेत्येनान्त एवमित्यनुजानीमहे । यदि त्वेकेन वा हारीतेन स्मृतिकृता समुन्नीताः पुनरेते संस्काराः श्रुतिमूलाः कुतो न स्युरित्याक्षिप्येत तर्हि तदनुवादकस्मृत्यन्तराभावात्क्षेपकविषयास्त एवेति प्रत्याक्षेपाकरणे विनिवारको हेतुः को वा सत्कोटिकः स्यात् । यदि पुनः परिगणितास्त्वेव पदविशेषमहिम्ना स्मृतिषु तासु गम्यन्ते त इति चेदुच्येत तदपि तद्व्याख्यातृमेधातिथिधानञ्जयरामचन्द्राश्वानन्दकुल्लूकभट्टविज्ञानेश्वराश्रमपुरोगमैरात्मनिबन्धेषु पूर्वपूर्वेतरव्याख्यानातिलङ्घि-

व्याख्यानगोचरमज्ञार्कैः कुतस्ते अस्पष्टतराः स्युः । न च भगवदैकान्तिकधर्ममा-
त्रप्रतिपादिनीभिर्भरद्वाजादिस्मृतिगीभिर्गम्यन्त एव संस्कारा इति सन्तोष्ट-
व्यम् । मन्वाद्यनुक्तीतप्रमेयाप्रतिपादनैकशीलत्वाद्भरद्वाजादीनां नाम वेदविदाम् ।
मन्वादिभिर्हि निषेकादिश्मशानान्तान्याह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयानित्यनै-
मित्तिककाम्यकर्मोपासनासम्भाराश्च ब्रह्मतत्त्वम्पुनरन्ते परपुरुषार्थसमर्थनैकबद्धश्रवं
ननु समातिद्रमुक्तीतवद्भिः पुमर्थोपायकात्स्न्यस्य संक्षेपविस्तराभ्याम्प्रसाधिततया
तदनुपदर्शितप्रमेयभेदस्य तु प्रधानभूतस्यानुर्वरिततया च धर्मा ,एव निरूपणीया
इन्तानवशिष्यमाणास्सन्तो भगवदैकान्तिकधर्मनिकरनिरूपणक्रियामूकीभावे ना-
स्मलाभो न परहानिर्वैल्यपाक्षिकविचारचातुरीसया कथमस्मात्प्रमाचेत । कथं वा
तदनभ्युक्तार्थग्राही स्वयम्पुनः प्रसिद्धचेत । न हि तादृग्विचाररमणीयः कथ-
ञ्चिद्वा सदर्थात्प्रमाद्यत्येवंविधेऽर्थे प्रमुह्यति वा । ननु त्रिपुण्ड्रोर्ध्वपुण्ड्रादिकर्तव्यता-
विधानस्य मन्वादिभिरनभ्यर्हितत्वेऽपि तदितरोक्तीतप्रयोगनिबन्धैस्तदवश्यानुष्ठेय-
ताम्बुध्वाऽनुष्ठातारो यथा वा स्वार्थैरुपनिबध्यन्ते तथैवात्रेतिकर्तव्यतासंस्काराणाम-
पीति चेन्नैवम् । दृष्टान्तस्य वैधर्म्यात् । त्रिपुण्ड्रोर्ध्वपुण्ड्रादीनां मन्वादिभिः
कण्ठरवेणानुक्तत्वेऽपि कल्पगृह्यसूत्रादिभिर्यथानियमप्रपात्ततयोक्तसंस्कारसाधर्म्यानु-
पपत्तेः । एवन्तर्हि ततो वैधर्म्यतया वा तदादरः किन्न स्यादिति चेद् गृह्यादिभिर-
प्यनभ्युक्तत्वादिस्युक्तोत्तराभिसन्धेरप्रसर्तव्यत्वात् । न नु च भोः कापिलकणा-
दादिवचोवद्भरद्वाजहारीताद्युक्तीनामुदितसंस्कारगोचराणां तावत्स्वातन्त्र्येण प्रामा-
ण्यं कुतो न स्यादिति चेदत्रोच्यते । भरद्वाजहारीतादीनान्तावच्छ्रौतत्वे कपिल-
कणादादीनान्तु ततो बाह्यत्वे च वैदिकेऽर्थे तद्धर्मानुष्ठानप्रभवप्रकृष्टयोग्यतावतान्नाम
तेषां स्वातन्त्र्यगन्धस्याप्यप्रसक्तेरिति । ननु पुनर्मन्वादिस्मृतिप्रदेशेषु संस्कारा
अमी न परिगणिता इति कथं ज्ञायतामस्माभिरिति चेदित्थम् । तैरुक्तीतसंस्का-
रकदम्बके यथोदितसंस्काराणामत्यन्तानुपलम्भात् । त एते पञ्च संस्काराः
शारीरमात्रमन्वयितया दर्भाद्यैरभिमन्यमाना अप्यनुल्लिखिता एवात्यन्तं स्मृतिषु
मन्वादीनां च यतः । मन्वादिभिरेककण्ठचेन प्रतिपादितास्तु संस्काराः "वैदिकैः
कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह
च ॥ गार्भैर्होमैर्जातकर्मचौडमौञ्जीनिबन्धनैः । बैजिकं गार्भिकं चैनो द्विजानामप-
मृज्यते ॥ स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः । महायज्ञैश्च यज्ञैश्च ब्रा-

ध्रीयं क्रियते तनु,,रित्यादिना विश्रुता भवन्ति । एतद्वचनविवरणायमाननात्रयं हि गौतमस्य भगवतो "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशन-चौडोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञाना-मनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषाञ्चाष्टकाः पार्वणश्राद्धश्रावण्याग्रहायणी चैत्राश्वयुजीति सप्तपाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं निरूढपशुबन्धसौत्रामणीति सप्त हविर्यज्ञसंस्थाः । अग्निष्टोमोऽत्यग्निष्टोम उक्थः-षोडशिवाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमसंस्था इत्येते चत्वारिंशत्संस्कारा" इतीदं स्मृतौ पापठ्यते । सस्मार चैतान्पुनर्भगवतो "गर्भाधानं पुंसवनं सीमन्तो जातकर्म च । नामक्रियानिष्क्रमणेऽन्नाशनं वपनक्रिया । कर्णवेधो व्रतादेशो वे-दारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः । त्रेताग्निसङ्-ग्रहश्चेति संस्काराः षोडश स्मृताः । न वैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रि-याः । विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दश"ति कृष्णद्वैपायनो भगवान्। सर्वेऽप्यमी मन्वादयो"गर्भाधानं प्रथमतस्तृतीये मासि पुंसव. । सीमन्तश्चाष्टमे मा-सि जाते जातक्रिया भवेत् ॥ एकादशेऽह्नि नामार्कस्येक्षामासि चतुर्थके । षष्ठे मास्यन्नमश्नीयाच्चूडाकर्म कुलोचितम् ॥ कृतचूडे च बाले च कर्णवेधो विधीयते। विप्रो गर्भाष्टमे वर्षे क्षत्र एकादशे तथा ॥ द्वादशे वैश्यजातिस्तु व्रतोपनयमर्हति।" त्यादिना गर्भाधानमारभ्य मौञ्जीबन्धनपर्यन्तानाञ्चिल संस्काराणां सन्नियतसमय-विशेषमपि स्मृतवन्तो यथाशास्त्रम् । यदि परं मृषाभाषाणत्स्थानीया न स्युरिमे संस्कारास्तर्हि कर्णवेधाद्यमप्यपरित्यजन्तःकर्म तप्ताङ्कनादीन्कथङ्कारमुञ्झेयुरनुचतुरह्-स्रा अपि महात्मानो महामुनयः । यद्येन इवांशतो वा वेदक्षरैरवगताः स्युः सं-स्कारपदाभिलप्यतया तप्ताङ्कनादयस्तदा वेदविद्ग्रेसरैराम्नानसिद्धमूर्द्धन्यैः पुरुषा-र्थचतुष्टयप्रतिपादिनीष्वात्मस्मृतिषु महर्षिभिर्मन्वादिभिर्निर्वर्णितसंस्कारान्तःपातितया उदाहृताः किन्न स्यु. । न तत्र तदुल्लिखितकथागन्धोऽपीति वेदबाह्या एवातितरा-मवधार्यन्ते तप्ताङ्कनादयः संस्काराभासाः ।

यत्तु सङ्कुचितार्थप्रतिपादकतया मन्वादीनान्तदनिरूपिततप्ताङ्कनादि-भगवद्धर्मप्रतिपादनपरा अपरे आर्षग्रन्थास्ततो विशिष्यन्ते इत्युक्तं तदुरुक्तम् । "यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञा-नमयो हि सः ॥ सर्वन्तु समवेक्ष्येदं निखिलं ज्ञानचक्षुषा । श्रुतिप्रामाण्यतो वि-

द्वान्स्वधर्मे निविशेत वै” इत्याम्यान्तावन्मनोः स्मरणाभ्यामधिकारिकास्त्यैप्र ति विधीयमानधर्मतन्त्रपरातिशयसमर्थनाधीनसार्वज्ञस्य मनोर्महाराजमूर्द्धन्यस्य निर्दिष्टत्वात् । तद्विपर्ययप्रतीतिमत्प्रवृत्तेर्व्यतिरेकमुद्रयाऽन्धतमिरकूपारपतनापत्तिसपक्षत्वाच्च । एतदेवाधिकृत्य “सर्वज्ञतया चोत्सन्नविप्रकीर्णपठ्यमानवेदार्थं सम्यग्ज्ञात्वा लोकहितायोपनिबद्धवानिति” मेधातिथिकुल्लूकभट्टादिव्याख्या तत्र प्रवृत्ता सती शङ्कामभूम्परिहरत्येवातिवेलमित्यलमल्पीयसा किल प्रासङ्गिकविचारेण ।

एवञ्चैवञ्जातीयकानान्तु शङ्कासमाधानानि तराणामनेकानि ग्रन्थप्रतिनिबन्धतात्पर्याधिक्यसमर्थितानां स्थितानां मनूच्छास्त्रशासितप्रवृत्तिप्रयुक्तानाम्युदयाभ्युदययोर्विपत्तिसम्पत्तिसमवाप्तौ च नियततराया निराकरणप्रतिज्ञाविशेषविषयीभूतदर्पणबहिर्भाविनीन्तावच्चिन्तामत्र प्रसङ्गसमायाता समापयाम ऊर्ध्वं प्रतिज्ञानतदाभासचूर्णनमेव वेदवेदाङ्गस्मृत्यादिप्रमाणावलीमहामहिम्नाऽनन्यथासिद्धाशयातिशयप्रतिष्ठापनापरपर्यायेण यथावद्विधास्यामस्तथा हि ।

२१ प्रसङ्गादिह दर्पणतनौ कस्यचिद् भगवद्धर्मदर्पणाद्व यपुस्तविभेदेऽपि सत्कारविमर्दनोपक्रम ।

अथा“थ भगवद्धर्मदीक्षाऽवश्यकत्व न्यायानुगृहीतप्रमाणगणैर्निष्पन्नया निष्कृष्टया सरण्या प्रथमं संक्षेपतो निरूप्यते” इत्यारभ्य “नावैष्णवो मुनेर्मुक्तिं बहुशास्त्रश्रुतोऽपि वेती”त्यन्तो दुरुक्तिद्रुमो भगवद्धर्मदर्पणे घेच्छिद्यते । न हि भगवतो धर्मा स्वस्मिन्नेव पर्यवसन्नास्सन्तो दासेषु कैङ्कर्यक्रियामात्रसमाक्षिप्तकरणनयेषु दीक्षाविषयतामधिगन्तु क्षमन्ते । दासत्वसेव्यत्वादिभेदाभिन्नव्यवस्थायास्तात्विकत्वमभिमन्यमानानां पुनस्सेव्ये हन्त भगवति निरूढास्ते धर्मा धर्मितामात्ममहसा ■ निरूपयेयु कथञ्चिद्वा यत । भवानत्र पृष्टो व्यानष्टाङ्क्रियद्भिर्धर्मैर्धर्मैवानयम्भगवानुपसेव्यते सेवकजनै किमिमे गुणापरपर्याया एवाभिमन्यन्ते धर्मा आहोस्वित्तेभ्यो विभिद्यन्ते इति । यदि हि गुणानामनर्थान्तरतयैवाभि

२२ श्रीभाष्यस्य रामानुजाचार्यदर्पणकृत्प्रतिज्ञायार्थकल्पावदनम् ।

प्रेयन्ते धर्मास्ते तदा “ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधिकातिशयासङ्ख्येयकल्याणगुणगण पुरुषोत्तमोऽभिधीयते” इति श्रीभाष्योक्तया पुरुषोत्तमानर्थान्तरभूते भगवति वासुदेवे यथोदितानामसङ्ख्येयकल्याणगुणगणानाया गृहीतत्वेन समस्तानामपि गुणनामान्तरभूतधर्माणान्तेषामवश्यमेव दीक्षाधरत्वापत्ति परिभाव्या स्यात् ।

यदि पुन कतिपयधर्मदीक्षाधरत्वमेव तद्धर्मानन्त्यप्रयुक्तदौर्लभ्याभिगामितद्धारणव्या-
पारपर्यालोचनया युज्यत इति ब्रूषे तदाऽपि 'भगवद्धर्मदीक्षाऽवश्यकत्वमि'ति स-
ङ्कोचाविषयधर्माभिधायिपदाविभेदप्रयोगस्सङ्कुचितपञ्चसंस्काराभिप्रायकतया कृ-

२३ भगवल्लाञ्छनधारणेनिरूपितयुक्तीनां निरसनम् ।

तोऽत्र व्यवस्थितेतर एवापद्यते । यदपि "स्वामिभृत्यभावस्थले
चावश्यकं दासत्वावगमकं स्वाम्यसाधारणचिन्हधारणन्दासानां
लोके राजभृत्यानान्तत्तद्राजासाधारणचिन्हधारणमिति" दृष्टान्त-
बललभ्याङ्कनकर्तव्यतोच्यते तदपि दृष्टान्तदार्ष्टान्तिकवैषम्योपनीतवैकल्यव्यक्ती-
कारप्रयोजनायैव भवतीत्युपपद्यते । न हि नराधिपे समनुक्लृप्तासाधारणचि-
न्हानि श्वेतच्छत्रचालव्यजनादीनि भृत्यजनैः प्रभ्वादेशनात्मेच्छया वा कुहचि-
द्धार्यन्ते । न वा तानि साहसमात्रेण धारयमाणा न्यक्कारद्वारकप्रशासनैककर्मणः
प्रभुकृतात्प्रमुच्येरन्नवगतौ सत्याम् । ये तु प्रान्ताधिपशतापुरोगमाद्य धिकारवि-
भेदा अवस्थाप्यन्ते शिष्टविशिष्टमानवविशेषेषु न ते नितरान्द्रविणादानप्रकारैक-
निर्देशनात्तल्लक्षणाक्रान्तभृत्यभावानातिरेकितां मन्यन्ते तावन्निजाधिकारिताम् ।
ये च पुनर्निहीनाधिकारिलक्षणदौवारिकादिकाः प्रख्यायन्ते स्वैः स्वैरसाधारणसा-
धकमुखैरनुगतरविकैस्ते च सङ्कीर्तिताधिकारिकच्छानुकच्छामरा अध्यक्षमीक्ष्यन्त
एवेति व्यक्तमेव वैषम्यं दृष्टान्तदार्ष्टान्तिकयोः । न चैते विष्णोर्दासा इति ज्ञानज्ञा-

२४ तप्ताङ्कनविडम्बनावर्णनम् ।

पनादिव्यवहरणाय वेयं विज्ञापितमुद्रा धारिता वरीवर्ति वै-
ष्णवानां नोदेवतान्तरोपासकस्वरूपव्यावर्तनार्थमिति युक्तमनभि-
ज्ञान्व्यामोहयितुम् । चेदेवमप्राप्तमानवव्यामोहनौपयिकप्रकृतिकस्य खल्वङ्कना-
दिचेष्टितस्य वस्तुवृत्ताय फलाय वाऽनभिप्रेयमाणस्यानुभापितव्यावर्तनप्रत्ययोत्कर्ष-
प्रयोजनानुद्दिष्टस्य विडम्बनाप्राग्भारभागित्वे यथोपदर्शितात्ममाहात्म्यस्य विष्णो-
रुपास्तिनामप्रग्रहणमात्रालङ्कारस्य चाकिञ्चित्करतरत्वात् । न चाप्यसौ तप्तमुद्रा ह-
न्त हेतिभिर्विष्णोश्चक्रशङ्खाद्याभिः सम्बध्यते सर्वशा इति भ्रमितव्यम् । क-
लयापि तासामन्यतमायाः सम्बधासम्भवात्कथञ्चिद्वा । न ह्येकैकशश्चक्रादीनां
स्वरूपसत्तासमीक्षयाऽलौकिकाकृतिस्वात्मीभूत्यनिरूपिताविशिष्टवीर्यवत्तायास्तावद्देव-
ताभावसम्भावितायाः पुरोभागे चर्चा वा चक्राङ्कनादेस्सम्बन्धाद्धादरायणीयाद्दति-
शेते । सम्बन्धान्तरस्यात्यन्ताप्रवृत्तेः । क्व वा भगवद्देहदेदीप्यमानास्सुदर्शनाद
यः कार्तवीर्याद्यवतारभावमापन्नाः क्व वा पुनस्तदभिख्यया व्यवह्रियमाणस्तापणे

काकिणिकापुञ्जैर्विक्रीयमाणा एव लोहाकारादिभिस्तप्ताङ्कनासम्भारा यथेदं य-
था खल्वमी शिल्पिभिः परिकल्प्यमाना भित्यादौ व्याघ्रादिप्रहाः । व्याघ्रादयस्त्वह-
न्यहनि मृगयावद्भिरितरैर्वा दर्शनकांक्षिभिस्साक्षात्क्रियमाणतया कुड्यादौ चित्रय-
न्त इति नास्ति किञ्चिच्चित्रम् । विस्मयातिशयभूमयो नाम यथाभूतलोहव्यक्त-
यो निजाङ्गेष्वङ्कनकरणा भवन्त्यो वा भवन्त्येव भित्तिप्रतिमानिरूपकरङ्गलेखनिका-
दिसमानात्मानोऽनादिष्टमसाधनाम्भविष्णवश्चेति तासाम्प्रतिरूपभूतास्त्वग्गतवर्णा-
दिलाञ्छनप्रभेदा इव बाह्वादावङ्कनाऽङ्कनयस्ताभ्योऽपि हीयन्त इति च सर्वेषामनु-
भवविषयोऽयमावेद्यते । इतोऽपि परन्तु देशविशेषोद्देहैकभागो दन्दह्यते बाह्वादेवक्ता-
भिर्लोहव्यक्तिभिर्विनैव व्याधिमसक्तिमात्मघातार्भकापराधाभिधानं च धीपूर्वकमिति ।
शासनश्चोग्रमेवमात्मकस्य कर्मण "स्तप्तमुद्रा परा ये तु योषारूपविधारिणः । नी-
चिकार्येन्नर्तनादेः कारिणो दण्डभागिनः ॥ दण्डा ह्येते कर्मदण्डो धिग्दण्डोऽथ ब-
हिष्कृतिः । दण्डः क्रमेण संयोज्यो नृपैराचार्यपूरुषै"रित्याश्वलायनस्मृत्या विधीय-
मानमधिगम्यते । ननु "दक्षिणे तु भुजे चक्रं वामांसे शङ्खमेव च । गदां च भाल-
मध्ये तु हृदये नन्दकं तथा ॥ मस्तके तु तथा शार्ङ्गमङ्कयेद्विमलं तथा । तापसं-
स्कारमात्रेण परां सिद्धिमवाप्नुयादिति" हारीतस्मरणादङ्कितगात्राणाम्परपुरुषार्थ-
माङ्गल्ययोगित्वे कथमेता उपन्यस्तदण्डादिवाचो वो विद्वेषकलुषास्सम्पद्येरन् ।
नैष दोषः । स्मृत्यन्तरसंवादविधुरहारीतवचनानां क्षेपकतामयुक्तानुपादेयस्वलक्षणा-
प्रामाण्यशङ्काबाहुल्यकवलितत्वादुक्तगत्येति कुतोऽत्र भवत्याशा सिद्धेः पुनः परा-
याः । वस्तुतस्तु अङ्कनमत्र भगवदायुधधीगोचरच्छलिकोक्तिभिर्विभाव्यमानमनङ्कना-
र्हसुदर्शनादिपरिधिमतीतिस्वभावपर्यवेक्षया भगवद्भिन्नव्यक्तिमात्रे कल्पान्तेऽप्यस-
ङ्कततमतया नार्हत्येवात्मलाभं कदाचिद्वा कथञ्चित्कुत्रचिच्च । तानीत्यायुधानि च-
क्रायुधादनन्यगामीन्येव स्वतो व्यावृत्तात्मकत्वात् । जगदपायनिर्हारहेतवे धृतानि
तानि चक्रादीनि तदवस्थानस्थायीन्येव सार्वदिकान्युपपद्यन्ते । तत्पत्नीपुत्रलोका-
दीन्यपि लक्ष्मीमनोभववैकुण्ठादीनि तत्तासमानयोगीन्येव । किञ्च "यदम्बु-
वैष्णवः कायस्ततो विप्रवसुन्धरा । पद्माकारा समुद्भूता पर्वताब्ध्यादिसंयुते" त्य-
म्बुनो विष्णोः शरीरत्वेनाम्बुपरिणामभूतं ब्रह्माण्डमपि विष्णोः कायस्तस्य च वि-
ष्णुरात्मेति सकलश्रुतिगततादात्म्योपदेशोपबृंहणरूपस्य सामानाधिकरण्यस्य 'ज्यो-
तींषिविष्णुरि'त्यारभ्य वक्ष्यमाणस्य शरीरात्मभाव एव निबन्धनम् । "तानि स-

र्वाणि तद्वपु । तत्सर्वं वै हरेस्तनुः । स एव सर्वभूतात्मा प्रधानपुरुषात्मनः । विश्वरूपो यतोऽव्यय इति । तदिदं शरीरात्मभावायत्तं तादात्म्यं सामानाधिकरण्येन व्यपदिशति ज्योतींषि विष्णुरिति । अस्तिनास्तीति शब्दाभिधेयं चिदचिदात्मकं कृत्स्नं जगत्परमस्य परेशस्य परस्य ब्रह्मणो विष्णोः कायत्वेन तदात्मकमित्यादिना श्रीभाष्ये जिज्ञासाऽधिकरणगाभिर्गीर्भिर्विष्णोः स्वाम्युपगमविधाविशेषसन्निधापितस्य ब्रह्माण्डान्तर्वर्तिवस्तुकार्त्स्न्यवपुरात्मन इतरेतरतनुतादात्म्याभिभाषाविभूषितस्यात्मयाथात्म्यपरिचिन्तयाऽलीकाङ्कनावेशविशेषवर्जमानियत्ताकस्वरूपोपास्त्यैव स्वार्थसमर्थनतृप्त्यप्राप्तौ तदात्मभूतसकलार्थसन्निवेशाङ्कनप्रक्रियायाः परिपाल्यत्वापत्तेः । अनभिनिवेशासामर्थ्ये चेद्भवेतान्तत्र तदा विष्णोर्वा भगवत उपास्यस्याप्रणवादाचूडान्तात्प्रत्यङ्गतप्ताङ्कनक्रियाया अभ्यर्हिततया तदङ्कनेनात्मदेहस्य प्रत्यशान्तापयितत्वापत्तेर्युक्ततरत्वे रमाया अप्यङ्कनस्य वामपर्यङ्कपीठाभिरामायास्तद्वदेव युक्ततमत्वप्रसक्तिः । पद्मालयातत्पत्योर्जगतो जननीजनकत्वेनाभिमन्यमानयोर्वीशिष्यप्रजननावयवमुद्रायाः ऊ प्रजापरिरमणवासनाजालसञ्चालनार्हायास्ततोऽप्यतिशयितपुरुषार्थसम्भावनाभावुकतासमादरश्च । यदीदं परिहसोक्तिमयरूत्वेन्मन्यसे वदनं नो नूनं तर्हि त्वदभिमतायास्तप्तमुद्रावातुलक्रियायास्तस्मादप्युत्कृष्टवाङ्मनःकायसङ्क्लेदिप्रचाराधीनप्रहासप्रहारादिदुर्दैवदूषिततया विरामं तस्यास्सर्वेशः श्रेयोवहं मत्वा कुतो न सम्भेदेर्दौरात्म्यमञ्जनेनात्मन ।

२५ पुनरपिश्रीभाष्यवचनोदाहरणे न पुनरेतद्विविडम्बना प्रदर्शनम् ।

नन्व चाङ्कितगात्रा भगवत्करुणापात्रमभूवन्निति मोचनमेतस्मादनुचितमेव । मैवम् । विष्णोः कारुण्यसम्पात्तिसम्पादने तप्ताङ्कनादेरप्रयोजकत्वात् । न हि प्रह्लादगजेन्द्रविभीषणपाञ्चालीध्रुवपुरोगमानामाकस्मिकोग्रतरविपज्जलधिनिमज्जनान्यथावद्ध्यानोदयान्यवहितोत्तरक्षणएवापाद्विमोक्षणसमारम्भसन्नद्धचेताः परमकारुणिको भगवानुमारमारमणाविरूपप्रपत्तिलक्षणोपास्त्यादिमन्महास्मार्तानेव तप्तमुद्रादिलाञ्छनाममात्राकर्णनानुभाव्यजुगुप्सापरामृष्टांश्च नोद्धारयाम्बभूवेत्यधिगम्यते स्वप्रकरणवण्यमानाद्वा वचनात्कस्माच्चित् । नासीदेव काले तस्मिन्नुन्मार्गप्रवृत्तिरेवरूपा यथेष्टचेष्टाकमानवबहुलकालावयव इवार्वाचीने । न ह्येवंविधास्त्वस्थिस्नायुमज्जारुधिरपलचर्मात्मकेदेहादावनात्मभूते निरहङ्कारास्साहङ्का-

२६ पुनरपिरूपान्तरेण तप्ताङ्कनविडम्बना ।

भवप्रसादात्मनामन्तरात्मस्वरूपापत्तिसमावरकप्रकृतान्तरायप्रत्यवायापनोदनमूलीभूतात्मभावानां पुरोभागे नन्वात्मसम्प्रदायातिरेकिसम्प्रदायास्तिताया एवासिद्ध्या तद्विपर्ययप्रनीतिमन्मतापरपर्यायसम्प्रदायकथाया भिदावदानान्तावन्मतिमात्रविलसिताया आम्नायसर्वस्वसर्वतन्त्रराद्धान्तसुदूरपराहतत्वाच्च ।

नन्वेवमपि श्रीभाष्ये तावत्समन्वयाधिकरणे " सदेव सोम्ये " त्यारभ्य " एको ह वै नारायण आसीदि " त्यन्तं सत्तद्ब्रह्मात्मादिशब्दानां परमकारणभूते विष्णावेव समन्वयस्य सम्पादिततया तद्व्याख्यानभूततत्रत्यश्रुतप्रकाशिकानिरूपणमहिम्ना च हरशिवेशानादिशब्दानामपि तत्रैव पर्यवसानं गम्यमानं विष्णोरेव सम्प्रदायं श्रौतत्वेन प्रब्रूते । मैवम् । शब्दशक्तिस्वभावविभेदाधीनबुभुत्साप्रेर्यमाणमतिमतान्दृष्टावन्यथासिद्धतामनपहायानन्यथासिद्धतात्पर्यगोचरताया विवादाध्यासिताया एव सम्प्रतीयमानत्वात् । " विष्णोर्व्यासिकर्मण " इति नैरुक्तोक्त्या दिग्देशाद्यनवच्छिन्ने चिदात्मन्येवानामरूपे रमारमणत्वाद्यशेषधर्मातीते च निरस्तसमस्तप्रपञ्चे विष्णुपदस्यानन्यथासिद्धवृत्तिज्योतिषो बभ्राजमानत्वेन तन्मतव्यूहितदेवताया अशास्त्रीयविधाविशेषवञ्चिताया आत्मनः परमार्थभूतदशाविशालसम्पदेव निराबाधं विराजते व्यपेतसम्प्रदायाद्युपद्रवजाता । न च नारायणोपनिषदि " नारायणपरं ब्रह्म तत्त्वं नारायणः पर " इत्येवंविधवचनानि तु नारायणमेव विष्णोरनन्यवाचकशब्दाभिधेयभूतमैकान्तिकभावेन प्रतिष्ठापयन्तीति वाच्यम् । उपक्रमपरामर्शोपसंहारादीनान्तात्पर्यसमर्पणसमर्थत्वे उपक्रमे तावदुपनिषदो ऽम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानि " ति ऋग्गेपा गम्यमाना " परीत्य लोकान्परीत्य भूतानि परीत्य सर्वाः प्रदिशो दिशश्चे " त्याद्याभिव्यक्तिभिस्सम्पद्गुणमवलम्बमानशालिनीभिरुपाक्यतामुपयन्ती यथोदितदुस्तर्कापरम्परामपहन्ती पुनरपासिकीनाम चित्सत्तां तामुदीरितलक्षणलक्षितामेव प्रोद्बोधयन्ती शरणीकरणीया एव युष्माकं यतः । मध्ये पुनरुपनिषदो " नमो हिरण्यबाहव " इत्यारभ्य " आम्बिकापतय उमापतये पशुपतये नमो नम " इत्यन्तं " यो वेदादौ स्वरः प्रोक्त " इति प्रस्तुत्य " यः परस्स महेश्वर " इति पर्यन्तं " विश्वं भूतं भुवनमिति " प्रक्रम्य " सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो ऽस्तु पुरुषो वै रुद्र " इत्यन्तञ्च मन्त्रजातं महेश्वरमेवैककण्ठयेनाभिदधत्प्र-

१८ श्रीभाष्यश्रुतप्रकाशिकाकाराभ्यां विष्णावेव हरशिवेशानादिशब्दानां कृताया: किल समन्वयादिचेष्टायास्तिरस्कारः ।

तिबध्नात्येव विष्णुतत्त्वं त्वदभिप्रेतम् । या ऽपि गायत्री विष्णोस्तस्यामेवोपनिषदि " नारायणाय विद्महे " इत्येवरूपा " आपो नारा इति प्रोक्ता " इति मनोर्निर्वचनानुगृहीता च साऽपि सोपाधिकमेव जलाधिशायिनं विपक्षायिनं देवतान्तरमदिमानं निवेदयन्ती "तत्पुरुषाय विद्महे । तत्पुरुषस्य विद्म" इत्याम्या सना गायत्र्याम्या वै वैभ्रान्त्यमनुसूत्रयन्ती च तदाशापिशाचीं नाम नाशयत्येवातितरामिति वा वा तत्र प्रत्याशा स्वाम्युपेतनारायणस्य प्रादाधाप्ते । एवञ्च नारायणशब्दस्या साधारण्येन न गरुडध्वजोपाधौ तात्पर्यं अपि तु साधारण्येन परब्रह्ममात्रोपलक्षकत्वमिति प्रवृत्तिन्वारस्यादवधार्यते । "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीम्योमित्येत"दिति कठश्रुति परापरब्रह्मदृष्ट्या ह्युपास्यमानमोङ्कारमेव निरवशेषवेदतपआद्यमङ्गीर्णसाधकनमसम्पादनीयपदानन्यमावेन स्तुवाना तस्यैव शश्वदक्षरतया ब्रह्मतया च पुन परतया निर्देशातिशयं विधत्ते । माण्डूक्ये ताव "दोमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूत भवद्भविष्यदिति सर्वमोङ्कार एव" त्यारभ्य "एकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इत्यन्तया पर वाचा सन्तत्या निरुपाधिकमेव ब्रह्माद्वैतात्मभूतं शिवपदलक्ष्यार्थापरपर्यायञ्च पदन्तावत्तदेव नारायणवासुदेवादिविरूपप्रवृत्तिनिमित्तभूतपदकदम्बागम्य सङ्कीर्त्यते समस्तेतरवेद्यार्थबाधावधिभूतं प्रतिबिम्ब भिद्यमानामिवाधिगम्यमानमपि । वासुदेवहयग्रीवाद्युपनिषत्सु तदादिशब्दोपलब्धिसम्भवेऽपीशादिदशोपनिषत्स्वप्रतीतिरेव तेषामुपमर्दनभावस्याप्यनवगाहिनी ह्यनुवर्तते । इतिहासपुराणादीनामप्येषैव सरणिरपन्नमादिगमकरुत्सर्पत्युदयानुमोदाय प्रतिपत्तॄणाम् । गतिर्हि मन्त्रब्राह्मणयोरुक्ता या पुनरेतस्याः प्रागेवाविदिता साररूपेण । अत्रार्थे प्रश्ननिरूपणयोर्गतिमत्ताऽपि प्रश्नाहितप्राया । एव निश्शङ्केऽपि वस्तुन्यस्मिन्प्रज्ञामात्मन प्रवर्तयता रामानुजेन श्रीमता विहितांश्च तत्र वादार्थान्प्रमङ्गसङ्गत्योपरिष्टान्निपेत्स्याम श्रीभाष्ये सङ्ग्रथितान् । अथात्र प्रकृतमेव दर्पणनिराकरणप्रकरणमनुसरामो यथोदाहृततत्तद्वाक्यनाड्यो वादिना भगवद्धर्मत्वेनाभिमता अप्यभगवद्धर्मा एव तत्त्वतो भवन्तीत्येनावता कृतनिरूपणेन ग्रन्थेन निश्चययोग्य वस्त्ववसीयताम् । वस्तुतस्तु जगज्जननादयस्मरणज्ञानानन्दादयश्च भवन्ति हि भगवतो धर्मा निरूढास्ते च देहाभिमानवशात् द्वयाधारव्यापृतं कल्पान्ते वा भेदादिधीग्राहगृहीतात्मभिरप्राप्या एव भवेयु ।

तेषामेव तु दीक्षाधारणमिच्छमानास्सर्वे सूरयो यथावस्थितोपेयजातमानुपाणाश्चरितार्थाः श्रूयन्ते च स्मर्यन्ते पुनः कुहस्विदालक्ष्यन्ते । ये हि प्रतिपन्तॄणामप्रत्यक्षाद्युपनतास्तेभ्य एव धर्मेभ्यस्स्पृहयन्तोऽलौकिकेभ्यो ज्ञायन्ते विज्ञातारो न तु जातु पामरजनपर्यन्तप्रतीतियोग्यप्रत्यक्षाद्यवगम्यमानवपुरादिविक्रियाविशेषेभ्यो यथाभावितमुद्राद्यपरपर्यायेभ्यः । एवञ्च निर्वर्णितभगवद्धर्मसौरभ्यदूरेभ्यस्तदावश्यकत्वकथायाः का वा प्रत्योशेति स्थितम् । एतेन तत्ताङ्कनादिचेष्टासिद्धये गृहीता हि प्रमाणगणाः प्रमाणाभासा एव सन्तस्तदनुग्राहकन्याया अपि तथाविधा एवोपनमन्ते । तद्विषया च सरणिरुत्सरणिमात्रसम्पादिकेति फलितम् । "सोऽध्वनः पारमाप्नोती"त्याद्युपन्यस्तश्रुतिवद्वाक्यविष्णुपरमादिपदविशेषा ह्युक्तरीत्या त्वपमृदिताशेषविशेषे ब्रह्मण्येवान्वययोग्या न तु तदभिप्रेते विशिष्य विष्णावपाधाविति निरूपित एवार्थस्सर्वतन्त्रसिद्धान्तपरिनिष्पन्नो न प्रस्मर्तव्यः । विष्णोस्त्वस्मिन्निर्वर्णितस्य मुक्तिपदात्मकत्वेन तत्स्वामिता तस्मिन्नुपपद्यते स्वद्व्यूहव्यञ्जिना । न हि विष्णोरेवोपासना स्वातन्त्र्येण मुक्तावुत्कृष्टायां साधनभावायालन्निगमागमनिर्धारिता। अपर्याप्तोपायभावभावितत्वादेव तस्याः । यथा चाम्नायते । "श्रद्धाभक्तिध्यानयोगादवेही" त्युपनिषदि कैवल्यनाम्न्याम् । आम्नानमेत "दश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः । मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः । स्वस्वरूपानुसन्धानं भक्तिरित्यभिधीयते । वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यत,, इत्येवञ्जातीयेभ्यः स्मरणेभ्यो बौधायनयाज्ञवल्क्यदक्षाश्वलायनीयेभ्यः प्रतिष्ठिततरपदार्थनिर्वचनबललभ्यसमुदितश्रद्धादिशब्दार्थान्वितपर्याप्तधर्मावच्छेदेनैव प्रातिस्विकस्वरूपापन्नकृतकृत्यताविशेषोपलक्षितेन मुक्तिङ्किल कैवल्यम्प्रतिपादयद्ग्रन्थान्तरं निराचक्षाणन्न्वाधिगम्यते ।

२८ प्रसङ्गादत्र श्रीभाष्यग्रन्थतात्पर्यसंग्राहकतत्रत्यमङ्गलाचरणश्लोकार्थनिर्वर्हणम्।

ननु श्रीभाष्ये "अखिलभुवनजन्मस्थेमभङ्गादिलीले विनतविविधभूतव्रातरक्षैकदीक्षे श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे भवतु मम परस्मिन्शेमुषीभक्तिरूपे,, ति भाष्यार्थसङ्ग्राहकपद्यमध्य 'चञ्चच्छेमुषीभक्तिरूपे' ति गिरा परं परार्थमधुरिमामात्रप्रसवित्र्या भक्तेरेवोपासनाऽनर्थान्तरभूताया मुक्तिम्प्रति हेतुभावस्य प्रज्ञापितत्वादनुपपन्नोऽयमाम्नायार्थोपन्यास इति चेद्बाढमेवन्तथापि भक्तेः श्रुतितात्पर्यविशेषविषयाया' कर्मज्ञानकाण्डयोरन्तराले वर्त्तमानाया ज्ञानस्वरूपसंसिद्धिहेतुभूतसामग्रीशब्दा-

भान्यितमभावविभावितायाश्चात्मप्रसूतिप्रयुक्तसार्वत्रिकसौमनस्यमाङ्गल्यैकसंसाधिकायाः श्रीभाष्यकृता त्वत्यन्तानिरूपणात् । न हि तस्या ज्ञाता एव मन्तन्निरूपणे भवेत्काश्चित्कृतानादरो विचारणायाम् । भक्तेस्तु तादृग्रूपाया विज्ञायैवाप्रमाणभावं न न्यरूपयत्तामेतामिति चेन्न । अज्ञात्वैव ज्ञात्वा वा तान्दुराग्रहगृहीतहृदयतया तेन न न्यरूपीति निश्चयप्रत्यपनायककारणाभावात् । एवमात्मकता तस्या अप्रामाणिकीति कृत्वैवोपेक्षितान्निरूपणमिति पुनस्साहसमावेशोच्येत यथोक्तमेवाज्ञानादिकन्तस्य तद्विषयदृकुतो नानुमीयेत । अनुमीयमानं वा तदेतत्सदेवेति प्रतिपद्यमाना न भवन्त्येव हि भ्रान्ताः प्रतिपत्तारो महाभागाः । या खल्वेतेन सङ्कीर्तिता श्रीनिवासविषया भक्तिरसा तावद्विष्णोस्सार्वात्मिकी नोपजायते । अवस्तुत्वात् । न ह्येतन्मते रामादिकमवतारभूतमन्तरावस्त्ववतारिणो विष्णोरुपासनान्तां वैदिकीं मन्त्रब्राह्मणादिप्रदेशविशेषसंसिद्धाञ्च कर्तव्यतयाप्रतिपादितां वा कुर्वाणा वा तथैव तां संराधकास्सन्दृश्यन्ते । मन्त्रब्राह्मणयोर्हि विष्णुशिपिविष्टचक्रपाण्यादिभिरेव पदैस्सङ्ग्रथिता दृश्यन्ते मन्त्रविशेषा विष्णोः । ततो बाह्या एव तु ते तन्नामसधर्माणो विशिष्याऽद्रियन्ते भाष्यार्थविद्भिर्वा भाष्यवर्णाः । न ह्येष भाष्यकृ "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति प्रतिज्ञायाऽप्युपदर्शितोपासितप्रकारं भगवता बोधायनेनोपाददे । तस्या अपि तस्यानभिप्रेतत्वात् । तदुन्नीतोपासनायान्तु विष्णोरेतदीयाराधकभाष्यवर्णसमवायघटकतया रामादिवर्णविशेषाणामत्यन्तानुपलम्भात् । यदि चेत्तद्घटिता हि मन्त्राः कर्त्तव्यत्वेनाभ्युपेतोपासनाया अवच्छेदकतां समीयुस्तर्ह्यनवच्छेद्यभूतवस्तुतत्त्वप्रसाधनाय यतमानेन बोधायनेन भगवता कुतस्ते मन्त्रभागा नोदाहृताः स्युस्स्वकल्पादौ । कृत्वैव नोल्लिखिता इत्यादरभरः कथं स्यात्तेषु च तेषु । ननु तापिनीपुरोगमे रामादिमन्त्राणामाम्नाततया तदुपासनन्नो वैदिकमेव सन्नोत्कटुरशङ्काकवलितं भवेदेव कथञ्चिद्वा । नैवम् । तापिन्यादेरनुवर्तनविधानव्यवस्थायास्तत्तोऽपि भगवतस्तत्यातिशयितानुभवविषयतायाः अपरिहार्यत्वापत्तेरनपह्नवार्हत्वात् । तवैव चेत्तस्यापि देवतान्तरोपासनावैमनस्यग्रहगृहीतहृदयता स्यात्तदा देवतान्तराणामादरभरैरुपासनासंस्थानस्य व्यष्ट्या वा समष्ट्या कल्पसूत्रेण धृतन्तेन कथमवकल्पतान्निमकल्पे एवोपासनाप्रस्तावे । इत्थञ्च बोधायनस्याप्यालम्बनमनालम्बनप्रायमेव भक्तिं हन्त

१० इतोपि तद्व्याख्यार्थदुरूहाणाम् मोहनम् ।

व्याचक्षाणस्यास्य फलतीति स्थिते किम्मूलेयं भक्तिरस्येति विचिकित्सायान्निर्मूलैवेत्यापद्यते वक्ष्यमाणविधया वा ।

११ श्रुतप्रकाशिकाव्याख्याया अप्यपाकरणमुच्छायाः ।

यत्तु "अथोपायस्वरूपं वदति शेमुषीत्ययं सामान्यशब्दो भक्तिरूपेति विशेषशब्द,, इत्युक्तं श्रुतप्रकाशिकायां सुदर्शनसूरिणा तत्तु शेमुषीभक्तिपदयोश्चतुष्टय्या शब्दप्रवृत्त्या समानप्रवृत्तिनिमित्तकत्वे सति सहप्रयोगानर्हत्वलक्षणपर्यायत्वाभावे विशेष्यविशेषणभावापन्नप्रत्ययच्छायाया एवासम्पत्तावितरेतरविशेष्यभावस्यापि सुतरामयोगे अनुशासनाद्वा "बुद्धिर्मनीषा धिषणा धीः प्रज्ञाशेमुषी मति,, रित्यादे "भक्तिर्भावोऽनुरागश्च सेवाचे"त्यादेश्चेतरेतरविरुद्धार्थप्रत्यायकनामावलीसमुपबृंहिताद्वृत्तिमन्मनसः "कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एवे,, तिश्रुतिसिद्धकामादिवृत्तीनामन्योन्यविलक्षणस्वरूपविशेषशालिनीनामन्यतमात्मतामापाद्यैव कुर्वद्रूपताम्भजमानायाः खलु भक्तिनामकवृत्तेर्वृत्तिमता पुनर्मनसा भेदाभावमनङ्गीकुर्वाणयोर्भाष्यव्याख्याकृतोरनुपपन्नमेव । योऽपि तयोः पदयोस्सामान्यविशेषभाव उपदर्शितस्सोऽप्यत्रासङ्गत एव । यत्र ययोश्शब्दयोरनन्यार्थप्रत्यायनप्रयुक्तप्रवृत्तिमतोः श्रवणमनन्तरसमये यावद्यावद्धर्मावच्छिन्नाभिधेयगोचरप्रतीतिवैरूप्यमुपजायते व्युत्पित्सूनान्तत्रैव तयोस्सामान्यविशेषभावावगमो व्युत्पत्तिसिद्धः । प्रकृते तु शेमुषीभक्तिवचसोः परस्पराकाङ्क्षानपेक्षयोः प्रधानोपसर्जनभावानवगाहिनोः प्रयोगविषयसहभावाभाववतोश्चासमानविषयविषययोर्गोमहिष्योरिव सामान्यविशेषभावप्रसक्तेरेवासम्भवात् । यदप्युक्त "यथापि छागो वा मन्त्रवर्णादिति न्यायोऽभिप्रेत,, इति तदप्युपक्रमे, 'पशुना यजेते' ति सान्दिग्धार्थं वाक्यं 'छागस्य वपाया मेदम' इत्यादि वाक्यशेषान्निश्चीयमानच्छागाभिन्नपशुकरणकोऽयं याग इति निर्णयविशेषविषयकस्तु [illegible] तच्छागाभिन्नम्पशुमेव स्वप्रवृत्तिनिमित्तभूतमभिधत्ते इह तु भक्तिश्शेमुषीव्याप्यधर्मावच्छिन्नैव स्वसजातीयकामसङ्कल्पादावतिप्रसक्तिपरिप्राप्त्यापत्त्या न भवतीति व्याप्यव्यापकभावावगाहिधर्मानवच्छिन्नयोस्तयोस्सामान्यविशेषभावस्सुतरामेव न प्राप्नोतीति च विषमोपन्यासकृतदूषणेन पराहण्यते तराम् । यदप्येतदुक्तं "शेमुषीशब्दोपादानेन ज्ञानकर्मसमुच्चयमतव्यावृत्तिः । भक्तिरूपेति वाक्यार्थज्ञानव्यावृत्ति,, रिति तदपि मूलाभावादभावो वन्ध्याया इव दौहित्रस्मृतिरिति न्यायमासेवमानं सत्स-

मुच्चयमतानुवर्तनायैवाजानान व्यावर्तनादिकन्तस्य कथङ्कारञ्जानीयादित्युपहास-पदञ्जानीमः । वस्तुतस्तु शेमुष्यास्सदसत्साधारणविषयविशेषविषयिण्या हि विनिगमनायान्तुर्विषयगोचरतापत्तेर्दुष्परिहरतया सङ्कीर्णव्युत्पादनानिबद्धायास्तस्या असङ्कीर्णसत्तावत्साधनसाध्यमहिमावाप्तियोग्यतावत्त्व न स्यादेवेति समुच्चयत्रद्व्यावृत्तिमभेयसाक्षात्कारैकप्रसवा द्विष्याच्च सा सार्वत्रिकीम् । सन्ततोपचारचिन्तितचार्ववसानसम्पादनानुकूलस्वान्तःप्रचारलक्षणाया किल भक्तेर्निरूढवाक्यार्थधीजननतदवनाव्यतीहारप्रक्रियौपयिकसामग्रीगृहीताया "सा च कैवल्यमुक्तिज्ञानमात्रेणोक्ता न कर्मसाङ्ख्ययोगोपासनादिभिरित्युपनिषदिति,, मुक्तिकावाक्यकृतनिषिद्धार्थकोटिकायाश्च अखण्डार्थज्ञानममूनाम्भिनत्राचरणकमलिनीमरन्दमाधुरीमुपसेवमानायास्तद्व्यावृत्तिम्पूत्यप्रयोजकतमत्वे "शुद्धभाव गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् । भक्त्या त्वनन्यया । ज्ञातु द्रष्टुञ्च तत्वेन प्रवेष्टुमि,, त्युदाहृतवाक्यनिकरादपि ततोऽविपर्ययप्रतीतिमात्रदेव सिद्धवदनुभाव्यते । वाचाममूपा भक्तिप्राधान्यार्थकथनं ज्ञाने वैमनस्यप्रोद्धारप्रवर्तनापरा यत्तञ्चोद्भित्वा मुक्तिकावाक्यानुकूलङ्किमपि नाकरोदित्यत्र दैवमेव तयोरननुकूलमित्यलं कौशलेन भक्तिव्याख्यायाः ।

अथ यदुक्त "भक्तेरेव स्वादुतमतया प्रार्थनीयता प्रतिबन्धकपापरहितस्य शान्तपित्तस्य हि क्षीरे स्वादुतमताबुद्धिरि" त्यादिकन्तत्परिहर्तव्यम् । अशास्त्रीयत्वात् । नह्येतदुद्घुष्यमाणा भक्तिर्भवत्येव भक्तिपदार्थः । तदर्थस्तूपरिष्टान्निरूपयिष्यते । इह त्विदन्निर्णीयते "न कञ्चनावमन्येत । ये च निन्दन्ति मा मूढा शङ्कर वा नराधमा । कुशालै कृतशास्त्राणि पठित्वा ये नराधमा" इत्यादिविष्णुगौतमादिस्मृतिगर्हितविष्णूपासनाया शम्भोराराधनवैमुख्यद्रोहनैश्वानरताण्डवाडम्बरानन्दितात्मभि क्रियमाणाया अप्यकृतचरत्वादप्रयोजनप्रयुक्तत्वात्तदप्रसादननिदानदौर्गत्यपात्रत्वाच्च । यथा चाम्नायते "अन्तरिच्छन्ति त जने रुद्रं परो मनीषया गृह्णन्ति जिह्वया ससमिति" । अस्यायमर्थः । जनेष्वन्तर्यामिरूपेण विराजन्त पर परं निरतिशययोग्यतावन्त रुद्रं परमेश्वर महादेवं ये मनीषयेच्छन्ति अकृत्रिममनोवृत्त्या ध्यायन्ति ते सस सस्यविकारात्मकमन्न जिह्वया गृह्णन्तीति ये पुनर्दुर्मेधसो मनसा त नेच्छन्ति जिह्वया पुरीषमेव ते गृह्णन्तीति व्यतिरेकमुद्रया लक्ष्यार्थोऽवगम्यते । "अन्तरिच्छन्ति ये रुद्र सदा वन्द्य मनीषया । गृह्णन्ति जिह्वया ते हि रसपूर्णामृतोदकम् ॥ अन्तर्नेच्छन्ति ये रुद्र भवानीसहितं शिवम् । पुरीषमेव

गृह्णन्ति जिह्वया ते न संशय" इत्युपबृंहितोऽयं मन्त्रो भगवता पराशरेण। महाभारते तु "धिक्तेषां धिक्तेषां धिक्तेषां जन्म धिगथ धिक्तेषां येषां न वसति हृदये कुमतिपथविमोक्षको रुद्र,, इति। उक्तञ्च व्यक्तं भागवतकौर्मादौ "कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने। छिन्द्यात्प्रसह्यरुशतीमसतीं प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्सधर्मः॥कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै। दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः। यस्सर्वभूतविनुतं विश्वेशं तु विनिन्दति। न तस्य निष्कृतिश्शक्या कर्तुं वर्षशतैरपि॥ शिवनिन्दापरं पूर्वं यदि शासितुमक्षमः। स्वकर्णौ तौ दयेत्तौ श्ररिति शास्त्रस्य निश्चय,, इत्यादि। एवञ्चैवंरूपदोषाच्छ्रवणमस्येत्र स्वादुतैव दूरङ्गतेति तन्मताकथायाः को वाऽवकाशः। प्रार्थनम्पुनरेतस्याः किं फलजननम्। भक्त्या चैवंरूपया "एवमुक्त्वा तु विप्रर्षिश्शशापेश्वर विद्विषः। समागतान्ब्राह्मणांश्च दक्षसाहाय्यकारिणः॥ यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः। विनिन्दितो महादेवः शङ्करो लोकवन्दितः॥ भविष्यध्वं त्रयीबाह्यास्सर्वेपीश्वरविद्विषः। निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः॥ मिथ्याधीतसमाचारास्सदामिथ्याभिमानिनः। प्राप्य घोरं कलियुगं कलहैः परिपीडिताः॥ त्यक्त्वा तपोबलं कृत्स्नं गच्छध्वं नरकान्पुनः। भविष्यति हृषीकेशश्चाश्रितोऽपि पराङ्मुखः॥ पुरुषोत्तममाश्रित्य शिवनिन्दापरा द्विजाः। कलौ युगे भविष्यन्ति त्राता तेषां न माधव,, इत्यादिकौर्मसौरादिवचोराशिभिः शापजन्मसम्प्रयुक्तशिवद्वेषादिवेदमार्गकुत्सनाचारशालिनामामाधवकृपापात्रतैवावधारिता भवत्यस्य्युचः। ननु च घोरादेहावमानसमयमस्माभिर्गाह्यमानो भक्तवत्सलोऽपि सँश्च भगवान्स्यान्नः कथं न त्रातेति चेत्पाद्मा कथं वस्त्रातेति विन्त्यध्वम्। भक्तेर्योप्याकीनाया अभक्तिसमानाकारत्वादित्युत्तरोत्तरत्वादत्र पुनस्तदर्थपरिशुद्धये श्रीभाष्ये "ध्यानञ्च तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवा स्मृतिः। ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा। भवति च स्मृतेर्भावना प्रकर्षाद्दर्शनरूपता। दर्शनरूपता च प्रत्यक्षतापत्तिः। अतस्साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परमात्मना वरणीयो भवतीति तेनैव लभ्यते परमात्मेत्युक्तं भवति एवं रूपा ध्रुवानुस्मृतिरेव भक्ति-

१२ श्रीभाष्येऽ तस्य हि ध्यानपदार्थनिर्वचनस्य श्रुत्यादिविरुद्धप्रमाणवाधतया निरासप्रकार:।

मुच्चयमतानुवर्तनाद्येवाजानानं व्यावर्तनादिकन्तस्य कथङ्कारञ्जानीयादित्युपहास-पदञ्जानीमः । वस्तुतस्तु शेमुष्याम्सदसत्साधारणविषयविशेषविषयिण्या हि वि-निगमनायान्दुर्विषयगोचरतापत्तेर्दुष्परिहरतया सङ्कीर्णव्युत्पादनानिरुद्धायामस्या असङ्कीर्णसत्तावत्साधनसाध्यमहिमावाप्तियोग्यताकत्वं न स्यादेवेति समुच्चयवा-दव्याकृत्तिमिमेयसाक्षात्कारैकप्रसवां द्विष्याच्च सा सार्वदिकीम् । सन्ततोपचारवि-श्रितचार्वेवसानसम्पादनानुकूलस्वान्तःप्रचारलक्षणाया. किल भक्तेर्निरूढवाक्यार्थ-धीजननतद्वनाव्यतीहारप्रक्रियौपयिकसामग्रीगृहीतायाः "सा च कैवल्यमुक्तिर्ज्ञान-मात्रेणोक्ता न कर्मसाङ्ख्ययोगोपासनादिभिरित्युपनिषदिति,, मुक्तिकावाक्यकृत-निषिद्धार्थकोटिकायाश्च अखण्डार्थज्ञानप्रसूनाम्बिकाचरणकमलिनीमरन्दमाधुरीमुपसेव-मानायास्तद्व्यावृत्तिम्पूत्यप्रयोजकतमत्वे "शुद्धभावं गतो भक्त्या शास्त्राद्वेत्ति जनार्दन-म् । भक्त्या त्वनन्यया । ज्ञातुं द्रष्टुञ्च तत्त्वेन प्रवेष्टुमि,, त्युदाहृतवाक्यनिकरादपि ततोऽविपर्ययप्रतीतिमात्रकदेव सिद्धवदनुमाव्यते । वाचाममूषा भक्तिप्राधान्यार्थकथनं ज्ञाने वैमनस्यमोद्धारप्रवर्तनापरायत्तञ्चोज्झित्वा मुक्तिकावाक्यानुकूलङ्किमपि ना-करोदित्यत्र दैवमेव तयोरननुकूलमित्यलं कौशलेन भक्तिव्याख्यायाः ।

अथ यदुक्तं "भक्तेरेव स्वादुतमतया प्रार्थनीयता प्रतिबन्धकपापरहितस्य ह्यान्तपि-त्तस्य हि क्षीरे स्वादुतमताबुद्धिरि" त्यादिकन्तत्परिहर्तव्यम् । अशास्त्रीयत्वात् । न ह्येतदुद्घुष्यमाणा भक्तिर्भवत्येव भक्तिपदार्थः । तदर्थस्तूपरिष्टान्निरूपयिष्यते । इह त्विदन्निर्णीयते "न कञ्चनावमन्येत । ये च निन्दन्ति मा मूढाः शङ्करं वा नरा-धमाः । कुशास्त्रैः कुशास्त्राणि पठित्वा ये नराधमा" इत्यादिविष्णुगौतमादिस्मृति-गर्हितविष्णूपासनायाः शम्भोराराधनवैमुख्यद्रोहवैश्वानरताण्डवाडम्बरानन्दितात्म-भि क्रियमाणाया अप्यकृतवरत्वादप्रयोजनप्रयुक्तत्वात्तदप्रसादननिदानदौर्गत्यपा-प्तत्वाच्च । यथा चाम्नायते "अन्तरिच्छन्ति तं जने रुद्रं परो मनीषया गृह्णन्ति जिह्वया ससमिति" । अस्यायमर्थः । जनेष्वन्तर्यामिरूपेण विराजन्तं परः परं निरतिशययोग्यतावन्तं रुद्रं परमेश्वरं महादेवं ये मनीषयेच्छन्ति अकृत्रिममनोवृत्त्या ध्यायन्ति ते ससं सस्यविकारात्मकमन्नं जिह्वया गृह्णन्तीति ये पुनर्दुर्मेधसो मनसा तं नेच्छन्ति जिह्वया पुरीषमेव ते गृह्णन्तीति व्यतिरेकमुद्रया लक्ष्यार्थो-ऽवगम्यते । "अन्तरिच्छन्ति ये रुद्रं सदा सन्तं मनीषया । गृह्णन्ति जिह्वया ते हि रसपूर्णामृतोदकम् ॥ अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं शिवम् । पुरीषमेव

गृह्णन्ति जिह्वया ते न संशय" इत्युपबृंहितोऽयं मन्त्रो भगवता पराशरेण। महाभारते तु "धिक्तेषां धिक्तेषां धिक्तेषां जन्म धिगथ धिक्तेषां येषां न वसति हृदये कुमतिपथविमोक्षको रुद्र,, इति। उक्तञ्च व्यक्तं भागवतकौमुदौ "कर्णौ पिधाय निरियाद्यदकल्प ईशे धर्मावितर्यसृणिभिर्नृभिरस्यमाने। छिन्द्यात्प्रसह्यरुशतीमसतां प्रभुश्चेज्जिह्वामसूनपि ततो विसृजेत्स्वधर्मः॥ कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै। दधीचिशापनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः। यस्सर्वभूतविनुतं विश्वेशं तु विनिन्दति। न तस्य निष्कृतिश्शक्या कर्तुं वर्षशतैरपि॥ शिवनिन्दापरं मूर्खं यदि शासितुमक्षमः। स्वकर्णौ तोदयेत्तोत्रैरिति शास्त्रस्य निश्चय,, इत्यादि। एवञ्चैवंरूपदोषाच्छन्नभक्तेरत्र स्वादुतैव दूरङ्गतेति तत्तमताकथायाः को वाऽवकाशः। प्रार्थनम्पुनरेतस्याः किं फलजननम्। भक्त्या चैवंरूपया "एवमुक्ता तु विप्रर्षिश्शशापेश्वर विद्विषः। समागतान्ब्राह्मणांश्च दक्षसाहाय्यकारिण॥ यस्माद्बहिष्कृता वेदा भवद्भिः परमेश्वरः। विनिन्दितो महादेवः शङ्करो लोकवन्दितः॥ भविष्यध्वं त्रयीबाह्यास्सर्वेपीश्वरविद्विषः। निन्दन्तो ह्यैश्वरं मार्गं कुशास्त्रासक्तमानसाः॥ मिथ्याधीतसमाचारास्सदा मिथ्याभिमानिनः। प्राप्य घोरं कलियुगं कलहैः परिपीडिताः॥ त्यक्त्वा तपोवनं कृत्स्नं गच्छध्वं नरकान्पुनः। भविष्यति हृषीकेशश्चाश्रितोऽपि पराङ्मुखः॥ पुरुषोत्तममाश्रित्य शिवनिन्दापरा द्विजाः। कलौ युगे भविष्यन्ति त्राता तेषां न माधव,, इत्यादिकैर्मैत्रीरादिवचोराशिभिः शापजन्मसम्प्रयुक्तशिवद्वेषादिवेदबाह्यकुत्सिताचारशालिनाममाधवकृपापात्रतैवावधारिता भवत्यत्युच्चैः। ननु च मोरादेहावसानसमयमस्माभिरुपास्यमानो भक्तवत्सलोऽपि सेश्वः भगवान्स्यात्रः कथं न त्रातेति चेत्स्याद्वा कथं वत्रातेति चिन्तयध्वम्। भक्तेर्यौष्माकीनाया असितिरसम्पत्तरूपत्वादित्युक्तोत्तरत्वादत्र पुनस्तद्दर्शपरिशुद्धये श्रीभाष्ये "ध्यानञ्च

३२ श्रीभाष्येक्तस्य हि ध्यानपदार्थनिर्वचनस्य श्रुत्यादिनिरुद्धप्रमाणबाध्यतया नितरामनन्यकाराः।

तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवा स्मृतिः। ध्रुवायाः स्मृतेरपवर्गोपायत्वश्रवणात्। सा च स्मृतिर्दर्शनसमानाकारा। भवति ॥ स्मृतेर्भावना प्रकर्षाद्दर्शनरूपता। दर्शनरूपता च प्रत्यक्षतापत्तिः। अतस्साक्षात्काररूपा स्मृतिः स्मर्यमाणात्यर्थप्रियत्वेन स्वयमप्यत्यर्थप्रिया यस्य स एव परमात्मना वरणीयो भवतीति तेनैव लभ्यते परमात्मेत्युक्तं भवति एवं रूपा ध्रुवानुस्मृतिरेव भक्ति-

शब्देनाभिधीयते । उपासनपर्यायत्वाद्भक्तिशब्दस्ये,, त्येवंविधा वाचो जिज्ञासाधिकरणगा उदाहृत्य प्रत्याख्यायन्ते तथा हि । यद्यप्यत्र ध्यानस्य तैलधारागतधर्मौपम्यमुपादाय स्मृतिसन्तानरूपता सिद्धवत्कृत्योपवर्णिता तथापि निरुक्तिरेषा स्वच्छन्दप्रवृत्तिप्रयुक्तैवापद्यते । निर्वचनविषयीभूतध्यानपदस्यैवात्राप्रकृतत्वात् । तुष्यतु नयेनाभ्युपेतस्य वा तस्यासङ्गततरतैव । "तत्र प्रत्ययैकतानता ध्यानमि,, त्येवामूत्रयत्पतञ्जलिर्भगवान् । तच्च ध्यानं विजातीयप्रत्ययप्रवाहानन्तरितसजातीयप्रत्ययप्रवाहानुवृत्तिरूपमेव । तस्य चात्यन्तिकसाधनभूतसमाधिना "वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि । एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यत,, इति दक्षस्मृत्या सिद्धान्तितब्रह्मात्मैकत्वप्रतिपत्तिप्रयोजकेनान्यथासिद्धत्वप्रायिकत्वात्समाधेः प्रतिनाक्षात्कारणतायाः नियतत्वेऽप्यपवर्गंप्रति तदसिध्या तदात्मिकायाः स्मृतेरपवर्गोपायत्वकीर्तनमयुक्तमेव । विवृतश्चेदं सूत्रं "तस्मिन्देशे ध्येयालम्बनस्य प्रत्ययस्य एकतानता सदृशः प्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानमि,, तिभगवता वेदव्यासेन । नेह कश्चित्स्मृतिसन्तानादिशब्दबन्धो दृश्यते सारस्येन । नापि गम्यविधानविधया शाब्दार्थप्रकृतिक्रिया । न वा पुनर्भङ्ग्यन्तरेण सूत्रभाष्याक्षरयोरभ्यर्हितभावोपगूहनेन । किन्तर्हि तदुभयाक्षरसिद्धार्थतिरस्कार्यएवायमर्थो ध्यानश्चेत्यादिपदावगाहितोऽवगम्यते । अर्थे पुनरस्मद्वर्णिते तु"तद्रूपं प्रत्ययैकाग्रसन्ततिश्चान्यनि स्पृहा । तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पद्यते नृपेत्य,, नुसहायीभूतं वचनं विष्णुपुराणस्थमितराणि चैतज्जातीयकानि सहस्रश उपलभ्यन्ते । एवं ध्यानानन्तरसाध्यसमाधिसूत्रं ननु "तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिरि,, तीदं व्याख्यायाऽथ "तस्य भूमिषु विनियोग,, इत्युत्तरसूत्रं विवरीतुकामेन पुनर्भगवता " तस्य संयमस्य जितभूमेर्या अनन्तरा भूमिस्तत्र विनियोगः । न ह्यजिताधरभूमिरनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते । तदभावाच्च कुतस्तस्य प्रज्ञालोक,, इत्यभाषि । तमेतमर्थं प्रमाणयता "योगेन योगो ज्ञातव्यो योगो योगात्प्रवर्तते । योऽप्रमत्तस्तु योगेन स योगे रमते चिरमि,, त्युदाहारि कारिका च हैरण्यगर्भी । एतेन ध्यानभूमिकामिव तदनन्तरभूमिं हि समाधिनाम्नीमधिरुह्यैव कृतकृत्यतां समीयुषो योगिव्याप्तस्य कथन्तत्र साहसिकतया चरमभूमेस्समाधेरुपदेन समुज्झनं कथं वा चारितार्थ्यममिमन्येतात्मनो ध्यानादेवापरिपूर्तिकर्संस्थानात् । विलङ्घनसाहसे तु कृतपदे एव न भवेनामिति समाधिभूमिरुपसेव्यत

एव योगिवर्येण । तथा च "तैलधारावदविच्छिन्नस्मृतिसन्तानरूपा ध्रुवास्मृतिः,,
समाधिभूमिमारुरुक्षूणां जन्मादेव स्वात्मावस्थामित्युपावृत्तन्यायेन कतिचित्क्षणान्
भ्युपगम्यमानाऽपि निरुक्तिस्मा निर्गौत्सुक्यनिर्वर्तनमात्रैवेत्यापद्यते । सुखादिज्ञान-
निहतत्वात् । न चास्य योगसाधनक्रमाभ्युपगम पातञ्जलानामनिष्ट एव श्रीवै-
ष्णवानां नो विरूपाणामिति युक्तमुद्वर्तनं हन्त ग्राहयितुम् । शास्त्रमात्रस्यैव
तित्यागयिपितत्वापत्तेस्तर्हि सुस्थले "तिरुवायुरु,, संज्ञकद्राविडप्रबन्धमनीतरादितं-
रेव नित्यनैमित्तिकादिक्रियाकलापस्य मोक्षालयितव्यत्वविपत्तेर्भोक्तव्यत्वात् । इत्थ
ञ्च स्मृतेरन्यदेव ध्यानमिति पर्यवसितोऽर्थो रुचिरोऽपि सन्न रोचते चेतुम्यन्त
हि तयोरैकार्थ्यावगाहिनिगमनिरुक्तव्याकरणादिनिरूढप्रमाणवचनोपन्यसन विघस्त्व-
निर्वैरम् । तदेतदप्रदर्शितमेवेति प्रदर्शनमत ऊर्ध्वं वा कुतस्त्वयाकृताम्पदं नीयेत ।
न हि स्मृतेर्भावनाप्रकर्षाद्दर्शनरूपता । स्वरूपा स्मृतिरूपतैव । साहजिकत्वात् ।
स्मृतावावर्त्यमानायां संस्कारदृढिमैवानुभविक न तु जातु दर्शनरूपता । तस्या
स्तु साक्षात्कारलक्षणानुभवमानस्वरूपत्वात् । न ह्यनुपासनप्रकरणगतो 'विदि
रुपासन' पर्यायतां लभते । न वा पुनरुपास्तिस्तत्पर्यायमात्रम् । पदानामसङ्कीर्ण
प्रवृत्तिनिमित्तव्यवस्थाविधानस्य व्याकोपात् । अत एव "मनो ब्रह्मेत्युपासीत । भाति
च तपति चे" त्यादिवाक्यगतयोस्तयोरितरेतरविभिन्नार्थकताया भिन्नवदाय तुभ्यम
तितरामेवारुच्यापादनपात्रत्वे निरूपितरीत्या उपासनस्मृत्योर्दर्शननिर्वचनयोश्चाप्रा
माण्यज्ञानानाम्कदितत्वान्नाश्रित्यात् । इत्थञ्च वेदनोपासनस्मृतीनाम्परस्परस्पार्थ
गर्भ्यमेवेत्यनवद्यम् ।

यत्तूक्तं दर्शनरूपता च प्रत्यक्षतापत्ति"रिति अनुपपन्नत्वात् । पराक्राम्य
गिसंख्याममानाकारत्वेन तदनापत्तेरेवार्थसिद्धत्वात् । न चैतदर्थसंसिद्धौ " विज्ञा-
य प्रज्ञां कुर्वीत । अनुविद्य विजानाति । ओमित्येवात्मानं ध्यायत " । विना-
यतत्स्मृतयमुल्लारमुच्यते । आत्मानमेव लोकमुपासीत । आत्मा वाऽरे द्रष्टव्यः
श्रोतव्यो मन्तव्यो निदिध्यासितव्यस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्य" इत्याद्या-
नामुदाहृततया प्रामाणिकत्वेनास्माभिरङ्गमित्याशङ्कितव्यम् । श्रुतीनाममूषां त
निरूपणानुग्राहकत्वात् । श्रुत्योरादिमयोर्निर्दिश्यमानप्राचीनाग्रडाविज्ञानश्चि
निमन्त्र्यप्रज्ञा तृतीयायाः प्राणायामस्यात्मविषयध्यानप्रत्ययप्रयोजनता च
चरस्या पुन प्रत्यगर्थगोचरगगुरागोपदिष्टनतिमता चतुर्थ्यां दर्शनरूपता-

क्षात्करणसमानकालीनससन्ताना विद्यालक्षणमृत्युसञ्चारसमाचारसामान्यपरिमुक्तता अनितमायास्त्वेवात्मानुभवविभूत्युत्कर्षो दैरयकेतिकर्तव्यताविघटनानुकूलावरकार्यपरावेशमोपेण प्रत्युत्तरोत्तरमुत्तममहिमानुभवभूमिश्रवणमनननिदिध्यासनानन्तात्तद्विषयच्छायासमुन्नीतसाधकतमानाञ्च गतिमत्ता चेत्येष एवौपासिकोऽर्थो वेदार्थो न तु सोऽयं केवलपासिकलक्ष्मीकान्तिसमाराधनप्रसाधनानुरूपो महेशादिमाहात्म्यरोकारमणज्योत्स्नाप्रच्छादकत्वादिः कदाचिद्वा कथञ्चित् । न हि "नायमात्मा प्रवचनेन लभ्य" इतिश्रुतिः प्रत्यक्षतापत्तापवर्गसाधनभूतोऽस्त्येव । अन्या प्रवचनादिसाधनपरम्परासमासादनप्रयाससहभाविपरमात्माऽभिमुखीकरणकरणप्रयकियाऽभिप्राणनप्रयुक्तप्रकृष्टोद्यमनपरताया एव क्लृप्ते किन्तु सर्वस्मिन्ननुगताधिरोहरूपायाः परं वास्तवत्वात् । न चैषा श्रुतिः केवलश्रवणमनननिदिध्यासनानामात्मप्राप्त्यनुपायत्वसङ्कीर्तनगोचरा उपपद्यते । स्वातन्त्र्येण श्रवणादीनामुद्योतनाय प्रवृत्तप्रकरणाभावत्वादेवास्याः ।

प्रसङ्गादस्य निष्पृहार्थव्यक्तीकारः।

वस्तुतस्तु श्रवणादित्रितये निर्विषयोऽप्यात्मैव विषयतामभिपद्यत इति परप्रेमास्पदता हि तस्मिन्मुमुक्षूणामनुक्षणमनुवर्तत एव । निर्विशेषादात्मन एतस्मात्तदर्वाचीनस्वरूपापन्नविष्णोर्मन्वदुपमनानिषयस्य भिदावादप्रोणिनस्त्याप्रसक्तप्रसक्तिकतया न तद्गुणगानाभावो वेदान्तेषु दोषाय प्रभवेदिति विरमन्ति तावत्तद्विषयाद्धि दुराग्रहग्रहसम्बन्धात्सुविचारकाः । मुमुक्षव एव सन्तः श्रवणादिप्रवृत्तिमन्तस्त एतेऽवच्छेदकविच्छेदेन तद्विषयपरमात्मनः प्रियाः प्रियतराः प्रियतमाश्च सम्पद्येयुरित्यप्रत्यूहम् । अन्यथा प्रवृत्तिरेव श्रवणादौ नोदीयात् । तत्र हि यथाशास्त्रप्रवृत्तिमन्तः कृत्स्ना एव परमात्मनि प्रीतिमन्तो मन्तव्याः । यथा चाह "ईश्वरानुग्रहादेव पुंसामद्वैतवासना । शिवप्रसादलभ्यते योगसिद्धिश्च शाश्वती"मिति स्मृतिकाराः । न च "तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगन्तं येन मामुपयान्ति ते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय" इत्येते भगवत उक्ती तदभिमतप्रसाधनपरे । 'सततयुक्तानामिति'पदमनिपाद्यानुदात्तप्रयुज्यमानप्रात्मैकलक्षणममाविमनामेव तदात्मकभजनभाजामभिण्डार्थप्रतिपत्तिप्रदानसामर्थ्यमन्तराऽऽत्मानवच्छिन्नसत्तापरायत्तमिति तादृशसमाधिमाहात्म्यप्रज्वलिताद्वैतात्मभावाः हि महानुभावाः "पुनर्वदामिदमैव भवति" इत्यादिश्रुत्या ब्रह्मब्रह्मविदोरनन्यात्मतां मोद्घोषयन्त्या

तद्विषयापत्तिरेवेति च प्रतिपत्तेः । "युजसमाधावि" ति, पाणिनिस्मरणात् "योगस्समाधिस्स च सार्वभौमः । वृत्तिहीनं मनः कृत्वा योगोऽयं मुख्य उच्यते" इति योगभाष्यदक्षस्मरणकृतनिर्वचनाभ्याञ्च । "युञ्जानः प्रथमं मनस्तत्त्वाय" । "युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चित" इत्येतद्वेदवचनसमनुगृहीताभ्यां मनुप्रवर्णितस्यैवार्थस्य निरवद्यत्वात् । न हि त्वं 'ब्रह्ममम' इत्युत्तमपुरुषप्रयोगो भगवता स्वात्मन्येव कृतोऽस्तीति भ्रमितव्यम् । देहादिसङ्घातसम्बन्धानधीनकेवलप्रत्यगात्मपरतया एव तयोः पदयोः प्रागेव प्रतिपादितत्वात् प्रत्यपादयाम चामुमर्थमद्वैतसाम्राज्ये । एवञ्चोदाहृतमुक्तिकाद्युपनिषद्वचोविशेषवशादपि श्रवणादीनामेव मोक्षहेतुभूततत्त्वज्ञानप्रयोजकता सङ्गच्छते न तु तेभ्यः प्राचीनायाः किल भक्तेस्त्वदाकोशवासितायाः वा । एतेन "ब्रह्मशब्देन च पुरुषोत्तमोऽभिधीयते । ब्रह्मशब्दश्च विष्णावेवेति" रामानुजानन्दतीर्थवल्लभादिभिर्विहिते ननु ब्रह्मशब्दार्थनिर्वचने निर्विशेषं परात्मानमनादृत्य नूनं परिच्छिन्नायामेव विष्णुदेवतायां प्रयुक्ते परं प्रयुक्ते इति यथोपन्यस्तप्रमाणवचोमात्रेण संक्षिप्तसारभूतेन प्रत्युक्ते वेदितव्ये । न हि सार्वभौमो जिज्ञास्य इत्युक्ते परिच्छिन्ना मण्डलाधीशाः कतिपयजनपदपतयो वा जिज्ञास्यन्ते । तेषां तत्र तत्पदतात्पर्याविषयत्वात् । अपि त्वशेषवसुमतीसाम्राज्यपरिरक्षणक्षमो विशिष्टगुणगणमहितः पुरुषविशेष एव जिज्ञासाकर्मत्वेनावधार्यते । यदन्वयितावच्छेदकयोग्यतैकान्ततया शब्दं यं प्रयुञ्जते प्रयोक्तारस्स एव तद्विषयविषयितयाऽऽकाङ्क्षयेनोपादीयते प्रतिपत्तृभिः । न तु ततो व्याप्यधर्मावच्छिन्नास्तदुपसर्जनीभूता वा मनाक् । अप्रस्तुतत्वादन्याय्यत्वाच्च । एवमेवेह सूत्रे प्रयुक्ताद्धि ब्रह्मपदादनियत्ताकसत्तावत्प्रमेयगोचरात्स एव दृश्यातीतश्चेत्यधातुःस्वारस्येन चेतस्सरणावरोहत्पदमपि पर्यायभूतं तस्य त्वात्मनामकमेव स्वसमानाभिधेयसत्तावत्प्रयुज्येत । तत्त्वतस्तु "तस्य वाचकः प्रणवः" इति सूत्रं हि पातञ्जलं प्रणवमेव महेश्वरस्यैकान्ताभिधानतया बोधयति । "तज्जपस्तदर्थभावन" मित्युत्तरसूत्रं वाचकस्य प्रणवस्य जपं तथा तदभिधेयस्य महेश्वरस्य भावनञ्च निराह । इममेवार्थं "अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः । तस्योङ्कारः स्मृतो नाम तेनाहूतः प्रसीदति ॥ प्रणवो वाचकस्तस्य शिवस्य परमात्मनः । शिवरुद्रादिशब्दानां प्रणवो हि परः स्मृत" इति विष्णुपुराणे वर्णयाम्बभूव भगवान्कृ-

१४. रामानुजमध्वबल्लभादिभिः कृतस्य किल ब्रह्मपदार्थनिर्वचनस्यान्याय्यत्वाभेदनपूर्वकं वस्तुसत्त्वव्यक्तीकरणम् ।

कादिमतव्युदासोऽप्युक्तमहे । न वा पुनर्मन्त्रेणैव पदेनानुमानिकेश्वरवादिमतीकारो युक्तियुक्तः । चार्वाकवत्तथापि वेदबाह्यतामापन्नस्य द्रविडभाषाप्रबन्धार्थैकसंहृदयस्यान्तर्मनसि वेदास्वाद्विद्विषतो बहिस्तु वेदप्रदेशात्मकाण्डानेव रुद्रसूक्तपावमान्यशतरुद्रीयादिसूरिमाहात्म्यदेदीप्यमानामृतनामधेयसंसिद्धसकलपुरुषार्थान्नाट्यपटत्वाद्वनालीलायिसमर्पयते श्रुतिशिरोवचनानुवदनम् । न च वैष्णवानामस्माकं शिवमाहात्म्यवाचिसूक्तानुवाकादीनामप्रामाण्यं तैरप्यसर्वेश एव स्वेतरमर्जनपरिमार्जनात्स्वनिर्णयमवतामुचितेति वाच्यम् । वैष्णवत्वस्यैव वेदबाह्यतया भागवतपराकृतत्वात् । अत्रापि नारायणस्यैव सार्वात्म्यं मन्यमानाना तत्सत्तातिरिक्तसत्ताया एवाप्रत्यये प्रत्याख्येयवस्तु स्वाधीनसत्ताकमनुर्वरितसत्कस्य वा दुर्भगाः कुर्युर्व्युदसनमिति नियोगपर्यनुयोगेऽप्रवर्तिते सम्प्रतिपन्नमतिर्वचनाभावेन स्मृतिभवनमाश्रित्य वैष्णवतादुराचेशस्य त्याज्यत्वापत्तेर्न मूलेपायितत्वात् । न चात्र "द्विनते," त्यादिपदेनैवानुमानिकेश्वरवादिनो व्युदस्ता इति युज्यते वक्तुम् । आगमैकगम्ये हीश्वरे तद्विषयविवेचकतया तदितिकर्तव्यतासम्पादकं नाम सदनुमानमागमानामनुग्राहकमेव सत्तन्निपुणैस्त्वानुमानिका लोकलोचनानामनुनायकास्त्वानिन्द्या एव यत । न हि "ब्रह्मणी," त्यनेनाव्यक्तात्मकप्रधानपरमाणुकारणवादिसाङ्ख्यवैशेषिकादिव्युदासो भीयते कार्यकारी । ब्रह्मवादविशेषेण व्यपदेशात्मनो विष्णोरेव शिवे भगवति गाढतरवैमनस्यपुरस्सरदास्यमाचरतान्तु देहात्ममात्रवादितया क्व ब्रह्मणीति शब्दमौलिसम्प्रतिपत्तिर्वा । साङ्ख्यवैशेषिकादिव्युदास इति यावज्ज्वलनकिल्विषाद्भिरभ्यस्तान्तावत् । तत्त्वतस्तु कपिलकणादादयो भगवत्पूज्यपादैर्ब्रह्ममीमांसादिभाष्ये, सम्यगेकं सुशिक्षिता एव मत्यर्थम् । मान्तु पुनस्तथारतया तव तन्निरासजल्पनालापः । त्वत्तोऽप्यधिमुनि कोटिश आधिक्यमधिरूढानानाम वादिदानवानां पूज्यपादस्याप्योजमरन्दरो ब्रह्ममानश्रीमत्पद्मपादसुरेश्वराद्याचार्यवर्यैर्हरिहिरण्यगर्भाद्यंशावतरणैर्वादातिवादपथभ्रमणचूर्णीकरणक्रियाभागितायास्त्वया अप्यात्ममोक्षणाय, श्रद्धाद्विभावनीयत्वात् । न वा पुनः "श्रीनिवास," शब्देन पाशुपतादिपरीहारो योग्यनिरूपणः । नारायणोपनिषदि 'नमो हिरण्यबाहवे' इत्युपक्रम्य "अम्बिकापतये उमापतये पशुपतये नमोनमः," इत्युपसंहारश्रुत्या पशुपतेर्महेश्वरस्य मुमुक्षुणा नम्यत्वेन ध्येयत्वेन चाम्नातस्य "निर्मितं हि मया पूर्वं व्रतं पाशुपतं शुभम् । गुह्याद्गुह्यतमं सूक्ष्म वेदसार विमुक्तये," इति प्रक्रम्य "एष पाशुपतो योगस्सेवनीयो मुमुक्षुभि । भ

स्मच्छन्नैर्हि सततं निष्कामैरिति हि श्रुति,, रित्यन्तेन कौर्मे तच्छ्रुत्युपबृंहणरूपे णोपवर्णितस्य श्रौतत्वसंसिद्धावेतद्वाक्यावगतपाशुपतस्यापि श्रौतत्वमेव सिद्धतरमुपपद्यते । "वामा पाशुपताचारास्तथा वै पाञ्चरात्रिका,, इत्यादिकैस्तु कौर्मवचनैरश्रौतमेव पाशुपत निन्दितं भवति न तु श्रौतम् । प्रत्यवायप्रसक्तेः ।। अत एव वायुसंहितायां "शैवागमोऽपि द्विविधः श्रौतोऽश्रौतश्च कीर्तितः ।। श्रुतिसाररमयः श्रौतस्स्वतन्त्र इतरो मत ।। परं पाशुपतं यत्र व्रतं ज्ञानञ्च कथ्यते,, इत्यादिना श्रौतत्वाश्रौतत्वव्यवस्थाया सुवचत्वात् । यो हि पाशुपताङ्गीकारप्रयुक्तनिन्दावाक्यविशेषस्सोऽयं "न सेव्यमेतत्कथितं, वेदबाह्यं तथेतरदि,, ति तत्रत्यवचनबलादश्रौतपाशुपतनिन्दापर एवेति सुव्यक्तम् । योऽपि महाभारते "सांख्यं योग पाञ्चरात्रं वेदाः पाशुपतन्तथे,, त्यादिना प्रवृत्तो वचनविभेदस्सोप्यश्रौतपाशुपतविषय एव । यदपि "पत्युरसामञ्जस्यादि,, ति ब्रह्मसूत्रेण पाशुपतप्रामाण्यं निराकृतं भाष्ये तदप्यवैदिकपाशुपतपरम् । तत्र त्वीश्वरस्य केवलनिमित्तत्ववादो निराकृतो नान्यदिति ध्येयम् । इत्थञ्च श्रौतत्वेनाभ्युपेतपाशुपतञ्चेत्प्रराकर्तुम्प्रवर्तसे तदा पाञ्चरात्रशब्दिताभ्युपगमविभेदोऽपि तावकीनस्तत्तत्प्रत्यासत्त्या तदापत्तिपरम्पराकोटिक एवेति व्युदासप्रत्ययगोचरस्तत्कृतो न भनुपे । वाक्यघटकपदान्यतमप्रवृत्तिप्रयुक्तप्रत्यवस्थानस्य स्थायित्वे ततोऽविपर्ययप्रतीत्यालम्बिनोऽप्युपयोपकसमीक्षासम्बन्धस्य व्यर्थप्रयासपरिणामसहोदरायमाणत्वात् ।। निरूपितरीत्या ब्रह्मशब्द एव विशेषभूतो न तु नारायणशब्दस्तस्य विष्णोर्विपदपारम्परीमध्यपातित्व एव फलिते तत्साधारण्येन श्रीनिवासशब्दस्यापि समाचारोऽवसीयते । न हि तत्रावयवशक्ति कार्यकारिणी । रूढिशक्त्या ब्रह्मणस्त्रिमूर्त्युत्तीर्णत्वे सिद्धे । त्रिमूर्तिसाम्यं तदैक्यञ्च ब्रह्मस्वरूपानुगमयोग्यतयाऽभिप्रेयते ।। नानेनेश्वरोत्तीर्णब्रह्मवादिनो भेदाभेदवादिनश्च व्युदस्ता इति वचनव्यक्तिः फलवती । द्वयोरपि यथाभूतनिरूपणमहिम्ना पारमार्थिकत्वेन च व्यावहारिकत्वेन स्वकालावच्छिन्नयोर्व्युदसनानर्हत्वात्सर्वशः । ज्ञानकर्मणोरन्यतरस्याप्यनधिकारिणस्ते, का वा तत्समुच्चयोपायवादिव्युदसने प्रसक्तिर्नीरसतरस्येति "शेमुषी,, पदप्रयोजनप्रदर्शनमुपहासायावकल्पते । नापि "भक्तिरूपे,, तिवाक्यार्थज्ञानमात्रोपायवादिव्युदास इति पदसार्थक्यमङ्गीकर्तुं वास्तविकम् । भक्तेरनुपायतयाऽऽसाधकत्वमनायाश्च ज्ञानस्यैतस्मात्पूर्वं श्रुतिभिरनेकशः प्रतिपादितत्वेऽपीहापि "मुमुक्षव पुरुषा । स्

१६ मुक्तिप्रतिमक्षे: साक्षाद्देहतायामखण्डार्थज्ञानस्यैव हि हेतुतायाश्च परिनिष्पन्नप्रमाणावेदनम् ।

घनचतुष्टयसम्पन्नाः श्रद्धावन्तं सत्कुलभवं श्रोत्रियं शास्त्रवत्सलं गुणवन्तमकुटिलं सर्वभूतहिते रतं दयासमुद्रं सद्गुरुं विधिवदुपगम्योपहारपाणयोऽष्टोत्तरशतोपनिषदो विधिवदधीत्य श्रवणमननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः । सैव कैवल्यमुक्तिरिति । अत एव ब्रह्मलोकस्था अपि ब्रह्ममुखाद्वेदान्तश्रवणादिकं विधाय तेन सह कैवल्यं लभन्ते । अतस्सर्वेषां कैवल्यमुक्तिर्ज्ञानमात्रेणोक्ता न कर्मसाङ्ख्ययोगोपासनादिभिरित्युपनिषदिति,, मुक्तिकायामुपनिषदि सिद्धान्तितपद्धत्या सर्वोपनिषन्निर्गलिताथेसम्धानरूपया नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पत्तिविशिष्टविशिष्टलक्षणलक्षितस्य गुरोरुपसत्तेरष्टोत्तरशतसङ्ख्याकोपनिषदामक्षरराशिगृहीतेरनवरतं श्रवणमननिदिध्यासनानामनुष्ठितेर्जीवत्कैवल्यमुक्त्योः परिप्राप्तिः ज्ञानमात्रस्यैव कैवल्यमुक्तावुपस्निहितेः कर्मसाङ्ख्ययोगोपासनादीनामात्यन्तिकोपायकोटौ च निगृहीतेर्मोहयितव्यत्वात् । किञ्च "तमेव विद्वानमृत इह भवति" । नान्यः पन्था विद्यतेऽयनाय । ब्रह्मत्वं विद्धि । आत्मानं विजानीया,, इत्याद्यासु "श्रुतिषु विद्वान् विद्धि विजानीया" इत्येतैः पदैः प्रत्यगात्मविषयज्ञानावाप्तिसमर्पणैकनिजवृत्तैरेवसाधनीभूतश्रवणादिनिरूढावस्थामप्रमाहकवचनविलासोपलालितैश्च केवलभजतां "पुराणहीनाः कृपिणो भवन्ति भ्रष्टास्ततो भागवता भवन्ती,, त्यभिस्मरणसङ्गृहीतपामरभक्तिनिगर्हेणमक्रियां पुनरात्मनश्चारिताथ्यप्रत्यर्थिपदार्थच्छायानुवर्तिनीमुक्तजयन्त्यहयुदीरिता भक्तिरभावविरागविग्रहा हि पराहण्यते ज्ञानैकवस्तुस्थिते । ज्ञानेन तु ज्ञेयाधिगमे स्वरूपभूते तदापस्यैवात्मरुचिं प्रयोजयन्तो ज्ञानिजना न निजभावात्सुतरां व्याहन्यन्ते भक्तिन्तु विदधत्येव ज्ञानादनन्यभूताम् । यथा चेद्ध्मानि प्रत्येङ्गप्रविशन्ज्योतिष्केशो न भिद्येत स्वप्रवेशाधिकरणादिध्मेन इध्मा वा वीतिहोत्राङ्गैः परिरब्धगात्रो न ततो भिद्यते यथा पुनस्तरङ्गास्तरङ्गिणीमनुविश्य स्वात्मतां जहन्तो न जहत्येकतान्तरङ्गिण्या तथेह ज्ञानादेव निरवच्छिन्नाद्द्रवन्ती भक्तिर्व्यक्तिर्ज्ञानावस्थामात्मभूतां पुनर्निविशन्ती मुक्त्यत्वेवात्मावस्था स्वात्मास्थित्यै यतो नार्थज्ञानमन्तराऽर्थानुरागस्य हि तज्ज्ञेयाभिन्नज्ञानानुभावजन्मा । न चान्तरा प्रमेयगामिमहिमानुभवं तन्माहात्म्योल्लङ्कारवैद्यवस्तुविषया भक्तिः कथञ्चिद्वा समुद्भवेत् । इत्थञ्च ज्ञानमेव सर्वसारो भक्तिश्च तच्चरणोपसे-

३७ पुनरप्युपन्यासपूर्वकं श्रुतप्रकाशिका व्याख्यानप्रत्याख्यानं यथाशास्त्रम् ।

विनी दात्येवेति स्थितम् । एतेन स्वसिद्धान्तार्थसङ्ग्राहकत्वेन मङ्गलाचाररूपत्वेन चाऽरचितोऽय "मखिलभुवनजन्मे,, तिश्लोको दोषाकरो गुणानामम्बरपथ इति फलिते "पूर्वाचार्याभिमतमुक्तिघण्टापथकण्टकायमानविविधकुदृष्टिजनदुर्वचनशतोपप्लुते तदुपदर्शितकुपथप्रवृत्तिनि जगति च मोमुह्यमाने तदुज्जिजीवयिषया सदसद्विवेचनचतुरपूर्वाचार्यपरिचिन्तितं प्राचीनमेव समीचीनमध्वानं निष्कण्टकीकृत्य परमपुरुषार्थाभ्यर्थिजनसार्थङ्कृतार्थयितुं भवभयाभितप्तजनभागधेयवैभवभावितावतरणेन परमकारुणिकेन भगवता भाष्यकारेण शारीरकं शास्त्रं व्याचिख्यासित,, मिति निन्दानुतिवचनावली किल श्रुतप्रकाशिकाकृतो दुराश्वाससञ्जातगुणागुणविवेकापहतविकलमतिमङ्कालिता सच एव ' स्वयं नष्टः परान्नाशयतीति' न्यायस्योदाहरणभूमिराबभूवैवाक्षरशस्तथाहि । विष्णोरपि देवताया यथाश्रुतोपासनासौरभानुभवहीनयोरनाचार्यशिक्षागतिकलितामिभूयोस्तयोः पूर्वाचार्याणामेव रासभीविषाणसमुदयसमानयोगित्वे तदभिमतमुक्तिघण्टापथस्य मुक्तिमार्गैकशुण्ठाकुण्ठकण्ठकमठीमाधुरीसम्मोहितत्वात् । न च बौधायनद्रमिडटङ्कगुहदेव-भारुचिप्रभृतीनां वृत्ति-भाष्य-वाक्य निबन्धकाराणां नाथमुनिरामभिश्र-पुण्डरीकाक्ष-महापूर्णादीनां रामानुजात्पूर्वकालिकानां प्रतीतत्वात्कथन्तदपन्हवार्हप्रयासोऽसाविति शङ्कनीयम् । पुरा तत्समयात्प्रख्यातनिबन्धेषु साधारणेष्वसाधारणेषु वा तदुत्तरकालिकेषु तथाविधेषु चाद्यावधिकेषु समास्वपि विश्रुतविद्वत्समाजसम्मिलितासु चर्चाया एव तेषामाकाशकुसुमायितत्वात् । द्राविडेष्वपि विद्यावत्स्वविद्यावत्सु वा तद्भेदेवानुभवात् । अस्मत्साम्प्रदायिकसन्दर्भैर्व्यवहारेण च "नमः प्रचुरगुणगणैकास्पदाय स्थिरचरकुलबीजकुम्भभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसम्पुटनिगूढनिस्फारयित्रे न्यायप्रज्वलितचेतसे नमोऽस्त्वाचार्येभ्य,, इति माङ्गलिकोक्तिप्रसङ्गसमनुगृहीतेन तत्प्रामाण्योपपत्तिरिति वा न च वाच्यम् । वचनावलीमिमाम्प्रामाणिकीममन्यमानद्राविडपुङ्गवपरम्परात एव तेषां तथात्वविनिर्णयात् । यदि देशे तस्मिन्कदाचिद्वा पुरा तदस्तित्वं स्यात्तर्हि कालान्तरे विभिन्नसाम्प्रदायिकत्वेऽपि द्राविडेष्वनुगतरूपेण नाम्नो वा व्यवहारः किन्न स्यात् । एवञ्च भावितगतिमूलैव तथाभाव इत्यपाक्षिकनिर्णयः । न चास्मत्पक्षे विनिगमनायामाक्षेपो भगवत्पूज्यपादपुराकालिकाचार्याणां विषये युज्यते विधातुम् । त्वदादिसकलसाम्प्रदायिकनिबन्धेषु भगवन्नारायणादीनारभ्य

गोविन्दभगवत्पूज्यपादपर्यन्तानामुदाहृतत्वात्प्रसङ्गसङ्गत्या तत्रतत्र । न च पुनस्ते-
षामभिप्रेतविषयविशेषव्यपोहनविधानाय विहितश्चोल्लेखो न भवत्युपादानाय अपि,
तु हानार्थैवेति हर्षितव्यम् । विश्वविख्यातनिबन्धकारीघनम्यतरत्वेनादृततमानां
तेषां त्वदादिशिवारुदितैर्लोम्नो वा हिंसनार्हत्वात् । प्रत्युताक्र-
न्दनधारया नूनं तावकीनया तवैव शश्वन्निधनदशापराभूतकरण-
ग्रामत्वाच्च । ते तु ज्योतिश्चक्रे चिरं ज्योतिराकारा रेमन्ते
तावन्निजमहिम्ना कोविदकदम्बमेध्यतरवाणीविहाररञ्जितेनेत्यव-
गम्यताम् । इयमेव त्वदादिविविधकुदृष्टिजनदुर्वचनशतोपप्लु-
तिर्मुक्तिघण्टापथकण्टकायमाना सती कुपथप्रवृत्तिनिमित्ततामाभ-
जते जगद्यज्ञजनभूयिष्ठं मोहयत्यद्यावधीति सन्मार्गमुन्मार्जयता-
न्तदुज्जिजीवयिषामुपेक्ष्य तदुन्मिमारयिषैव वो व्यक्ततरा । सन्तु वा तुष्यतु न्या-
येन तव पूर्वाचार्याः परं त एते शूद्रजातीयास्तदङ्घ्रिजलपातारो दुरङ्घ्रिजनचेतस्का-
श्चाध्वानं समीचीनं कुतो विजानीयुः कुतो वा सदसद्विवेचनविधुरजघन्यजातसञ्जाता-
स्तद्विचारप्राकारगवौवारिकचरणरजसां चार्हन्ति समर्हणाम् । इत्थं प्रत्यङ्कण्ट-
काङ्कितकरणास्ते निष्कण्टकक्रियाविदो भवितुं न शक्नुयुरेवेति नेतव्या जन्मसं-
स्कारास्तदीयाः । दिशाचानया शठकोपादिसातानिमानवाचार्यक आचार्यमन्यो रामा-
नुजः परमपुरुषार्थाभ्यर्थिजनसार्थं पातयितुमेवं संसारकूपे प्राप्तावतारो भवभयाभित-
सजनदौर्भाग्यविपत्तिभावितनिजजन्मा च नीरसचेता भगवत्पूज्यपादभाष्यार्थप्रज्ञा-
मृततरङ्गिणीकणिकास्वादगन्धस्याप्यबोद्धा शिवालापप्रलापपारम्परीपाण्डित्यमात्रवि-
भवस्साहसशाली सन् शारीरकं नाम शास्त्रं क्षोभयामास स्वैर्दुर्वचनैरित्याखेलकसभ्ये-
तरवादचञ्चुभ्य आ च वाग्मिमण्डलीमूर्धन्येभ्यो विश्रुतमेव । ननु नो रामानुजा-
चार्याणां पन्नगपतिपरमावतारतया विहितनिन्दाविषवातानां कथङ्कारं पावत
स्यात् । नैष दोषः । वस्तुगतेर्व्यक्तीकारस्य तथ्यार्थानन्यात्मकस्य निन्दाभावक-
ल्पनाया एवायोगाद्योगीशावतारकथायास्तु सम्प्रतिपन्नप्रमाणवाणीबाह्यत्वाच्च ।
फणीशमूर्त्यन्तराङ्गीकारेऽपि वा तस्य विष्णोर्भगवतो भृत्यभावमापन्नस्य हि परा-
धीनस्वप्रचारभारस्य दासकर्मातिरिक्तसमारम्भानधिकृतत्वात्सर्वशः । तादृशसमु-
द्योगयोग्यत्वे स्वत एव तच्छयनबन्धनादुन्मुच्येत । अपरिमुक्तोऽपि निर्द्वन्द्वमध्वा-
नं सतां शक्तावभिभाषेत । नाभापदेव तमेतामिति न शक्नुमस्सार्वज्ञं तदनुसारि-

१८ श्रीमन्महेश्वरापरावतारत्वेन भगवत्पूज्यपादानामखिलेश्वर- [illegible] तुष्यतुनयेन शेषांशसम्भूतस्य वा रामानुजस्य तच्छास्यजनकोटिप्रविष्टत्वमासमन्तादिति सङ्कीर्तनम् ।

यत्नातिशयं वा निश्चेतुम् । न हि नारायणस्य सर्वज्ञत्वमधिगच्छन्नेव धरते नो विशालवपुषं तमनन्यशरणसमं भगवानत्र शेष इति सङ्गच्छते । धारणन्तस्यापेक्ष्यापि ततो व्यापकसत्ताकभेदध्वान्तविध्वंसनपटीयसोऽद्वैतब्रह्मसाक्षात्कारपरमोदयौपयिककथाया दवीयस्त्वात्प्रत्युत तांप्रति बलवद्भ्रमनस्यकृतदुर्मोपारूपितत्वाच्च । न चाद्वैतसाक्षीकार्थतया तस्मै कपर्द्धारन्तद्रोचेनेति साम्प्रतम् । तदाराध्यभूतनागारिवाहनस्य कृत्स्नस्य वा देवताचक्रस्य स्वात्मभूतत्वेन मन्त्रार्थवादेतिहासादिभ्यो विनिर्णयात् । हरेरिव हरस्यापि "फणाभृन्मणीकुण्डलालोलकर्णद्वयीचारुतादर्पणोद्गण्डभाग" मित्याद्यैतिहासिकवचनैः शेषभूषणत्वेन तम्प्रति प्रशास्तृत्वेन हरज्ञानावतारभूतश्रीमच्छङ्करभगवत्पूज्यचरणानां किङ्करायमाणशेषांशरामानुजस्य तदनुशासनसंनिधाने विपरीतवादित्वापत्तेरयुक्तियुक्तत्वान्निजपित्रादेः पूज्यपादशिष्यवर्गमध्यपातिनस्सिद्धान्तकनकाद्रिमौलेरधःपातितत्वाच्च । तेषां हि महेश्वरावतारतायां 'परहंसात्मना सत्यः परमात्मा सदाशिव' इत्यादीनि मार्कण्डेयकौर्मपाद्मशैवादिपुराणवचांस्युदाहृतान्येव तत्र तत्र प्राग्भिरर्वाचीनैरभियुक्तजनैस्सार्वदेशिकैरतिमान्यतया गङ्गेशोपाध्यायोदयनाचार्यकालिदासहर्षमिश्रविक्रमादित्यभोजादिभिरात्मनिबन्धेषु पूज्यतमबुद्ध्या समुदाहृतान्येव नेह कश्चित्कस्य चिन्मत्सरपित्तनिबन्धनदुष्प्रलापो निजदेहदाहनभृते फलाय कस्मैचिदवकल्पते बालिशकिशोरकूटस्य । वस्तुतस्तु पातित्यपराहतात्मैवायं यदत्र सातानिशठकोपादिविनेयपरम्पराकः कदध्वप्रत्यवस्थानदाक्षिण्यश्च दर्शितनिदर्शनैः । शठकोपस्य हि रामानुजस्य मूलगुरोः शूद्रजातीयत्वन्तु दिव्यसूरिचरित्रे श्रीनिवासचारिनिर्मिते चतुर्थसर्गे "अस्ति पूर्वपयोराशेः क्वापि पश्चिमरोधसि । मण्डले पाण्ड्यराजस्य नगरी

१८ रामानुजीयानामेव साम्प्रदायिकपुस्तकेभ्यः शूद्रगुरुपरम्पराकत्वकलिरामानुजस्य सिद्ध भवतीति कथनम् ।

कुरुकाह्वया ॥ तत्रासीत्पादजातेषु कश्चिद्भागवताग्रणीः । श्रीमत्पल्लीतिनाडीन्द्रस्सीमातीतगुणोल्वण" इत्यारभ्य "ततो जातस्सुतस्तस्माच्छठकोप इतीरितः । तमाहुः कारिजं सन्तः शठकोपपराङ्मुखमि" त्यन्तेन मुव्यक्तम् । त एते शठकोपस्य जातीया द्रविडे सद्यो "मुदलप्पिळ्ळे" इति व्यवहारविषयाः प्रतीयन्ते । तस्मिन्नेव चरित्रे "कुलोचिताचारकलानुपक्तः पुण्ये महीसारपुरे विधाय । विक्रीय शूर्पे विचचार योगी" ति सर्गे च द्वितीये कीर्तितम् । तच्चरित्रप्रपन्नामृतादौ 'मुनिवाहनपरकालौ चाण्डालभिन्नजातीयतयोदाहृतौ । तच्च पुन "स्सम-.

देशिकमस्मदीयपरमाचार्यानशेषान्गुरून् । श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णं मुनिं यामुनम् ॥ रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणम् । सेनेशं श्रियमिन्दिरासहचरं नारायणं संश्रय" इति गुरुपारम्पर्यं तदीयमुपवर्णितमन्यत्रापि । लक्ष्मणयोगिपुङ्गवपदेन रामानुजो विज्ञायते । गुरुस्तस्य पराङ्कुशदासो महापूर्णपर्यायः । तस्य गुरुर्यामुनः तस्य गुरुः पुनारामः तद्गुरुः पुण्डरीकाक्षः तस्य हि गुरुर्नाथमुनिः तद्गुरुः शठकोपः । सोऽयं मतस्यास्यादिम आचार्यपुरुषः । स च द्राविडभाषामात्रविज्ञाता न तु गीर्वाणवाणीपरिचितिमान् । स पुनर्ब्राह्मणचरणाम्बुजातपरिसेवी न तु तेषां मान्यजनो जातु चित् । जघन्यजातत्वात् । नाप्यसावयाचष्ट ब्रह्मजातं शिष्यीभवितुम् । न वा गुणपाशाकृष्टताकल्पनं पात्रीभवति शिष्यत्वाय । न च धर्मव्याधसूताद्युदाहरणबलेन ब्रह्मजातंप्रत्युपदेष्टृता शाक्यसामर्थ्यात् कथञ्चिदुपजायते । 'तपःश्रुतञ्चयोनिश्च' तित्रितयपर्याप्तधर्मावच्छेदेन विधीयमानब्राह्मणत्वस्याचार्यपदयोग्यतापादकशिष्टविशिष्टसत्ताकस्य स्वेतरवर्णस्थोपदेशानक्रियाविघटनानुकूलपाटवस्य प्रतिप्रसवसामग्रीसामान्यशून्यस्य च धर्मव्याधसूताद्युपदेशव्यापारमात्रम्प्रति प्रतिबन्धकत्वात् । यत्तु कश्चि "त्सविप्रेन्द्रो मुनिः श्रीमान्स यतिस्स च पण्डित" इत्यादिनाऽष्टविधभक्तिमत्पुरुषो ऽर्हेत्याचार्यभावमिति प्रललाप व्यामोहविद्रावणकारस्तत्तु "तपःश्रुतञ्चयोनिश्च" तिदर्शितश्रुतिसिद्धान्तितगुणत्रयसम्पत्तिशेषभूतयादृच्छिकगुणालीसमुल्लासप्रशंसापरम् । न तु जातु चरणजाते मतिविभ्रमेण गुणानध्यारोप्याऽचार्यतासंस्थापनावकाशदानार्हम् ।

४० शूद्रादेरप्यस्यामर्हेण गुरुत्वमभ्युपेतवतः कस्यचिन्मतमपाक्रियते श्रुतिस्मृत्यादिप्रतिष्ठितप्रमाणगणैरतितराम् ।

तथा सति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । विद्याह वै ब्राह्मणमाजगाम । वेदविद्या व्रतस्नातदेशिकस्य मुखात्स्वयम् । गृहीत्वाऽष्टोत्तरशतं ये पठन्ति द्विजोत्तमा" इत्येवञ्जातीयश्रुतिघटकश्रोत्रियब्राह्मणादिपदैर्द्विजेन्द्रातिरिक्तमनुज्ञे ननु शूद्रे वेदार्थप्रज्ञानतदनुष्ठानानुष्ठापनानां "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम् । वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद आसनशयनवाक्पथिषु समप्रेप्सुर्दण्ड्यः शतम् । सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः । कट्याङ्कृताङ्को निर्वास्यः स्फिचञ्चास्यावकर्तयेदि" त्येवमादिशतपथगौतममनुश्रवणस्मरणाभ्यां विनिन्दिततया तस्मिन्नाचार्यतामभिमन्यमानास्तावत्ततोऽप्यपकृष्यन्त एव सर्वशः । सम्प्रदायकृत-

महिमावाप्तेस्तु प्रत्याशा दूरोपास्तैव । यत्तु पुनः "श्रद्दधानः शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपी" तिस्मृतिं मनोरुदाहरन्सव्याख्यां 'ब्राह्मणादन्योऽपि स्वस्याचार्यत्वं कर्तुं शक्नोतीति' जजल्प तदपि न तथा कथञ्चिद्वा । शुभविद्यापरधर्मस्त्रीरत्नगतकीर्तिपुरुषार्थलावण्यादिगुणविशेषमालक्ष्य तेषामादर्तव्यतामात्रप्रसाधकत्वादुक्तायाः किल बाधः । न "ह्यापद्गतः सम्प्रगृह्णन्भुञ्जानोऽपि यतस्ततः। लिप्येत न स पापेन पद्मपत्रमिवाम्भसे,, त्यात्यन्तिकापत्कालीनवर्तनावभासकं स्वस्थावस्थायान्तावज्जघन्यजात्यन्नभक्षणं विधत्ते वचनम् । तदाद्यन्नस्याशिनारः पातित्योपहततया भ्रष्टा एव शिष्टपङ्क्तेर्येनः । न चापदि वृत्तो वर्त्तनभेदो हानाय चोपादानायालं वस्तुस्थित्या । विधिनिषेधव्यवस्थावच्छास्त्रमात्रबाध्यत्वात् । यद्यप्यारण्यपर्वणि कौशिकधर्मव्याधकथाभागो महाभारते

४१ उक्तार्थविघटकधर्मव्याधाद्युदाहरणस्यान्यथैव सङ्गतेर्व्याख्यायाः प्रदर्शनम् ।

"कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः । तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ धर्मव्याधमपृच्छत्स च चास्य कथितो द्विजैः । अपश्यत्तत्र गत्वान्तः सूनामध्ये व्यवस्थितम् ॥ नमस्कृत्य ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे । प्रदक्षिणमथो

कृत्वा प्रस्थितो द्विजसत्तम,, इत्यादिवचनवानवगम्यते तथापि कौशिकस्य केनचिदागन्तुकावेशेन समापन्नमौत्सुक्यन्तु निर्वर्तयितुमेवोदाहृतस्स एष विषयो न तयोर्दूषणभूषणविधानहेतवे विन्यस्तः किन्तर्ह्यपकृष्टसमागमगम्यमप्यर्थमभिद्रुवन्किमुतोत्कृष्टं सेवित्वा संसाधनीयपरमार्थाधिगमे तत्कृतकृत्यतेति कैमुत्येन यथोपपादितविधानाधिगतमेवार्थं प्रतिष्ठापयतीति वाचोयुक्त्या तथा विज्ञातव्यं यतो विशिष्टविज्ञानसम्पन्नाः शतशोऽथ सहस्रशस्तत्काले प्रत्युपाततरा एव सन्तो ब्रह्मण्या महर्षयस्तेभ्योऽलभ्यमानं तत्त्वं हन्त कौशिकेन व्याधाल्लेभे इत्यपर्दिवगतावज्ञानं ब्रह्मर्षीणां ज्ञानञ्च व्याधस्य मुमुक्षुत्वं कौशिकस्य उपदेशस्सूनास्थेयैव दशा तत्कालीनेति पर्यवसानेन सर्वोऽपि च सन्मार्गे उत्सन्न एवासीदित्यर्थासिद्धौ कथमाथमभूत् कौशिको मुमुक्षुः कथं वा व्याधो ब्रह्मण्य उपदेष्टेति सर्वमेतत्काकदन्तपरीक्षासमानकक्षाकमापद्यते कथनन्ताबद्धव्यामोहविद्रावणादेः । यदपि "त एकदा तु मुनयः प्रातर्हुतहुताग्नयः । सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ त्वन्नः सन्दर्शितो धात्रा दुस्तरन्निस्तितीर्षताम् । कलिं सत्त्वहरं पुंसां कर्णधार इवार्णवमि,, त्युदाहृत्य तद्गतसत्कृतमित्यादिपदेन सूते आचार्यत्वं निर्देशि तदप्यनधिकारि-

देशिकमस्मदीयपरमाचार्यानशेषान्गुरून् । श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णं मुनिं यामुनम् ॥ राम पद्मविलोचन मुनिवर नाथ शठद्वेषिणम् । सेनेशं श्रियमिन्दिरा सहचरं नारायणं संश्रय" इति गुरुपारम्पर्यं तदीयमुपवर्णितमन्यत्रापि । लक्ष्मण योगिपुङ्गवपदेन रामानुजो विज्ञायते । गुरुस्तस्य पराङ्कुशदासो महापूर्णपर्याय । तस्य गुरुर्यामुन तस्य गुरुः पुनाराम तद्गुरु पुण्डरीकाक्ष तस्य हि गुरुर्नाथ मुनि तद्गुरु शठकोपः । सोऽय मतस्यास्यादिम आचार्यपुरुष । स च द्राविड भाषामात्रविज्ञाता न तु गीर्वाणवाणीपरिचितिमान् । स पुनर्ब्राह्मणचरणाम्बुजातप रिसेवी न तु तेषां मान्यजनो जातु चित् । जघन्यजातत्वात् । नाप्यसावयाचष्ट ब्रह्मजातं शिष्यीभवितुम् । न वा गुणपारावश्यताकल्पन पात्रीभवति शिष्यत्वा य । न च धर्मव्याधसूताद्युदाहरणबलेन ब्रह्मजातम्प्रत्युपदेष्टृता शक्यसामर्थ्या कथञ्चिदुपजायते । 'तप श्रुतञ्चयोनिश्चे' तित्रितयपर्याप्तधर्मावच्छेदेन विधीयमा नब्राह्मणत्वस्याचार्यपदयोग्यतापादकशिष्टाविशिष्टसत्ताकस्य स्वेतरवर्णस्थोपदेशन क्रियाविघटनानुकूलपाटवस्य प्रतिप्रसवसामग्रीसामान्यशून्यस्य च धर्मव्याधसूताद्यु पदेशव्यापारमात्रम्प्रति प्रतिबन्धकत्वात् । यत्तु कश्चि "त्सार्वभौमेन्द्रो मुनिः श्रीमा न्स यतिस्स च पण्डित" इत्यादिनाऽष्टविधभक्तिमत्पुरुषो मर्ह स्याचार्यभावमिति प्रलाप व्यामोहविद्रावणकारस्तत्तु "तप श्रु तञ्चयोनिश्चे" तिदर्शितश्रुतिसिद्धान्तितगुणत्रयसम्पत्तिशेषभूत यादृच्छिकगुणालीसमुल्लासप्रशंसापरम् । न तु जातु चरणजाते मतिविभ्रमेण गुणानध्यारोप्याऽऽचार्यतासंस्थापनावकाशदानार्हम् ।

४० शूद्रादेरप्यस्यामहत्त्व गुरुत्व मभ्युपगतवत क स्यचि मतमपा कियतश्श्रुतिस्मृ त्यादिप्रतिष्ठित प्रमाणगणैरतित राम् ।

तथा सति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् । विद्याह वै ब्राह्मणमाजगाम । वेदविद्या व्रतस्नातदेशिकस्य मुखात्स्वयम् । गृही-त्वाऽष्टोत्तरशतं ये पठन्ति द्विजोत्तमा," इत्येवञ्जातीयश्रुतिघटकश्रोत्रियब्राह्मणा दिपदैर्द्विजेन्द्रातिरिक्तमनुजे ननु शूद्रे वेदार्थप्रज्ञानतदनुष्ठानानुष्ठापनाना "पद्यु ह वा एतच्छ्मशान यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम् । वेदमुपशृण्वतस्त्रपुजतु भ्यां श्रोत्रप्रपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेद आसनशयनवाक्पथिषु सम-प्रेप्सुर्दण्ड्यः शतम् । सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टज । कट्यां कृताङ्को निर्वास्य स्फिचं वास्यावकर्तयेदि" त्येवमादिशतपथगौतममनुश्रवणस्मरणाभ्यां विनिन्दिततया तस्मिन्नाचार्यतामभिमन्यमानास्तावत्ततोऽप्यपकृष्यन्त एव सर्वशः । सम्प्रदायकृत-

महिमावाप्तेस्तु प्रत्याशा दूरोपास्तैव । यत्तु पुनः "श्रद्दधानः शुभां विद्यामाददीतावरादपि । अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपी" तिस्मृतिं मनोरुदाहरन्सव्याख्यां 'ब्राह्मणादन्योऽपि स्वस्याचार्यत्वं कर्तुं शक्नोतीति' जजल्प तदपि न तथा कथञ्चिद्वा । शुभविद्यापरधर्मस्त्रीरत्नगतकीर्तिपुरुषार्थलावण्यादिगुणविशेषमालक्ष्य तेषामादर्तव्यतामात्रप्रसाधकत्वादुक्तायाः किल वाचः । न "ह्यापद्गतः सम्प्रगृह्णन्भुञ्जानोऽपि यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसे,, त्यात्यन्तिकापत्कालीनवर्तनावभासकं स्वस्थावस्थायान्तावज्जघन्यजाद्यन्नभक्षणं विधत्ते वचनम् । तदाद्यन्नस्याशिनारः पातित्योपहततया भ्रष्टा एव शिष्टपङ्क्तेर्यतः । न चापदि वृत्तो वर्त्तनभेदो हानाय वोपादानायालं वस्तुस्थित्या । विधिनिषेधव्यवस्थावच्छाक्षमात्रवाध्यत्वात् । यद्यप्यारण्यपर्वणि कौशिकधर्मव्याधकथाभागो महाभारते

४१ उक्तार्थविघटकधर्मव्याधाद्युदाहरणस्यान्यथैवसङ्गतेर्व्याख्या.प्रदर्शनम् ।

"कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः । तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ धर्मव्याधमपृच्छत्स स चास्य कथितो द्विजैः । अपश्यत्तत्र गत्वान्तः सूनामध्ये व्यवस्थितम् ॥ नमस्कृत्य ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे । प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तम,, इत्यादिवचनवानवगम्यते तथापि कौशिकस्य केनचिदागन्तुकावेशेन समापन्नमौत्सुक्यन्तु निर्वर्तयितुमेवोदाहृतस्स एष विषयो न तयोर्दूषणभूषणविधानहेतवे विन्यस्तः किन्तर्ह्यपकृष्टसमागमगम्यमप्यर्थमाभिप्लुवन्किमुतोत्कृष्टं सेवित्वा संसाधनीयपरमार्थाधिगमे तत्कृतकृत्यतेति कैमुत्येन यथोपपादितविधानाधिगतमेवार्थं प्रतिष्ठापयतीति वाचोयुक्त्या तया विज्ञातव्यं यतो विशिष्टविज्ञानसम्पन्नाः शतशोऽथ सहस्रशस्तत्काले प्रख्याततरा एव सन्तो ब्राह्मण्या महर्षयस्तेभ्योऽलभ्यमानं तत्वं हन्त कौशिकेन व्याधाल्लेभे इत्यर्थादवगतावज्ञानं ब्रह्मर्षीणां ज्ञानञ्च व्याधस्य मुमुक्षुत्वं कौशिकस्य उपदेशस्सूनास्थैव दशा तत्कालीनेति पर्यवसानेन सर्वोऽपि च सन्मार्गे उत्सन्न एवासीदित्यर्थात्सिद्धो कथमाबभूव कौशिको मुमुक्षुः कथं वा व्याधो ब्रह्मण्य उपदेष्टेति सर्वमेतत्काकदन्तपरीक्षासमानकक्षाकमापद्यते कथनन्तावद्व्यामोहविद्रावणादेः । यदपि "त एकदा तु मुनयः प्रातर्हुतहुताग्नयः । सत्कृतं सूतमासीनं पप्रच्छुरिदमादरात् ॥ त्वन्नः सन्दर्शितो धात्रा दुस्तरन्निस्तितीर्षताम् । कलिं सत्वहरं पुंसां कर्णधार इवार्णवमि,, त्युदाहृत्य तद्गतसत्कृतमित्यादिपदेन सूते आचार्यत्वं निरदेशि तदप्यनधिकारि-

ण्यलब्धगर्वे खलु सूते मुनिमण्डलीकर्मकोपदेशनव्यापारस्य स्वात्मनि कर्तृत्वमभिमन्यमाने चोच्छास्त्रप्रवृत्तिमिमामसहमानो भगवान् रेवतीरमणस्तस्य एव सूतस्य मूर्धानमच्छिनदत्युग्रेणाधिसदो हलेन निर्भेनेति विज्ञायतान्तावत् । वस्तुतस्तु व्यासप्रसादलभ्यनानागाथाकथनचातुरीविशेषजुषस्सूतस्य वदनादैतिहासिकीः शुश्रूषणाः कथा मुनयः केचिन्न तावन्मात्रप्रमेयावधारणादृते ब्राह्मण्योचितविहितप्रस्थानानामुपादाने सम्प्रवृत्ताः । तेषान्तावदुपदेशस्य ब्रह्मर्षिवदनारविन्दात्तैरासादितत्वात्तत एव प्राप्तव्यत्वविधानाच्च । न हि ऋषयो विहिताज्ञातिमुल्लङ्घयेयुः । अनृषित्वप्रसक्तेरपरिहार्यत्वात् । न वा प्रतिषिद्धं प्रतिपद्येरन् । प्रत्यवायापत्तेर्नागरूकत्वात् । तदिदमुक्तं लौकिकवार्ताविशेषकोटिकतामवसाय सूतमुखात्पुराणादिकं मुनयोऽप्यश्रौषुरिति युक्तमुत्पश्यामः । यच्चापि रुरोद पुनस्सुदर्शनः "परमर्षिप्रणीतानि व्याख्येयानि तेषाञ्च महर्षिप्रणीतानि व्याख्यानानि च सन्ति च तान्येवानुरोद्धव्यानि । न

४१ भगवत्पूज्यपादसर्वेश्वरत्वमज्ञातवतः श्रुतप्रकाशिकाकारस्य दुर्वचनपरीहारः ।

ह्यनृषेस्सूक्ष्मदर्शित्वम् । ऋषेरभिप्रायमृषिरेव स्वतो वेदितुमर्हति । न तु जडमतिरितरो जन" इति श्रुतप्रकाशिकायां तच्चापि वत्सवात्सल्यमालम्ब्य शमयितव्यन्तथा हि । भगवत्पूज्यपादास्तु श्रीमन्महेश्वरापरावतारतया स्वप्रयोज्यभूतनिगमान्तकल्पद्रुमफलसारमनितरयावदृषिगणचित्तारूढमद्वैतामृतधामानञ्च त्रिलोकीदीव्यन्मुमुक्षुमूर्धन्यसन्तृप्तिसाम्राज्यरञ्जनाय प्रायच्छन्नत्युच्चैरुत्तमाधिकारिभ्यः । तमिमं प्रधानीकृत्य वेदानेवादौ व्याचख्युस्सपरिकरम् । तदनुगीतादीन्स्मृतिभागान् । तदुत्तरञ्च ब्रह्मसूत्राणि । सूत्रार्थस्तु वैशम्पायनशुकर्षि-गौडपादाचार्य द्राविडाचार्यैरत्नाकर कैवल्यालय-कारिका-विवरणादिसन्दर्भदिवाकरगभस्तिभिरुद्दीपितः परमादरादद्वैतब्रह्मात्मभावसम्प्रतिष्ठः । तं खलु तत्वभूनमाश्वास्य स्वकीयेन स्वतस्सिद्धज्ञानज्योतिषा भाष्यं हि शारीरकमामापि भगवच्चरणैः । सत्यपि स्वस्मिन्नीश्वरत्वेऽव्याहते लोकानुग्रहमनुपालयद्भिः पूर्वाचार्यवाचोयुक्तीः प्रसङ्गसङ्गत्योदाजह्रुस्तत्र तत्र । तदादौ तु मङ्गलाधिकारे "यैरिमे गुरुभिः पूर्वं पदवाक्यप्रमाणतः । व्याख्याताः सर्ववेदान्तास्तान्नित्यं प्रणमाम्यहम् ॥ तैत्तिरीयकसारस्य मयाऽऽचार्यप्रसादतः । विस्पष्टार्थरुचीनां हि व्याख्येयं सम्प्रणीयते" इति तैत्तिरीयभाष्यारम्भ ऐककण्ठ्येनैवाद्वैतपरतया वेदान्तस्य व्याख्यातृभ्यो भगवत्पूर्वाचार्येभ्यो नमनञ्चाकुर्वन्नुत्तरकालीनस्यैवेतिकर्तव्यताप्रदर्शनपुरस्सरं तन्निरूपणानुरूप्येणैव सर्वशः । सत्यामेवं भगवताम्प्रातिज्ञा-

णां "शाबरशाङ्करयोस्त्वीश्वरानभ्युपगमाज्जीवब्रह्मभेदानभ्युपगमाच्च नमस्यानादरः" इत्याक्रन्दनं पुनः श्रुतप्रकाशिकाकृतो दीर्घतरासूयासम्प्राणितमुक्तपद्ये प्रशाम्यत्येव सोल्लासम् । जीवब्रह्माभेदस्यैव "तुषेण बद्धो व्रीहिः स्यात्तुषाभावेन तण्डुलः । एवं बद्धस्तदा जीवः कर्मनाशे सदाशिवः ॥ पाशबद्धस्तदा जीवः पाशमुक्तस्सदाशिवः । शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥ यथा शिवमयो विष्णुरेवं विष्णुमयश्शिव" इत्यादिश्रुतिशतेभ्यो वास्तवत्वे भेदस्य च "योऽन्यान्देवतामुपास्ते । अन्योसावन्योहमस्मीति न स वेद यथा पशुरेवं स देवानाम् । द्वितीयाद्वै भयं भवतीति" श्रुतिवाक्येभ्योऽकार्यकारित्वमिथ्यात्वयोः स्थिरतरत्वे अभेदं पुनस्सत्यत्वेनात्मत्वेन च विजानतात्र "स्वात्मनस्तु कामाय सर्वं प्रियं भवति । ब्रह्मविद्ब्रह्मैव भवतीति" श्रुतिविशेषपरिष्कृततत्त्वदृशामात्यन्तिकभक्ततया भेदन्तयोरभ्युपगच्छतां कल्पान्तेऽपीश्वरादूरत्वेनाभक्ततया च भिदावदां बत यूयमेवेश्वरानभ्युपगन्तारः । वयन्तु परप्रेमास्पदतया स्वात्मभूततया च ज्ञानैकचक्षुषा सर्वेश्वरं परं साक्षात्कुर्वाणा 'ज्ञानी त्वात्मैव मे मत' इतिभगवद्वचनानुगृहीता भक्ततमास्तत्त्वज्ञाः पुनर्भवाम इति स्पष्टम् । श्रीमत्पूज्यपादमुखाम्भोजनिर्यातानि तु स्तोत्राणि सर्वेश्वरस्य विजयन्ते हि जगत्यां सहस्रशो विद्वद्वन्द्यानीति नाप्रत्यक्षमपि वा जात्यन्धानाम् । शारीरके पुनर्विशिष्यमङ्गलाकरणकृताशङ्कैव न प्राप्नोति । तैत्तिरीयमाण्डूक्यतापिन्यादौ तस्य हि विहितत्वेन तेन च सर्वत्रैव गतार्थताकयोग्यतावत्त्वे भाष्ये तु तस्मिन्तदनाचरणगोचरशङ्काया अनुदय एव श्रेयान्विदुषां यतोऽध्यासभाष्यमारभ्यासमाप्ति शारीरकस्य परमात्मतत्त्वं ननु चिन्तितं परानुरागेणेति सिद्धतरोऽप्यर्थः पुनर्भक्ताभासान्प्रतिबोध्यते त्वदादीन् । तव चेश्वराभ्युपगमोऽनभ्युपगमप्रायो यतो भेदवादित्वादीश्वरमेव न विजानासि । ईश्वरतत्त्वं ह्युपवर्णिताभेददेहमेव न तु भेदमयम् । तथात्वे प्रयोजनाभावाल्लौकिकत्वाच्च । शाबरस्वामिनामशेषाम्नायपूर्वतन्त्रपारावारपारदृश्वनामाधिगतब्रह्मात्मैकत्वपरानुभूतीनान्तु त्वदीयवाक्चापलमानेनेश्वराभ्युपगन्तृत्वे त्वमेव सातानिविनेयो महेशाद्यशेषदेवताविद्वेष्टा विष्णोरपि भगवतः कारुण्यपराङ्मुखो जीवद्ग्राहग्रस्तस्वान्तमनसि वेदानप्यस्यसूयन्तन्नाम्ना द्रविडवाणीं गाथामयीञ्च श्रद्दधानो भवेरेव भवान्तरे वा कच्चिदीश्वरस्याभ्युपगन्ता ।

यत्तु पुनर्दमनकस्रोदरेण "शाङ्करग्रन्थोपक्रमे च व्याख्यातृभिर्नमस्काराद्य-

४१ तस्यैवहि-श्रुतप्रकाशिकायामपार्थान्तरव्यतिरेककारि: ।

भावात्कुमन्यत्वमाशङ्क्य युष्मदित्यादिग्रन्थेन प्रत्यगर्थानुमन्वानेनार्थान्मिङ्गलाचार: कृत इति परिहृतामि"ति निरदेशि तत्तु त्वदादिभक्तजडचेतश्चाञ्चल्यप्रशमनायैव। स्वतस्तु ब्रह्मतत्त्वामृतसरस्यनुपलमुन्मज्जताऽप्रत्युत तद्याथात्म्यभूतानामनुक्षणं मङ्गलाचारस्साहजिक एवेत्यवेहि वृद्धसेवया। परमर्षिणा व्यासाचार्येण प्रणीतब्रह्मसूत्राणामभिप्रायस्य भगवत्पूज्यपादा एव साकल्येन वेदितारो नेतरे। इतरे तु महर्षयस्ताभ्यां व्याप्यसत्ताकप्रज्ञाधीनप्रणयनव्यापारास्तत्र तत्र सङ्कोचमेवाभजेयुर्निरूपणवेलायामर्थतत्वस्य। तौ पुनरुभयै हरिहरयोर्ज्ञानावतारतयेतरेतरानिगूढाभिसन्धिबोद्धारावन्योन्यव्याख्येयव्याख्यानप्रक्रियाभरवोढारावाप्ततमावध्यवसीयेते। एवञ्च कृतमपि महर्षिणा केनचिद्व्याख्यानं ब्रह्मसूत्राणां तद्धि तावपेक्ष्यापरिपूर्त्तिकप्रज्ञामात्रतन्त्रत्वेन प्रमादविभेदान्न मुच्यत इत्याकलनीयम्। इत्थञ्च व्याख्यानस्य च तादृशस्य सत्वे नूनं सविगाने तदनुरोद्धव्यतानिर्विचिकित्सप्रमाणभावाय फलाय वा कथङ्कारमभिप्रेयेत वैदिकमार्गैकसमर्पितजीवनैरादृतमपि तद्वेदबाह्यपाञ्चरात्रिकैस्सामञ्जस्येन सर्वशः। न हि तादृशीणामप्यशेषाणामप्यनन्तार्थनिरीक्षणक्षमत्वम्। इतरथा शाकल्यप्रभृतयो महर्षयोऽतत्त्ववेत्तृतया याज्ञवल्क्येन महर्षिणा जनकमहापरिषदि विजिगीषुकथायां पराभूता एव न स्युः। तत्वतस्तु वीतरागकथैव सती सा अयाथार्थ्यविहितगणपराजयनिमित्तेन ह्यत्यासन्नेन विजिगीषुकथाव्यपदेशभागिन्यपि न वीतरागकथात्वव्याहतिस्तस्याः। एतेन ऋषेराशयमृष्यन्तरमवबोद्धुं प्रभवेदेवेति न शक्यते नियन्तुमिति फलिते यथाभूतशठकोपशिष्ययोर्युवयोः श्रीभाष्यश्रुतप्रकाशिकाप्रणेत्रोः प्रणयने तत्र कृतसाहसा मतिः कुमतिर्वा जडमतिर्वेति विदाङ्कुर्वन्तु विद्वत्तिकपारमानः। जडे ननु देहे तत्राङ्कनादिपामर्यप्रहारपराहता बत यूयं जडमतिमानवज्येष्ठबन्धुभावान्न मुच्यध्वे वा। न हि पदवाक्यप्रमाणज्ञशिरोमणयो भगवद्व्यासाचार्यसाक्षात्प्रशिष्यभूता हि 'गौडपादान्महर्षेरि' त्याद्यभियुक्तवचनबाहुल्यसङ्कीर्तितमहर्षिपदवीविराजमाना भगवन्तो गौडपादाः श्रीमन्महेश्वरैकज्ञानावतरणाः पुनर्भगवत्पूज्यपादा वैदिकराद्धान्तपरार्थैकनिर्धारकतया धरित्रीरोदस्योरुज्जृम्भमाणयशश्शशाङ्कशेखरासन्तस्तान्प्रति विरुद्धार्थप्रकल्पयितारो दुराग्रहगृहीतहृदयाः पण्डितमानिनः पाण्डित्यख्यापनपराश्च स्वप्रवृत्तौ स्वयमेव प्रमाणमिति प्रयुक्ता तु वचनव्यक्तिरुलूकगणैः प्रचण्डमार्तण्डमण्डले समारोपिततमिस्राराशिरिव

प्रयोक्तुरेव दिवान्धताङ्ख्यापयतीति न नः किञ्चिच्छिद्यते तज्ज्योतिर्दीपितपु-मर्थसम्भाराणाम् ।

यत्तु " पाराशर्यवचःसुधामुपनिषद्दुग्धाब्धिमध्योद्धृताम् । संसाराग्निविदीपनव्यपगतप्राणात्मसञ्जीविनीम् । पूर्वाचार्यसुरक्षितां बहुमतिव्याघातदूरस्थितामानीतान्तु निजाक्षरैस्सुमनसो भौमाः पिबन्त्वन्वहमि" ति श्रीभाष्यगतद्वितीयश्लोकेन व्याससूत्रवचनामृतपानस्य स्वप्रणीतभाष्यैकलभ्यत्वमथापि पुनर्निजपूर्वाचार्यसंरक्षितत्वादि तस्य प्रोदितमासक्त्या सर्वस्वन्तद्बन्ध्यामनोरथप्रवाहप्रसवप्रसक्ततांकाराश्च भियत इत्यभिधीयते तावत् । पूर्वार्धेन्तु श्लोकस्य समस्ताभियुक्तसमुन्नीतसूत्रस्तुतिताङ्कर्यरञ्जितात्मलाभत्वादनपूर्वप्रयोजनसहञ्च । उत्तरार्धं पुनः प्रतिविशेषणमुक्तोपमाविलाससलास्यमत्यर्थम् । वर्णितगत्या तस्य पूर्वाचार्याः शठकोपादय एव हि शूद्राः । तैस्तस्य हि रक्षा प्राकृतभाषालापैकदक्षैरन्तरिक्षे कृतेवेति मन्तव्या । भूम्यान्तथात्वे मानाभावात् । मानन्तु मन्यमानं वा विदुषामग्रे मानाभासमेव सद्धेतुभ्यो दर्शितेभ्यो दर्शयिष्यमाणेभ्यश्च । एवं सकलसम्मत्याघातनिहतत्वाद्व्याघातदूरस्थितिर्वाङ्मात्र एव वैभवमुपभुङ्क्ते न तु वाच्यविशेषे कस्मिंश्चित् । तस्य तु प्रागेव माध्यमिकसमाचारगामित्वस्योक्तत्वात् । असदर्थनिष्कृष्टानामक्षराणान्नाम निजानामनक्षरतरतयाऽऽनयनन्तदीयमक्षरं ब्रह्म नैव विषयीकुर्यात्तन्वपि । तदीयश्रीभाष्यग्राहमारुह्य प्रवर्तयतान्तावद्दुर्मनोदौरात्म्यस्यानस्थायिसुमनोव्यक्तीनाममङ्गलेऽपि मङ्गलपदव्यवहारनिर्ग्रहककुजापरपर्यायभौमग्रहविग्रहतयाऽन्तराल एव कवलीकारक्रियापात्रत्वाद्दुर्न्ध्याः । पानमपि मकरीफेनस्यैव तासाम् । श्रीभाष्यश्रुतप्रकाशिकयोरेवरूपमर्थतत्त्वमास्थाय धिक्कारकारिण आलक्ष्यन्ते पण्डितपतयः । एवञ्च द्वितीयश्लोकोऽप्यनुपादेयाभिधेयविशेषविषय एवेति फलितम् ।

*४४ श्रीभाष्यस्य-द्वितीयश्लोकार्थ-कृतप्रार्थनायाःप रीहारो विरसायाः*

ननु "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्सञ्चिक्षिपुस्तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्त" इति रामानुजप्रतिज्ञावाक्यमात्मप्रवृत्तिमूलीभूतबोधायनविस्तीर्णवृत्तिं ब्रह्मसूत्राणामथापि पुनः पूर्वाचार्यसङ्ग्रहन्तस्या उपजीव्य प्रवर्तितत्वग्रहग्राह्यात्मनः श्रीभाष्यनिर्माणादौ प्रामाण्यमात्यन्तिकमभिषेचयतीति । अत्र ब्रूमहे । इदमप्यतीतश्लोकार्थे निर्वर्णितदूषणपारम्परी-

*४५ श्रीभाष्यव्याख्यानप्रतिज्ञानस्य हि लक्ष्मणदासस्य बौधायनस्वरूपविवेचनेना प्रामाण्यस्य पर्यवसानम् ।*

व्याहन्यमानत्वादग्राह्यविषयावलीविग्रहत्वाच्च न्यक्कारप्राग्भारभूमिरेव वस्तुत । अत्रैतच्चिन्त्यते किमसौ बौधायनः कल्पसूत्रनिर्मातुर्बौधायनाद्भिद्यते उत स एवायमाहोस्वित्स्मृतिकारो वा एष इति । न द्वितीयः । द्वयोरप्यैक्यत्वे साधकमानाभावात् । नापि तृतीयः । तत्रापि तथात्वात् । परिशेषादादिम एव कल्पो वस्तुतत्त्वव्यपेक्षी समीक्ष्यते । तत्रापि ऋषिर्वा आहोपुनरर्वाचीनविद्वद्वर्गीय इति । नाद्यः । ऋषेर्वेदबाह्यवृत्तिप्रणयनप्रवृत्तेरत्यन्तासम्भवात् । न द्वितीयः । अर्वाचीनविद्वन्निकरेष्वेतन्नाम्नोऽनुवादलेशस्याप्यविषयत्वात् । न ह्यानुवादकप्रामाणिकवाचमन्तरा प्रतिपत्तिदार्ढ्यायावकल्प्येत कश्चिदर्थो विदुषामग्रे । यदि महर्षिः कल्पसूत्रकारःस्मृतिकृच्च बौधायनो वृत्तिप्रणेतोच्येत सहसा तदा वृत्तिकल्पस्मृतीनां निरूढार्थप्रतिपादनपरिपाटीपर्यालोचनया विप्रतिपेधो विरोधश्च मा भूताम् । तौ च त्वदुद्घोषणमाकर्ण्य विचारमवतार्य क्षिप्रमेयेते तदा इतरेतरबलवत्तरविरोधविप्रतिपेधप्रतिपदनर्तनमनुपदमनुभूयमानं दुष्परिहरमेव भवेत् । यदि च श्रौतसूत्रकृद्बौधायनं दुरावेशाद्वृत्तिकारं मनुषे तर्हि द्वयोरपि वाण्योर्वैखरी न भिद्येत भिद्यते च तद्वचनतया तत्र तत्र त्वदुल्लिखितवाचस्स्वरूपपरीक्षणेन निश्शङ्कम् । भवाननालपति बौधायनकृतवृत्त्यनुसारेण सूत्राक्षराणि व्याख्यास्यन्त इति । व्याख्यानानि च कृत्स्नान्येव तानि विष्णुदेवतापरतया त्वया । तस्मादतिरिक्तस्य भगवतो महेश्वरस्य सर्वेश्वरत्वमपलापितं पुनरत्याग्रहेण । बौधायनेन तु कल्पसूत्रस्मृत्योर्निर्माता तयोर्ग्रन्थयोर्हरिहरयोर्महिमातिशयस्वरूपैपम्यं ननु न न्यरूपि । यद्धि निरूपणमभ्यधायि तद्धि तयोस्स्वकीयोपास्यभावस्य सममात्रयाथार्थ्यावीनिवेदनसमुत्कम् । यथोक्तं चयनप्रकरणे ऋतपेयादिकल्पे "शतरुद्रीयं जुहोति अर्तिलयवाग्वा वा गवीधुकयवाग्वा वा जर्तिलैर्गवीधुकसक्तुभि· कुशवसर्पिषाऽजाक्षीरेण मृगीक्षीरेण वाऽर्कपर्णेनोदङ्ङतिक्रम्नुत्तरस्य पक्षस उत्तरापरस्यां स्रक्त्यां विकर्ण्यां स्वयमातृण्णायामनुपरिचारं वा । नमस्ते रुद्र मन्यव इत्येताननुवाकाँश्चैवं विभज्यापि वा प्रथमादुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो रथकारेभ्यश्च व इत्युपक्रम्य नम स्वायुधायेति नाभिदघ्ने शेषेण प्राग्वतानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशाऽवतानान् हुत्वाऽन्वारोहान् जुहोति नमो रुद्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येऽन्तरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने

हुत्वैतानेव यजमानं वाचयित्वा एतानेव विपरीतान्प्रत्यवरोहान् हुत्वा सञ्चरे पशूनामर्कपर्णमुपदस्यति यं द्विष्यात्तस्य सञ्चरे" इति भगवता बौधायनेन । शुल्वसूत्रेऽपि रुद्रदेवताकं तावद्धोममास्थाय कुण्डादिव्यवस्था यथावद्विहिता । कर्माङ्गसूत्रेषु तु प्रसङ्गवशात्तन्निरूपणमस्त्येव प्रायः । तेष्वेव पुनस्तथाविधेऽधिकारे यथाश्रुतं विष्णोर्भगवतो होमादिकं निर्द्वन्द्वधिया स चासौ वर्णयाञ्चकार । गृह्यसूत्रेष्व "थातो रुद्रस्य भगवतोऽर्चनाविधिं व्याख्यास्यामः। अथातो विष्णोर्भगवत उपासनाविधिं व्याख्यास्यामः। अथातो महादेवस्याऽहरहः परिचर्याविधिं व्याख्यास्याम" इत्यादिना वचनजातेन महादेवादिपञ्चदेवतानामर्चनविधानमसूत्रयत्सोऽयं यथान्यायम् । स्मृतौ किल 'तदीयायां पञ्चयज्ञनिरूपणपरिसमापनोत्तरं "पूतः पञ्चभिर्ब्रह्मयज्ञैरथोत्तरन्देवतास्तर्पयति । अग्निः प्रजापतिस्सोमो रुद्रो०ओं वसूंश्च तर्पयामि । ओं पितरोऽर्यमा भगः सविता०ओं रुद्राँश्च तर्पयामि । मित्र इन्द्रो महापितर आपो विश्वेदेवा ब्रह्माविष्णुरित्येतानि०ओं आदित्याँश्च तर्पयामि । ओं विश्वान्देवाँस्तर्पयामि । ओं सद्योजातं तर्पयामि । ओं सत्यं तर्पयामि । ओं भवं देवं तर्पयामि । ओं शर्वं देवं तर्पयामि । ओं ईशानं देवं तर्पयामि । ओं पशुपतिं देवं तर्पयामि । ओं रुद्रं देवं तर्पयामि । ओं उग्रं देवं तर्पयामि । ओं भीमं देवं तर्पयामि । ओं महान्तं देवं तर्पयामि । ओं भवस्य देवस्य पत्नीं त० । ओं शर्वस्य देवस्य पत्नीं त० । ओं ईशानस्य देवस्य पत्नीं त० । ओं पशुपतेर्देवस्य पत्नीं त० । ओं रुद्रस्य देवस्य पत्नीं त० । ओं उग्रस्य देवस्य पत्नीं त० । ओं भीमस्य देवस्य पत्नीं त० । ओं महतो देवस्य पत्नीं त० । ओं भवस्य देवस्य सुतं त० । ओं शर्वस्य देवस्य सुतं त० । ओं ईशानस्य देवस्य सुतं त० । ओं पशुपतेर्देवस्य सुतं त० । ओं रुद्रस्य देवस्य सुतं त० । ओं उग्रस्य देवस्य सुतं त० । ओं भीमस्य देवस्य सुतं त० । ओं महतो देवस्य सुतं त० । ओं रुद्राँश्च तर्पयामि । ओं रुद्रपार्षदाँस्तर्पयामि । ओं विघ्नं तर्पयामि । ओं विघ्नपार्षदांश्च तर्पयामि । ओं सनत्कुमारं तर्पयामि । ओं स्कन्दपार्षदांश्च तर्पयामि । ओं आदित्यं तर्पयामि । ओं केतुं तर्पयामि । ओं केशवं तर्पयामि । ओं नारायणं त० । ओं माधवं त० । ओं गोविन्दं त० । ओं विष्णुं त० । ओं मधुसूदनं त० । ओं

४६ महर्षेर्बौधायनस्य कल्पसूत्रकृतोऽनुवर्तनेन भगवत्पूज्यपादवैदिकराद्धान्तानुयायितैव सिद्ध्यति न तु जातु विडम्बनाभूमेर्वैष्णवमतस्येति फलितोर्थः ।

त्रिविक्रम त० । ओं वामन त० । ओं श्रीधर त० ।ओं हृषीकेशं त० ।ओं पद्म नाभं त० । ओं दामोदर त० । ओं श्रिय देवीं त० । ओं सरस्वतीं देवीं त०। ओं पुष्टिं त० । ओं तुष्टिं त० । ओं विष्णुं त० । ओं गुरुत्मन्त त० । ओं विष्णुपार्षदाँश्च त० । ओं विष्णुपार्षदीश्च तर्पयामी" त्यादिना तर्पण देवताना मुस्पष्टम् । ताश्चेमा देवता वसुरुद्रादित्यविश्वेदेवमहादेवविघ्नेश्वरस्कन्दपार्षदरूपा अत्रेह तर्पणक्रियागोचरतया निर्ज्ञायन्ते । न च ताद्रूप्येण निर्ज्ञातानाममूषान्तर्पणातिक्रमण न्याय्यम् । एकत्रानाश्वासे मुनेर्वचसामितरत्राप्याश्वासनविषयकवाक्यो द्वारस्य सर्वत्रैवानाश्वासैकवर्गीयत्वस्यानुभविकत्वात् ।

ननु नो वैष्णवानामनन्यसाधारणोपास्तिमतामेक एवास्ति श्रीपतिरुपास्यः उपासनान्तरानानुवर्तन वा नालङ्किल दोषायेति चेन्मैवम् । बौधायनवचनव्यक्त्युपजीव्यताकीर्तनस्यालीकभारवाहित्वव्यापारमात्रव्यञ्जकत्वस्य प्रकृतत्वात् । न हि वैष्णवतामिषेण विहिततरशिवाद्याराधनानुपादाने किञ्चिदस्ति वचो निर्णायकं मुनेर्यतस्सो ऽय स्वयमेव हरिहराद्याराधने बद्धादरो विशिष्टश्रद्धाविधायि वाग्म्य एव स्वकीयाम्य । सति चानादरे तवेव तस्यापि तत्र प्रवर्तनानुरूपवचनप्रणयनप्रवृत्तिस्सुतरामेव नाभविष्यत् । भवन्ती सा स्वात्मानमितराँश्च तदनुष्ठान अविशेषेणाधिकरोतीति वचनप्रवृत्तिसामर्थ्यादधिगच्छाम । त्वद्वेद च्चसि वैष्णवमानितामुदितार्थदुरावेशतान्तदा त्वदुच्छास्त्रवर्तनाशीजिनि मुनौ तस्मिन्दातक्षतत्त्वस्त्वन्नापाक्कृतो न शक्नुया आपादयितुम् । न च बौधायनो मुनि धर्मशास्त्रकारस्स्मृतिकारश्च सन्सामान्येन शैववैष्णवादिधर्माणामाचाराणाञ्च प्रतिपादयिता धर्मान्नो वैष्णवानान्न निरुणध्यसाधारण्येनेति प्रतिपत्तव्यम् । एतदीयस्वपसूत्रस्मृत्योस्त्वदालापितविषयाणा वैष्णवेषु धर्मतयाऽऽचारतया च नितरामेवानभिधानात् । त्वदाद्यर्वाचीनैर्वैष्णवमानिमानवसमाचाराणामादिमध्यावमानेष्वेकतमस्याप्यस्पृष्टत्वाच्च । न हि तेनार्पिणा अस्पृष्टाँस्त्वधार्न्स त्वं हन्त तत्पादरजःकणालीपरिसेवी सस्पष्टु वा पारयसि । ततो नाद्यान्वत समाचारानारचयन्वा त्वं तमेतन्निजमूलिनमाचक्षाणो गुरुद्रोहेव किन्न स्याः । भवन्नेव द्रोहिजने किमिति वृत्तिन्तस्य नाम्ना वा गृह्णासि । गृह्ण-वा नैकन्तत्र प्रकरण निरूढमपि पालयसि। पालनाभावाद्द्रोहितरः कुतो न त्व भर्त्सनापात्रं भवे । भवस्येवासमन्ताद्दृष्टे पुरो

४७ वहतत्वदूषणा पावनमुखन बौधायनवृत्ते शरण्य सङ्कीर्तन किल रामानुजस्या,प्रामाणिकामिति सारार्थ ।

षीरविचारकाणां निरपायम्। यत्तु ऋषिरेवास बौधायनो द्वैपायनाचार्यशिष्यभूतोऽथ जैमिन्यादिवर्गैकसमावेशीति तत्तु कल्पसूत्रकारमेव भगवन्तं बौधायनं स्वेतरशिष्यपुङ्गवजैमिन्यादिभिवाविरूपप्रवृत्तिप्रसाधकत्वादभिधत्त इति परिहर्तव्यम् । न तावद्दपिषु कल्पसूत्रप्रणेतुर्बौधायनादस्ति कश्चिदन्यस्तन्नामा वृत्तेर्वा वर्तयिता तस्याः । तथा सति निराक्रियान्तस्या नाचरिष्यन्नद्धा भगवन्तो भाष्यकाराः । निराकृतवन्त एवाग्रहमैरपार्थतयां तां प्रत्यर्थं शारीरकमीमांसायाम् । वस्तुतस्तु समुच्चयादिविषयविशेषपराभूतहृदयोऽपि न सर्वात्मना बभ्राम बौधायनो निरूपणीयवस्तुविभेदप्रस्थानिकासु स्वात्मीयासु । अयं पुना रामानुजः प्रतिज्ञाय तद्वृत्त्यनुसारिस्वव्याख्यातृभावोऽपि यथेष्टचेष्टाकप्रतिपादनाधीनात्मविन्यासवासनः कालुष्यमेवापादयामास ताम्प्रत्यासन्नतरमिति नाऽङ्क्षि लोकविमोहनैकहेतवे कृतं नाम्ना केवलमनुसरणन्तदेतद्बुद्धिप्रत्ययमुत्पादयितुं व्याख्यावत्ताञ्जातुचिदिति स्थितम् ।

४८ पुनरपि दर्पणोक्तसमुद्राकर्मणो निराकरणोपक्रमः ।

यदप्युक्तं दासभूतस्वस्वामिस्वाम्युपगमप्रसञ्जितविष्णुविषयकविरूपप्रीतिरूपापन्ना तैलधारेवाविच्छिन्नस्मृतिसन्ततिर्भगवद्भक्तिरिति तदप्यपेशलम् । विष्णोर्भगवतः स्वरूपापरिज्ञानलक्षणतमिस्रापराच्छन्नत्वादेवाष्टमूर्तेपराराधनमहोदयैकाविमुखानान्तावद्वैष्णवंमन्यानाम् । भक्तिश्च सा वेदबाह्यैकप्रकारपर्यवसायिनीति निरस्ता पुरस्तान्न प्रस्मर्तव्या । न च भक्तिश्चक्राद्यङ्कनाङ्किताऽवकल्पते । तथाविधायाश्चतुष्पदेष्वप्यनायासप्रचारगामित्वादामयोद्रेकपराभूतवेलायां वाऽतितराम् । न च पुनः सा तेषु पीडामधिकृत्य प्रवर्तमाना नार्हत्यनया साम्यं मनागिति भूमितव्यम् । कृतेरेतस्याः परिणतेः समानस्कन्धत्वात् । न हि प्रमाणपरिणामयोः परीक्षितारः प्रमाणपदवीपाद्यं तमपि परिणामाद्भूते रूपान्तरेण केनचिल्लक्ष्यीकुर्युरयथार्थात्मना ।

४९ दर्पणोक्तयुक्तीनां विशिष्यैव प्रतीकारप्रकारः ।

यदप्येतदुक्तं "विद्या विभूषणं पुंसस्तस्या वृत्तं विभूषणम् । विष्णुभक्तिर्विभूषाऽस्य सा चक्राद्यङ्कभूषणे„ ति भारद्वाजसंहितावचनतया तदप्युपहसनीयमूषाहेतुहेतुमद्भावविकारचेष्टितं प्रतीयते । स्मृतिसन्ततिरूपायाः किल भगवद्भक्तेस्तद्धेतुकायाः पुनर्मानस्याः कायिक्या तया चक्राद्यङ्कनात्मिकया परं विरुध्यमानत्वाद्धिक्कृततरचेष्टया विचारोज्झितमानसानाम् । न हि विद्यावृत्तादीन्यादरातिशयैः समर्थयन्तः पुरुषार्थिनश्चक्राद्यङ्कनं च तत्कोटिकतया विदधानाः क्वचिद्दृश्यन्ते धर्मज्ञाः । यद्युच्येतोत्सुक्येन विद्यावृ-

त्तादिभ्योऽप्यङ्कनमेव विशिष्यते तच्चास्माभिरनुष्ठीयत इति तदुयुक्तगुणवि-
हीना गृहपशवो द्वाराणि वा हन्ताङ्कमवन्ति त्वचोऽपि विशिष्येरन्नेवानवरतम् ।
न हि भक्तिप्रस्तावे विष्णोर्विनेव सा चक्राद्यङ्कनमशोभनेति क्वचिद्वोच्यते स्मृ-
तिषु विष्ण्वादेः परमैर्वा कस्य चित् । न हि तैरनुदिनस्त्वर्थस्सर्वशो भारद्वाजेनो-
पनिबद्धः स्यात्साहसमात्रेण । यदीदमापाततो वाऽभिमन्येत तदा कल्पेऽपि तदीये
विष्णुदेवताकयजनाधिकृतयजमाननियतगुणगणान्यतमतया चक्राद्यङ्कनमप्यभ्य-
र्हितं स्यादेवातीव । नाभ्यंधादेवाणुतरं वै तदित्युदितार्थविरुद्धार्थमापित्वाद्वचनमेत-
द्वचनमेव मुनेर्भारद्वाजस्य सत्क्षेपकवर्गीयमेवालक्ष्यते फलतः । नन्वेवमपि "दा-
सभूतं यदात्मानं बुध्येत परमात्मनः । तदैव गात्रं कुर्वीत शङ्खचक्रादिलाञ्छि-
तम् ॥ ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः । चक्राद्यैरङ्कयेद्गात्रमात्मीय-
स्याखिलस्य च ॥ अनिष्टानां निवृत्त्यर्थमैकान्त्याय जगत्पतेः । सिध्यर्थं कर्मणाञ्चैव
धार्यं चक्रादिलाञ्छनमि" त्यादिकमुदितसंहितासन्दृब्धं किमात्मकं स्यादिति चेन्निर्-
णीततद्वचस्कीकारप्रक्रियासंवेदनाधीननिरूढमस्यैव निरात्मकता तस्या अभ्रान्तमव-
सीयतान्तावत् । न हि भ्रान्तावपयातायामभ्रान्तिः स्याददृष्टचरी । प्रतिरोध-
कसामग्रीसमपहारप्रयुक्तत्वादेव यथावस्थितवस्तुव्यवस्थानप्रतिपत्तेर्नगत्याम् । न
हि तावद्दासभावाभिमानिन्यात्मनि तदादिलाञ्छनापरिष्कृते तेन पुनः सुपरिष्कृतः
कार्यो भस्मान्तप्रत्ययपरामर्शमात्रमवेदर्थं कश्चित्प्रसाधयितुम् । अप्रयोजकता-
त् । न वा भूसुरादयो नारीपुरोगमा वा स्मृतिभिर्विहितकर्मसु विनियुज्यमाना अ-
विहितेऽर्थे प्रकृते लाञ्छनात्मन्यनर्थमूर्धन्ये चार्हन्ति प्रवर्तयितुं लोकतो वेदतो
वा । न वा लोकाः शिष्टाः पुनर्वेदा नूनं माङ्गलिकेतरे कर्मणि प्रतिपत्तृजनानुत्ते-
जुमुत्सहन्ते प्रस्तुततरे । आप्तत्वादाततमत्वाच्च । न च प्रकृष्टप्रभावब्यपाश्रय-
विग्रहवन्तो ब्राह्मणादयो योषिन्मुखा वा लावण्यकारुण्याद्यतिशयसदना निरुक्तवि-
क्रियाविषया इष्यन्ते जातु चित् । अवधार्हदेहावयवेषु योषाव्यक्तीनां वधबाहुल-
कप्रत्ययमन्तानस्य वपुर्दाहलक्षणचक्राङ्कनकर्मणः प्रनिबद्धतरत्वात् । निगृह्य त-
न्नियोजनं तासां मौढ्यायैवालं योजकजनस्यात्यन्तम् । न ह्यनिष्टात्मकेनाङ्क-
नकर्मणा तन्निवृत्तिरैकान्त्यं वा विचारार्हम् । तयोस्तावदङ्कनयोगादेव प्रतिनि-
वृत्तकत्वात्कर्मसामान्यं प्रत्युपरधरित्रीपरपरिपाकभावित्वाच्च । न चाङ्कनात्मकं
कर्म पारमैकान्त्यहेतुभूतमुपपद्यते कथञ्चिदपि । न वा तस्य मोक्षप्रसाधकता

युक्तियुक्ता । तत्प्रयोजकविज्ञानवारिधारामलिनीभावसमापादकसामग्रीशीर्षण्यत्वादु-त्काङ्कनदुर्वासनानालिकायाः । न चेमं चतुष्पादप्रचारं प्रकृत्य प्रवृत्ता काऽपि वा गीताऽस्ति भगवतः । नो खल्वेते "दैवी ह्येषा गुणमयी । अनन्यचेतास्सततं । महात्मानस्तु मां पार्थ । अनन्याश्चिन्तयन्तो मां । भक्त्या त्वनन्यया शक्य । मय्येव मन आधत्स्व । मां च योऽव्यभिचारेण भक्तियोगेन । ततः पदं तत्परि-मार्गितव्यं । तमेव शरणं गच्छ सर्वभावेन । सर्वधर्मान्परित्यज्य" त्युपदर्शितगीता-गीर्ष्वेवकारानन्याव्यभिचारैकादिशब्दा वासनान्तरप्रविलोपनपरमोद्योगसमभिधातार एव सन्तः स्वेतरभक्तत्वव्यवच्छेदपूर्वकभगवद्भक्तत्वलक्षणपारमैकान्त्यप्रतिपादकाः क्वचिदभिसम्पद्यन्ते । नापि त्वदभिप्रेतापेक्षिकवैष्णवपदप्राप्त्यभिलापका भवेयुरेते वचननिवहाः मुहुर्भूत्वा वा । तत्त्वस्य तु निरुपचारस्य वैष्णवादिपाक्षिकसरणिसा-मान्यविदूरगस्य तेषामैकान्तिकाभिप्रायविषयत्वात् । इतरथा विनिगमनाविरहेण शै-वशाक्तादितत्त्वोद्वयनस्य तत्तद्वाद्यभ्युपगमसन्निवेशविशालशालिनः सावकाशताप्र-तिपत्तिः स्यादेवाप्रत्यूहा । न ह्यनक्षदोलान्दोलनविधानेनादृतमुदाहरणं गीताया उदाहर्तुस्तनोऽन्यथाभावमभिदध्यात्पुरो विचारराञ्जितानाम् । अनर्थे पुनरपार्थे य-थेच्छं योजनविधातुः पीयूषवचनानां हालाहलैकरसविपाकभोक्तृत्वादनुमत्ययम् । कर्मोपासनाज्ञानकाण्डाश्रितैकलक्षणतात्त्विकप्रस्थानपरभागप्रद्योतनाधीनप्रतिज्ञाभरभू-तया नूनमेताः प्रपन्ने भगवद्गीता इति नैतासामितोऽतिरिच्यमानदुर्हृदयदुरावेश-वासितः कश्चिदर्थो देहदाहाद्यात्मा भवेद्गोचरो जातुचित् । न च करणत्रयभावि-तभावनारमाकाणां तावत्तनोऽन्यथासिद्धतप्तानिन्ह्वारणपुरोगमाश्चेष्टाः खलु विकृत-गतिकशीकारकरालजिह्वावल्यः प्रभवेयुः स्थापयितुं भगवन्मात्रभक्तत्वलक्षणपारमै-कान्त्यं कल्पान्ते वा तस्य व्याध्याधायकस्तुत्रूतप्रयमापत्त्यत्वात् । वर्चस्काद्यबाधिता-सन्दिग्धविश्वजनीनदौर्गन्ध्यप्रत्ययवत् । तादृशस्यास्य निरर्थकहेतुताभङ्गनस्य श्रुत्वाणा हि

५० सप्ताङ्कनस्यु-त्पातित्यापादक-वाक्यावगाहनमु-पपत्तिपूर्वकम्।

वाचो विपरीता- सहेतुःकृपङ्कारं मोक्षनिदानभावमप्रतिबद्धमनि-यन्धकृताच्छेदकधर्मप्रत्ययसमास्पदाः पुनः पारमर्ष्यः । यथोक्तं "पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथापि वा । वाङ्मात्रेणापि नार्च-त पाखण्डाचारतत्परम् । शूद्रवत्स परित्याज्यो जीवच्छवसमाकृतिः । तस्मै दत्तं च हव्यं च कव्यं चापि वृथा भवेत् । तद्दर्शनात्परित्याज्यमन्नं मन्त्राभिमन्त्रितम् । अपि शूद्रसगाद्भुञ्जीत छिन्नचक्राङ्किनं विना । अपि चेन्निगमाचाररतो वेदाङ्गतत्प-

रः । शङ्खचक्राङ्कमात्रेण स सद्यः पतितो भवेदिति" बृहन्नारदीयवाक्यराशिना
नन्वेतेन पातित्याद्यनेकापत्तिप्रयुक्तदौर्गत्यविशालसद्माऽयमङ्कितगात्रो निर्वर्णित ए-
वेत्यवधेयम् । एवञ्च चक्रादिलाञ्छनधारणाभिमानिमानवगणस्य च वैष्णवदीक्षादुर्नि-
वारदुरावेशचापलस्य वस्तुतो विष्णोरपि भगवतो चिद्रूपकस्याष्टमूर्तेः सर्वान्तर्यामिणः
परागवदनपरम्परावज्ञनमतिचाञ्चल्यसहस्रपरितुन्दिलस्याथ श्रौतवर्त्मप्रभ्रष्टस्य य-
माल्यैकसङ्कल्पमनिमानिकेतनस्य का नु खल्वसौ मोक्षप्रत्याशेति विदाङ्कुर्वन्तु वि-
चारचतुराः । यत्तु "वैष्णवः परमैकान्ती नेतरो वैष्णवः स्मृतः । नावैष्णवो
व्रजेन्मुक्तिं बहुशास्त्रश्रुतोऽपि वेति" हारीतस्मृतिवचनोपन्यसनं तत्तु याज्ञवल्क्या-
द्यशेषस्मृतिकारानुवादाविप्रतिपिद्धत्वादनाश्वासार्हमेवेत्यवधारितं प्रागित्यपि न
प्रस्मर्तव्यम् । सत्यप्येवमबोधदुर्बोधपङ्कप्रदिग्धधीनिचेष्टितैरत्र वैष्णवंमन्यैरनन्यभाव-
प्रकाण्डैकपरिष्कृतात्मनामपि वेदादिवचसामपार्थीकरणप्रयत्नातिशयसमूलोन्मूलना-
यावतार्यते विषयविभेदस्तथाहि । नो खलु श्रुतिभिर्याभिस्तप्ताङ्कनप्रक्रियासम्पर्क-
सामान्यविधुराभिस्तदङ्कनविधानानिरूपणं प्रतिज्ञायते । तासामेव दारुधियाऽध्य-
स्यमानग्राहविभेदस्थानीयानाङ्कवलीकारे क्रियाकर्मीभूतता तावद्यथावत्तज्जातीयमान-
वानामपरिहार्या समुपजायते । ता एताः "पवित्रन्ते विततं ब्र-
ह्मणस्पते" इत्येवमाद्या अभिगम्यंते श्रुतिवाचः । कुत्रत्येयमृगि-
ति चेद्बह्वृचसंहितायास्सप्तमाष्टकतृतीयाध्यायाष्टमवर्गे प्रथमैवा-
सावसीयते । इयं पुनर्यजुरारण्यके तैत्तिरीयकाणामादिमप्रपा-
ठकैकादशानुवाके परिपठ्यते सामसंहितायाञ्च । न हि त्र्य्यामेतस्यां महीयमाना
नूनमियमात्मप्रक्रियामनन्यसाधारणीमृते प्रक्रियान्तरमज्ञमनचेतश्चाञ्चल्यैकमत्यव-
स्थापितं वा नन्वङ्कनं सहते प्रवर्तयितुम् । अतात्त्विकत्वादन्याय्यत्वाच्च । न चैषा
स्वात्मगतपदान्यतमेन वृत्त्या वा कया चिद्विनियोगमुद्रया वा कल्पसूत्राणामात्मस-
त्ताऽतिरिक्तसत्ताप्रसारनिर्निबन्धनिर्बन्धिन्या पार्यते ऽर्थान्तरं प्रति परिणेतुम् । न ख-
ल्वङ्गं किल वेदानाङ्कल्पादिभिरङ्गी स्वयं वेदो निरूढाभिधेयकैवल्यात्मसमालम्बी
सन्दुर्मतिकल्पनापल्लवसमुल्लासानामवकाशं यच्छेज्जातुचित् । अन्यथाऽन्यथाप्रती-
तिशरीरस्यार्थानामनवस्थितवस्तुस्वरूपपर्यवसायित्वात् । न चेह विरहय्यार्थान्तर-
मङ्कनाभिधेयनिष्पादनैकनिष्णाता ह्यसौ "पवित्रन्त,, इति मन्त्रविशेषश्चकास्तीति स-
न्तोष्टव्यम् । कल्पान्तेऽप्येतदर्थप्रसारगन्धस्यास्यात्यन्तिकभावाभावात् । अत एव

५१ "पवित्रन्त,, इति मन्त्रस्याऽङ्कनकर्मण्यपार्थीकरणचेष्टित मनु वादिनो विनाश्यते यावत् ।

पवित्रन्ते विततं ब्रह्मणस्पत" इति "द्वे वियत्पवित्रं धिषणा अतन्वते" त्यृक्-रूपयत्प्रयोगमत्रभवानाश्वलायनः । सूक्तं चेदं पवमानसोमदेवताकं नाग्निदेवताऽत्रास्ति प्रकृता । न ह्यप्रस्तुतोऽर्थोऽप्रस्तुतात्प्रकरणात्प्रतिपत्तुं पार्यते । इतरेतरसंसर्गसामान्याऽनवच्छिन्नत्वात् । इतरथा सूक्तात्सर्वस्मात्सर्वस्या एव देवतायाः स्वस्वाभिमतिगृहीतायाः परिग्राह्यतापत्तेरपरिहार्यत्वात् । कल्पसूत्राणाञ्चासङ्कीर्णव्यवस्थाविधानफलभाग्यपृथक्त्वयागव्यवहारभेदभिन्नमर्यादाया विलोपापत्तेश्च ।

ननु भरद्वाजादिसंहिताविघृतचक्राङ्कनक्रियाविधानपरतया संयोजिताः खल्वमी पवित्रन्त इत्याद्या मंत्रास्तापसंस्कारसंस्थापका एवेति चेन्नैवम् । अतीततरकल्पसूत्रकृतां तावदाश्वलायनशाङ्खायनबौधायनापस्तम्बकात्यायनलाट्यायनद्राह्यायणशौनकपिप्पलादपुरोगमानां युगान्तरोद्भूतकल्पसूत्रानिरतिशयाभिसन्ध्यन्यूनानतिरिक्तव्यवस्थाकतया ततो विपर्यस्तप्रत्ययाधायकवाक्यकदम्बस्योल्लिखितसंहितादिघटकस्याकिञ्चित्करकार्यजातजाड्यैकदूषितत्वात् । गृह्यसूत्रेषु वा तेषां निषेकादिश्मशानान्तसंस्कारकलापप्रद्योतकेषु तप्ताङ्कनं वा तद्विधानपरिचोदकतया "पवित्रन्त" इत्यादिमन्त्रोपन्यसनं वा षष्ठप्रमाणगोचरञ्च यतः । एभ्य एव वा प्रधानहेतुभ्यस्सर्वसम्प्रतिपन्नप्रमाणभावभावितेभ्यः प्रवृत्तिरेषाऽर्वाचीनमतिमतां तत्परतयोक्तमन्त्रतात्पर्योपवर्णनाचिन्हा बाह्यैव मानोपपत्तिभ्यामाज्ञायते । सति चैवमङ्कनकर्मण्युदिताम्नायवाचां नयनव्यवहारोऽसावन्यायिनामन्याय्यतर इति स्थिते तत्पक्षाभिमानिदुरालापविभेदाः पराक्रियन्ते तथाहि । यत्तु ब्रह्मणस्पतिपदमृग्गतमुपवर्णितं चतुर्मुखनियामकपरतयेति तन्नोपपद्यते तस्य तु सूक्तस्योपक्रमपरामर्शोपसंहारैरप्रस्तुतत्वादेवाभिप्रेतस्य हि विष्णोः । न चाभिप्रेतमुपजायते वस्त्वप्रस्तुतपदाधिरूढं सजनातुचित् । यदपि विवृतं प्रभुपदं सर्वनियामकव्यवस्थात्मतया तदप्युक्तगत्या गत्यन्तरेण चाऽर्थान्तराभिधाननिग्रहपरिणीतिप्रयुक्तेन व्युदसनीयमेव । समन्वयासङ्गतेः । ततः सार्वविभक्तिकत्वेऽपि विश्वत इत्यस्य न विश्वेषामित्यादिविवृतिस्समुदितनिर्मोक्षा । विधेयगात्रस्यैव वैकल्यातिशयपराहतत्वात् । न चापि जीवशरीराण्युद्दिश्य विधेयभावासम्पृक्तानि गात्रपदाभिधेयभूतानीति साम्प्रतम् । असाम्प्रतिकत्वात् । न हि पर्यायशब्दमात्रान्तर्यामितया व्याप्नोतीति विवृतिलिप्सत्वणुतरां वा ऽन्तर्याम्यादिप्रकरणाभावादेव नितराम् । अत एव " अन्तः प्रविष्टः शास्ता जनानाम् । ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ,, तीति श्रुतिस्मृतिप्रमाणोपवर्ण-

रः । शङ्खचक्राङ्कमात्रेण स सद्य पतितो भवेदिति'' बृहन्नारदीयवाक्यराशिना नन्वेतेन पातित्याद्यनेकापत्तिप्रयुक्तदौर्गत्यविशालसद्माऽयमङ्कितगात्रो निर्वर्णित एवेत्यधेयम् । एवञ्च चक्रादिलाञ्छनधारणाभिमानिमानवगणस्य च वैष्णवदीक्षादुर्निवारानुरावेशचापलस्य वस्तुतो विष्णोरपि भगवतो विद्रूपकस्याष्टमूर्ते सर्वान्तर्यामिणः परागवदनपरम्परावञ्चनमतिचाञ्चल्यसहसूपरितुन्दिलस्याथ श्रौतवर्त्मप्रभ्रष्टस्य यमालयैकसङ्कलतनिमनिकेतनस्य का नु खल्वसौ मोक्षप्रत्याशेति विदाङ्कुर्वन्तु विचारचतुराः । यत्तु "वैष्णव परमैकान्ती नेतरो वैष्णव स्मृतः । नावैष्णवो मूरेन्मुक्तिं बहुशास्त्रश्रुतोऽपि वेति'' हारीतस्मृतिवचनोपन्यसन तत्तु याज्ञवल्क्याद्यशेषस्मृतिकारानुवादविप्रतिपिद्धत्वादनाश्वासार्हमेवेत्यवधारितं प्रागित्यपि न प्रस्मर्तव्यम् । सत्यप्येवमबोधदुर्बोधपङ्कप्रदिग्धधीनिचेष्टितैरत्र वैष्णवंमन्यैरनन्यभावप्रकाण्डैकपरिष्कृतात्मनामपि वेदादिवचसामपार्थीकरणप्रयत्नातिशयसमूलोन्मूलना घावतार्यते विषयविभेदस्तथाहि । नो खलु श्रुतिभिर्याभिस्तप्ताङ्कनप्रक्रियासम्पर्कसामान्यविधुराभिस्तदङ्कनविधानानिरूपण प्रतिज्ञायते । तासामेव दारुधियाऽध्यस्यमानग्राहविभेदस्थानीयानाङ्कवलीकारे क्रियाकर्मीभूतता तावद्यथावत्तज्जातीयमान-वानामपरिहार्या समुपजायते । ता एता "पवित्रन्ते वितत ब्रह्मणस्पते'' इत्येवमाद्या अधिगम्यंते श्रुतिवाच । कुत्रत्येयमृगिति चेद्दृग्वेदसंहितायास्सप्तमाष्टकतृतीयाध्यायाष्टमवर्गे प्रथमैवावसीयते । इय पुनर्यजुरारण्यके तैत्तिरीयकाणामादिमप्रपाठकैकादशानुवाके परिपठ्यते साममहितायाञ्च । न हि ऋग्यामेतस्या महीयमाना नूनमियमात्मप्रक्रियामनन्यसाधारणीमृते प्रक्रियान्तरभञ्जनचेतश्चाञ्चल्यैकमत्यवस्थापित वा नन्वङ्कन सहते प्रवर्तयितुम् । अतात्त्विकत्वादन्यायत्वाच्च । न चैपा स्वात्मगतपदान्यतमेन वृत्त्या वा कया चिद्विनियोगमुद्रया वा कल्पसूत्राणामात्मसत्ताऽतिरिक्तसत्ताप्रसारनिर्बन्धबन्धिन्या पार्यते ऽर्थान्तर प्रति परिणेतुम् । न खल्वङ्कं किल वेदानाङ्कल्पादिभिरङ्की स्वय वेदो निरूढाभिधेयत्वैकवल्यात्मसमालम्बी सन्दुर्मतिकल्पनापल्लवसमुल्लासानामवकाश यच्छेज्जातुचित् । अन्यथाऽन्यथाप्रतीतिशरीरस्यार्थानामनवस्थितवस्तुस्वरूपपर्यवसायित्वात् । न चेह विरहय्यार्थान्तरमङ्कनाभिधेयनिष्पादनैकनिष्णाता ह्यसौ "पवित्रन्त,, इति मन्त्रविशेपश्चकास्तीति सन्तोष्टव्यम् । कल्पान्तेऽप्येतदर्थप्रसारगन्धस्यास्यात्यन्तिकाभावाभावात् । अत एव

५१ 'पवित्रन्त,, इति मन्त्रस्याऽङ्कनकर्मण्यपार्थीकरणचाद्दित नतु वादिनो विनाश्यत य थावत् ।

पवित्रन्ते विततं ब्रह्मणस्पत" इति "द्वे वियत्पावित्रं धिषणा अतन्वते" त्यक-स्यपतप्रयोगमत्रमन्नानाश्वलायनः । सूक्तं चेदं पवमानसोमदेवताकं नाग्निदेव-ताऽस्यास्ति प्रकृता । न ह्यप्रस्तुतोऽर्थोऽप्रस्तुतात्प्रकरणात्प्रतिपत्तुं पार्यते । इतरे-तरसंसर्गसामान्याऽनवच्छिन्नत्वात् । इतरथा सूक्तात्सर्वस्मात्सर्वस्या एव देवतायाः स्वस्वाभिमतिगृहीतायाः परिग्राह्यतापत्तेरपरिहार्यत्वात् । कल्पसूत्राणाञ्चासङ्कीर्ण-व्यवस्थाविधानफलभाग्यपृथक्न्ययागव्यवहारभेदभिन्नमर्यादाया विलोपापत्तेश्च ।

ननु भरद्वाजादिसंहिताविधृतचक्राङ्कनक्रियाविधानपरतया संयोजिताः स्तन्मी पवित्रन्त इत्याद्या मन्त्रास्तापसंस्कारसंस्थापका एवेति चेन्मैवम् । प्रनीत-तरकल्पसूत्रकृतां तावदाश्वलायनशाङ्खायनबौधायनापस्तम्बकात्यायनलाट्यायनद्रा-ह्यायणशौनकपिप्पलादपुरोगमानां युगान्तरोद्भूतकल्पसूत्रनिरतिशयाभिमन्ध्यन्यू-नाननिरिक्तव्यवस्थाकृतया ततो विपर्यस्तप्रत्ययाश्रायकवास्यकदम्बस्योल्लिखितमं-हितादिपद्धत्याकिञ्चित्करकार्यजातजाड्यकलुषितत्वात् । गृह्यसूत्रेषु वा तेषां निषेकादिश्मशानान्तसंस्कारकलापप्रद्योतकेषु तत्ताङ्कनं वा तद्विधानपरिचोदक-तया "पवित्रन्त " इत्यादिमन्त्रार्थोपन्यसनं वा पञ्चप्रमाणगोचरञ्च यतः । एभ्य एव वा प्रधानहेतुभ्यस्सर्वमप्रतिपन्नप्रमाणमावभावितेभ्यः प्रवृत्तिरपाऽर्वाचीनमति-मतां तत्परतयोक्तमन्त्रतात्पर्योपवर्णनानिरूढा बाढेन मानोपपत्तिभ्यामाह्नायते । सति चैवमङ्कनकर्मण्युदिताम्नायवाचां नयनव्यवहारोऽमावन्यायिनामन्याय्यतर इति येऽपि तत्पक्षाभिमानिदुराशापविभेदाः पराक्रियन्ते तथाहि । यत्तु ब्रह्मणस्पतिपद-गृगनमुपवर्णितं चतुर्मुखनियामकपरतयेति तन्नोपपद्यते तस्य तु सूक्तस्योपक्रमपरा-मर्शेऽवमंहारेऽप्रस्तुतत्वादेवाभिनेतस्य हि विष्णोः । न चाभिमतमुपनायते यन्त्यप्र-स्तुतपदाभिरूढं सञ्ज्ञानुभिः । यदपि विभूतं प्रभुपदं सर्वनियामकव्यक्त्यात्मतया तद्प्युपगत्या गत्यन्तरेण वाऽपान्तराभिधाननिग्रहपरिणीतिमयुक्तेन स्मुदसनीय-मेव । समन्वयासङ्गतेः । तत्र सार्वत्रिकत्वेऽपि विधान इत्यस्य न विशेषा-भिन्दादिविभूतिस्समुद्दिष्टनिर्णीता । विशेषणान्तरस्यैव वक्तव्यानिदानपरत्वात् । न चापि शास्त्रान्तरादिव विशेषणानुपूर्णानि गात्रादाभिषेचमूनानीति साम्प्र-तम् । प्रमाणविनिवारणात् । न हि पर्यायशब्दप्रयोगनिरपेक्षतया श्रुत्योपनीतानि विषूधनि-पदैस्स्तुतानां वा ऽन्यार्थ्यादिविवरणाप्रतीता निरासम् । अत एव ■ अन्तः प्रविष्टः शास्ता जनानाम् । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ,, तीति श्रुतिस्मृतिस्तानोत्सर्ग-

नमत्रार्थे नातिशेते हन्ताकाण्डताण्डवप्रकार वस्तुवृत्त्या । नो खल्वयमृग्वटकपवित्रशब्द स्सुदर्शनचक्रस्याभिधाता युज्यते कथञ्चित् ।

५२ उक्तमन्त्रगतपवित्रपदस्य महता हि प्रमाणादिप्रबन्धेन सुदर्शनचक्रपरतानिरासातिशय ।

यच्च "सुदर्शने च दर्भे च पवित्रं चणसूत्रक" इति वेदनिघण्टुवचनतया प्रमाणप्रदर्शनं पवित्रशब्दो हि सुदर्शने योगरूढ इति स्वप्रतिज्ञां निर्वोढुकामेनाकारि तच्चानादेयम् । वाक्यस्यास्य सुदर्शने च दर्भे चे"त्येवमात्मनो वेदनिघण्टावत्यन्तानुपलभ्यतया तद्वचनता तस्य ब्रुवाणस्य दर्पणकारस्यात्यन्तिकमृषावादितैव व्यक्तीभवति । साक्षिणश्चात्राध्येत्रध्यापकपरम्परापरिप्राप्ता हि कृत्स्ना एव वैदिकास्सार्वविदिका । नाप्येतद्वचनं निघण्टुव्याख्यायां वा नैरुक्ते परिदृश्यते । नापि पुनर्निरुक्तकारो ऽत्रभवान्यास्कार्षिः पदमेतत्सुदर्शनवाचितया व्याचकार स्वस्य पुन पर्यायतया वा । वेदनिघण्टौ तु पवित्रशब्द "अर्ण क्षोद" इत्यारभ्य जलापमित्यन्तैकशतोदकनामसु द्विरशीतितिसङ्ख्याक प्रसिद्ध्यति । स एव पुनरश्वनामसु "सप्तिं वाहिष्ठ" इत्युपक्रम्य "सृणि,,रित्यन्तचतुरशीतिरश्म्यादिनाम्ना चतुस्त्रिंशत्सङ्ख्याकतयाऽनुभूयते । न तु सुदर्शनचक्राभिधेयबोधकतया कुहचिद्वा तन्निघण्टौ । सुदर्शनाधिकारसामान्याभावस्यैव तत्रासङ्गतेरप्रवृत्तेश्च । उदकपक्षे तु "त्रसा उ । पुव संज्ञाया,,मिति पाणिनिस्मरणात्करणे "इत्र,, प्रत्यय उपजायते । स्नात सन्पुनात्यनेनास्मानमिति पवित्रम् । यद्वा "कर्तरि चर्षिदेवतयो" रित्यपा देवतात्वादित्रप्रत्ययः कर्तरि सम्पद्येत । पाप्मकृत पुनातीति पवित्रम् । यथाह "ज्ञानं तपोऽग्निराहारा मृन्मनोवार्युपाञ्जनम् । वायु कर्मार्ककालौ च शुद्धे कर्तॄणि देहिना,, मिति मनुः । निगमोऽप्यत्र "शतपवित्रा स्वधया मदन्तीर्विद्वदका" इत्याद्या प्रमाणम् । "पवित्रं वै दर्भा । पवित्रं वा आप,, इत्यादिशतपथप्रभृत्याम्नानबलाद्वा दर्भोदकाद्यवच्छेदेन पवित्रपदाभिधेयताप्रतिपत्तिरुपपद्यते । सुदर्शने तु तद्वृत्ताप्रतीतिप्राग्भारसम्भवेऽपि स्वसमानाधिकरणकौमोदकीनन्दकादिभगवल्लाञ्छनसन्नियतपावित्र्यविधाविशेषविशिष्टे विशिष्य स्वस्मिन्नेव तत्पदनयनप्रवृत्तानैर्युक्तिकत्वात् । न च सुदर्शनगतप्रकृष्टप्रभावपरिदृष्ट्या भगवदायुधान्तराग्रहणपुरस्सरमस्यैव परिग्रहो युज्यते निर्लानेन पदेनेति युक्त प्रत्याययितुम् । निरूपितगत्या सुदर्शनपरिग्रहस्याऽप्ययोगादेवातितराम् । स्यादेतत्सुदर्शन पवित्रपूत वस्तु विष्णोर्भगवतो हेतित्वात्तथाऽप्यत्यन्तासम्बन्धान्नैतच्छ्रुतिस्थ पवित्रपदमायुधमभिधत्ते । अस्य तूपक्रमादिभिस्तत्व

स्योपरिष्टान्निरूपयिष्यमाणत्वात् । न हि "सुदर्शनं सहस्रारं पवित्रं चरणं पविः । सुदर्शनं हरेश्चक्रं पवित्रं चरणं पविः । पवित्रं चरणं नेमिः । पविश्चक्रं सुदर्शनम् । सहस्रारं प्राकृतघ्नं लोकद्वारं महौजसम् । नामानि विष्णुचक्रस्य पर्यायेण निबोध मे । पर्यायवाचका ह्येते चक्रस्य परमात्मन,, इति निघण्टुपाद्मश्रीशास्त्रवचनतया वोपन्यसनं वादिनो वस्तुव्यवस्थापनायालम् । पुराणे परं पाद्मे वचनस्यास्य वचनान्तरैः पुराणान्तरस्य प्रतिबध्यमानत्वात् । श्रीशास्त्रवचनस्यापि स्वसमयमात्रनिष्ठगोष्ठीविशेषसम्भरत्वात् । निघण्टुषु पुनरमरादिषु सार्वदेशिकेषु च तीर्थकारसम्मतेषु पवित्रसुदर्शनपदयोः पर्यायता नाधिगम्यते कुत्रचिद्वा । यद्यविरुद्धा स्यात्तद्वत्तामती-निस्तदा तद्रूपावीनिवेशाविशेषप्रत्ययत्वाऽस्थितिर्नि स्यादेवोपेक्षिता सुतराम् । उपेक्षितैव तु सा पर्यायभावानर्हत्वागमिकैवेत्युपजायते । न च निजसमयमात्रनिबन्धनापि मानमेवाद्यध्वानं नातिक्रामत्युदितव्यवस्थेति वाच्यम् । तदाऽऽदिवर्त्मातिलङ्घनप्रयुक्तप्रतिपादनाविभेदस्य प्रागेवाभिहितत्वात् । न च पुनरेकायनशाखाब्राह्मणे च प्रश्नपूर्वकं पवित्रशब्दो निरुक्तः । "पवित्रमिति पुनः कस्य वार्ता । पुनाति त्रायते चेत्यतः पवित्र,, मित्यनुवादप्रयत्नो वादिनो न्याय्य उपपद्यते । उल्लिखितशाखाया एव कूर्मरोमायितनतया वेदे तद्ब्राह्मणवचनताऽभ्यक्तीकारस्य मृषाभाषामहार्णवैकप्रकृतिकत्वात् । निरुक्तेर्वा तस्याः स्थाने युक्तत्वेऽप्यस्थाने खल्विहायुक्ततरत्वात् । नापि "कर्तरि चर्षिदेवतयो,, रिति पाणिनिस्मरणेन वा परिशुद्धिकर्तृदेवताविशेषे पवित्रशब्दो योगरूढ इति मतिर्भवति मान्या तथाविधदेवतादिवस्तुनोऽनेकत्वादित्यादिना प्रागेव प्रत्युक्तत्वात् । एवञ्च हेतुत्वेनोपन्यस्तानान्तावयवाणामप्युक्तगत्या तदाभासतया न समास्ति पवित्रशब्दः सुदर्शनत्वावच्छिन्ने जातु निरूढः । नापि तदभिन्नपरिशुद्धित्राणकर्तृत्वावच्छिन्ने योगरूढः । न वा साङ्केतिकपरिशुद्धिकर्तृत्वावच्छिन्ने देवताविशेषे योगरूढ इति सिद्धिवशाच्छ्रुतिगतपवित्रशब्दः सुदर्शनवक्ता नास्त्येवेति कथितम् ।

५१ वेदाङ्गैः पवित्रशब्दार्थनिर्वचनं तैरेव चोक्तमन्त्रस्य गोमयोग विनियोगो नानाविधः न स्वङ्गनक-

अतः परं रश्म्याद्यभिधेयान्तःपातिपवित्रशब्दोऽपि प्राग्वदेव व्युत्पादनमाप्नुवन्मन्त्ररश्म्याग्निवायुसोमसूर्येन्द्राद्यपाभिधेयप्रधानोऽध्यवसीयते । एतदेवाभिप्रेत्य "पवित्रं पुनातेः मन्त्रः पवित्रमुच्यते येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति ॥ रश्मयः पवित्रमुच्यन्ते । गभस्तिपूतो नृभिरद्रिभिः सुत इत्यपि निगमो

मणि रूपितत्वात्तस्येति व्यवस्थापनम्।

भवत्यापः पवित्रमुच्यन्ते शतपवित्राः स्वधया मदन्तीर्बहूदकाः। अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्रमुच्यत इन्द्रः पवित्रमुच्यत इति। अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः। पवित्रन्ते मा पुनन्त्वित्यपि निगमो भवती" ति निर्वचनं निरुक्ते पदस्यास्य सुव्यक्तम्। उभयत्रापि सुदर्शनपरविवरणसामान्याभाव एव तदर्थगोचरात्यन्तिकाप्रामाण्यप्रवादी दरीदृश्यते। येन "पवित्रन्ते मा पुनन्त्वित्यपि निगमो भवती" ति नैरुक्तोक्तोऽसौ पवित्रशब्दः "पवित्रन्ते" इति मन्त्रगतसुदर्शनपरव्याख्यानासंस्पर्शी स्वाभिप्रायबहिर्भाव्येव सन्वेदबाह्यार्थविभेदमापत्ते येन च विचारचतुराः पाखण्डिजनाविडम्बनाभूमिमेनेमां तप्ताङ्कनपरतया व्याख्यान्त "पवित्रन्ते" इत्यादिश्रुतिवाचामध्यवस्येयुः सार्वदिकास्सोत्साहमिति स्थितम्।

न च "वितत,,मिति पदमास्तिकेषु व्याप्तमित्यर्हति विवरणमनागपि। उदाहृतोदाहरिष्यमाणमानकदम्बकेन तप्तलाञ्छनलाञ्छितानामनास्तिकैकवर्गीयत्वात्। इत्थञ्च तादृशतप्ततनोरपात्रत्वे पुनः पातित्यस्वरूपसमाक्रान्तत्वेऽन्वयव्यतिरेकाभ्यां हानिरेव तप्ततनोः परमा हन्त जन्जन्यते। नाप्यामशब्दस्तप्ताङ्कनादिना विनष्टपाप इति विवरणायावकल्पते। तेन हि पाप्मातिशयस्यैव सम्प्रतिपत्तेः। न हि "नाश्नुत,,इत्युक्तिर्मोक्षं न प्राप्नोतीति व्याख्यानमुररीकरोति। प्रकृतप्रकरणातिरिक्तप्रकरणैकलभ्यत्वादेव मोक्षव्यवस्थायाः। असत्यप्यनिरतिशयार्थभूते मोक्षे सातिशयार्थप्रतिप्रतिपत्तेस्तत्तत्प्रकरणगाया अपार्यत्वादन्यथयितुम्। न वा पुनर्मन्त्रान्तर्हृदयं तदिति वचनं देशविशेषावच्छिन्नपरब्रह्मवाच्याधीयते। तस्याप्यप्रकरणप्रतिपाद्यत्वात्। नापि वहतिना तप्ताङ्कनद्वारा सुदर्शनधारणमादरणीयं मन्त्रान्तरवर्तिना। सम्भावनाया अस्या निगमागमबाह्यायाः स्वगोचरव्यवहरणानास्पदत्वस्य सूपपादात्। न हि तापसंस्कारवशवर्तिनो भवेयुर्विनष्टपापाः। वशेन तु तस्यैनसो नियतसम्बन्धस्यैव निरूपितत्वाद्वा निरूपयिष्यमाणत्वात्। न च नारायणचिन्हभूतसुदर्शनधारणं दासानामुपपद्यते वास्तवं वस्तुवृत्त्या। तद्धारणान्याय्यतायाः प्रागेव सिद्धान्तितत्वात्। न चापि "ब्रह्मणस्पति,, पदं पुरस्कृत्य चतुर्मुखस्यापि प्रभुतया नारायणस्य स्तवनमिह मान्यं भवेन्मनागपि। इन्द्राभिन्नपवमानसोमदेवताया एवात्र ब्रह्मणस्पतिपदाभिधेयभूतत्वात्। अत एव तद्देवनाधीनान्ताव "द्वायुः वरुण" इत्यारभ्य "सुपर्णः पुरूरवा,, इत्यन्तानाञ्च द्वात्रिंश-

त्पदानां सप्तमपदतयाऽस्य वेदनिघण्टौ परिगणनात् । नाऽत्र विष्णुपदं वा तद्ग्राहकचिन्हविभेदोऽनन्यथासिद्धव्यवस्थानसमास्पदीभूतः कश्चिदापतति येन च स्वस्यैवोपलब्धिरपरिहार्या स्यात् । तदिदमुक्तमनुपादेयं वेदितव्यम् यतोऽत्र प्रामाणिकव्रूपसूत्रतदनन्यभावभावोपेतवैशम्पायनधानञ्जप्यादिपारमार्षभाष्यार्थानतिलङ्घिभगवद्विचारण्यविवरणप्रकाण्डैकपराहतं नितराम् । ऋच एतस्याः किल विनियोगमग्निष्टोमे ग्राव्णामग्रतलेषु प्रतिष्ठापितद्रोणकलशे सोमरसधारासम्पूरणस्य संशोधनाख्यसंस्कारविशेषपरिलक्षितस्य परसाधनभूतोदीचीनदशापवित्राख्यवितारितपटविशेषचतुष्कोणसंधारणक्रियाविशेषनियन्त्रुद्गातृव्यापारप्रमेयलक्षणं विधत्ते "तेपूद्गातारो द्रोणकलशं प्रतिष्ठाप्य तस्मिन्नुदीचीनदशं पवित्रं वितन्वन्ती" ति सूत्रेण भगवानापस्तम्बः । तदुत्तरं पुनर्व्यक्ततरविनियोगप्रतिपत्त्यर्थं "पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्य्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशते" ति वितत्यमानमभिमन्त्रयते यजमानः,, इत्यृचमेवोदाजहारासौ समग्रां परमर्षिः । अतः परञ्चाधिकतरविनियोगज्ञापनाय "पवित्रस्य यजमानो नाभिं कृत्वा तस्मिन्होतृचमसेन धारां श्रावयतीत्यसंदिग्धार्थकाव्यवहितोत्तरसूत्रव्यक्त्या " सन्तता धारा श्रावयितव्या । कामो ह्यस्य समर्द्धुको भवतीति विज्ञायते" इतिचैतया निरूपितार्थे द्रढयत्येवात्युच्चैः । ऋजुः सूत्रार्थः । एतावता मन्त्रगतपवित्रशब्दो ह्यसौ दशापवित्रवचनएव न तु जातु पाखण्डिजनजल्पितासम्बद्धसुदर्शनचक्रवाची तस्य तु भरद्वाजादिभिरपि कल्पेष्वात्मीयेष्वेवस्यन्तागृहीतत्वात् । गृहीतया तु वदनं वादिनो विस्तृततरतदीयनिबन्धप्रत्यनीकभावभाव्येवापतदासमन्तायतः खल्वमूनि "अस्मे ज्योतिरिति शुक्लामूर्णास्तुकां यजमानाय प्रयच्छति । तां स वाले दशा पवित्रस्य नाभिं कुरुते । शुक्लं वलक्ष्याः पवित्रमोतं भवति । यं द्विष्यात्तस्य कृष्णां लोहिनीञ्च पवित्रे कुर्यादि" त्यादीनि च सूत्राणि प्राक्तनानि दशापवित्रनिर्माणैकस्वरूपौपयिकप्रक्रियान्तावत्प्रत्याययन्ति व्यक्ततरमनितराभिधेयभेदमित्रानाञ्चासाधारणीम् । दशापवित्रञ्च शुक्लया अवेरूर्णाभिः सूत्रीकृताभिरोतप्रोतप्रचारशरीरश्च विशिष्टसोमशोधनाधारभूतो वासोविशेषः । अस्यैवावबोधने कल्पसूत्रकृदृषिः शाङ्खायनोऽपि बद्धादरः सन् "वितते पवित्रे पवित्रन्त इति द्वे वियत्पवित्रमित्येके,, इत्यसूत्रयदृचमेतामनन्यार्थाम् । सूत्रादमुष्मादव्यवहितपूर्वोत्तरसूत्रव्यक्त्य "आकल्पा अनुसका कलशेषु धावति पवित्र-

सोम ते रस इति कलशवतीरभिरुत्य । आप्यायितवती प्रभृत्येवं विहतो द्वितीयोऽपि सव । पष्ठीप्रभृतयः पञ्च बुंदस्य । प्रास्यधारा प्रधारा अस्य प्रते धारा इति प्रक्षरन्तीषु धारास्वि,, त्येवमात्मानो वल्लीरसविशेषाऽधारभूतद्रोणकलशनिरूपिताधेयतासम्बन्धावच्छिन्नस्वसमवेतशोधनसंस्कारकरणत्वावच्छिन्नप्रकारतानिरूपित दशापवित्रनिष्ठविशेष्यताशाल्यवबोधपरा पर प्रतीयन्ते । प्रकरणस्यास्योपक्रमेऽपि "आदौ माध्यन्दिनस्य सदनस्य रापानमभिसुन्वन्ती" त्यादिना महर्षेस्तस्यैव सूत्रसन्दर्भेण सोमवल्लीरसप्रकरणस्यैवात्यन्ताभ्यार्हिततया तद्वर्गीयदशापविप्राख्यान्यतमपदार्थभावमावितत्वेन पदमेतत्पवित्रात्मकमनन्यार्थकमधिगच्छाम । यथाहि " दक्षिणे पाणावुद्गाता दशापवित्र कुर्वीत । अन्तरेणाक्षविष्कम्भौ दशापवित्रं प्रास्येदनुप्रन्नि,,ति सूत्रयामासतुर्भगवन्तौ द्राह्यायणलाट्यायनौ च छन्दोगाना कल्पकारौ । द्रोणकलशप्रतिपत्तेः प्रागध्वर्युणा दीयमान तावद्दशापवित्रमुक्तलक्षणलक्षितमुद्गाता दक्षिणे पाणौ परिगृह्णीयात् । अक्षमुपाक्षवाऽस्पृशन्नक्षोपाक्षकयोरन्तरेण दशापवित्रं प्रास्येदिति सूत्रयोरर्थ ।" प्रकरणमेतदुदाहृतयाजुपबह्वृचकल्पप्रस्थानानतिरिक्तप्रस्थानाभिधेयनिरूपणप्रातिष्ठमात्यन्तिकमुपतिष्ठते यतोऽत्रैव छन्दोगाना श्रौतसूत्रे "अभिषुते राजन्यूतपात्रमसीति द्रोणकलशमालभ्य वानस्पत्य इति प्रोहेयु" रित्यव्यवहितपूर्वप्रवृत्तसूत्रत कण्ठरवेणैव प्रकरणमभिन्नमधिगम्यते इत्यज्ञजनजल्पितपवित्रपदाभिधेय सुदर्शनात्मा प्रत्याख्यातो वेदितव्यो यतः पुनर"वधूय पवित्रमुदग्दशमवाङ्नाभि वितनुयु पवित्रन्त,, इत्यृच प्रकृताया विनियोगश्चाम्युक्ताध्वर्यवविनियोगानुकूलौद्गात्रप्रयोगलक्ष्मा प्रमीयते । उदिताना-तावत्कल्पानामेकैकेन सम्मार्जन विधायाथ "वधूय दशापवित्रमुदग्दशमवाङ्नाभि वितनुयुरुद्गातारः पवित्रन्त इत्येतयर्चे" त्येष हि सूत्रार्थः । नो खल्वेतस्या ऋचो रमारमणमहिमावगाहिता व्याख्याऽपार्थवाद्युपदर्शिना गत्या वा कयाचित् । "पवित्रन्त इति द्वयोः साम्नोरर्कपुष्पर्षिः । जगतीछन्द । पवमानो देवते,,ति सामवेदषड्विंशब्राह्मणोपवर्णितपवमानदेवताया एव न्याय्यत्वात् । नात परा विष्ण्वाद्या या काचिद्देवताऽभिप्रायतयाऽस्याः समुपादानगोचरा । अविषयत्वात् । न हि विषयताऽविषयो निरूपणविरामधिशेते पुरो वा विपश्चिज्जनानाम् । घृणेनापि रमस्य गृहीतव्यत्वापत्तेरपन्यस्तप्रमाणकार्त्स्न्यव्याकोपप्रसङ्गाच्च । तदेषोपपद्यते दुरितार्थव्यूहविभेदविडम्बना हन्त दग्धाङ्गानामासमन्तात् । शिष्टविशिष्टाभिधेयप्रति-

५४ 'पवित्रन्त' इति मन्त्रस्य परमार्थव्याख्यानाविरूपमेव भगवद्विद्यारण्यमुनीश्वरभाष्यम् ।

पादनकृत्तैर्थिकाकाङ्क्षायान्तूपपादितवेदाङ्ककल्पमस्थानान्यूनानतिरिक्तनिरतिशयाभिसन्धिसन्धातारोऽसमवद्विद्यारण्यमुनीश्वराः खलु भगवद्वैशम्पायनधानञ्जय्यमेधातिथिप्रणेतृकभाष्यार्थसमाश्रयाः समीप्यन्ते । अत्र एतस्यास्तैरेतैर्ऋक्संहितायामुपवर्णितोऽर्थो यथा । हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ते पवित्रं शोधकमङ्गं विततं सर्वत्र विस्तृतं स प्रभुः प्रभविता त्वं गात्राणि पातुरङ्गानि पर्येपि परिगच्छसि । विश्वतः सर्वतः तव तत्पवित्रमतप्ततनूः पयोव्रतादिना ऽसन्तप्तगात्र आमो ऽपरिपक्वो नाश्नुते न व्याप्नोति । शृतास इत् शृता एव परिपक्वा एव वहन्तो यागं निर्वहन्तस्तत्पवित्रं समाशत व्याप्नुवन्ती" ति । न हीह पवित्रातप्ततनूशब्दाभ्यामभ्युक्तदशापवित्रपयोव्रतादिनियमविशेषवत्तामृते समुपात्तप्रमाणसमवायसम्भुज्जृम्भितानामात्ममनोमात्रव्यक्तीकृतोऽर्थः कश्चिदस्ति प्रत्याख्यानैकगोचरस्सुमनसाम् । यथाभूतस्य तथाभूततयैव निर्वक्तॄणामपाक्षिकत्वेन च याथार्थ्यशीलित्वेन सुमनःसौरभारम्भसम्बन्धवदत्यादरविषयत्वादेव विद्यावताम् । अत एव श्रीमत्खण्डदेवभट्टगदाधरादिभिर्मीमांसाकौस्तुभप्रामाण्यवादादिनिबन्धरत्नेषु विध्यर्थविचारणान्तावत्प्रकुर्वाणैर्वचांसि हि तदीयानि प्रमाणीकुर्वाणैरेव "सर्वज्ञशिखामणिभिर्विद्यारण्यगुरुभिः सिद्धान्तितत्वादि" त्याद्यया पदपद्धत्या भक्त्युद्रेकेण सम्पूजिता नन्वत्रभवन्माधवाचार्याः प्रत्यर्थं राजन्तेऽभियुक्ततया प्रमाणभूतानाम् । इत्थञ्चाप्रामाण्यशङ्काकलङ्कलेशस्यापि प्रामाणिकमूर्द्धन्यविद्यारण्यव्याख्यायामनवतारार्हत्वेन तत्पुरतः शिवारुदितसहोदरायमाणश्रुत्यर्थनिरूपणलक्षणं कर्माध्यवसीयते दग्धाङ्गानां यतोऽत्र सूक्त एतन्मन्त्रसमनन्तरमन्त्राणामविरूपधर्मिप्रतिपादनैकनिजाकाराणाक्चोद्बोधितसोमस्वरूपनिरूपणमात्रपर्याप्तानां नाम "तपोष्पवित्रं विततं दिवस्पते शोचन्तो अस्य तन्तवो व्यस्थिरन् । अवन्त्यस्य पवीतारमाशवो दिवस्पृष्ठमधितिष्ठन्ति चेतसा ॥ अरूरुचदुषसः पृश्निरग्रियउक्षाबिभर्ति भुवनानि वाजयुः । मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुरि" त्याद्यानामाशयानिशयलक्ष्यीकरणेन मृषावादितैव सुदर्शनगोचरव्याख्यानपक्षस्यापद्यते । परतः प्रामाण्यचिन्तायां पुनस्तेषामृचमेतां स्वाव्यवहितपूर्वर्क्सहचारिणीमुदितादोपकल्पादिवचो-

५५ मुनीश्वरस्यैव हि व्याख्यानं तैत्तिरीयभाष्ये

नावपर्यन्तष्टम्भेन तैत्तिरीयारण्यकादिमप्रपाठकैकादशानुवाके व्याख्यातवतां विद्यारण्ययतीन्द्राणां वादिशदुर्वादवारणविदारणमृगे-

" पवित्रवन्तः । पवित्रन्त" इत्यनयोर्मन्त्रयो. पक्वपुरोडाशनिरूपणपरम्।

न्द्राणां व्याख्यानं खलु कल्पसूत्रोदाहरणसध्रीचीनं " कल्प ।। पवित्रवन्तः । पवित्रन्ते । ब्रह्म देवानाम् । असतः सत् इति चतस्रः पवित्रवत्य उत्तरस्मिन्निति" । तत्र प्रथमामाह । पवित्रवन्तः "धरुणेष्वारभमिति" । पवित्रवन्तः दशापवित्रयुक्ता ऋत्विग्यजमानाः ' वाजम् ' अन्नं पर्यासते परितः सेवन्ते । अन्नमुद्दिश्य सोमयागं कुर्वन्तीत्यर्थः । 'एषां' सोमयाजिनां पिता पालकः प्रत्नः पुरातनो ब्रह्मा 'व्रतं' एतत्कर्म अभिरक्षति । महः महाप्रौढं 'समुद्रं' समुद्रस्य सदृशमन्तरिक्षं 'वरुणः' जलाधिपतिर्देवः 'तिरोदधे' कर्मफलत्वेन वृष्टिं दातुं मेघैराच्छादयति । 'धीरा इत्' बुद्धिमन्त एव 'धरुणेषु' अग्निधारकेषु यागगृहेषु 'आरभं' आरब्धुं 'शेकुः' शक्ताः॥

अथ द्वितीयामाह । "पवित्रन्ते तत्समाशत इति हे ब्रह्मणस्पते अन्नस्य मन्त्रस्य वा पालक सोम 'ते' त्वदर्थं पवित्रं शोधकं इदं दशापवित्रं विततं विस्तारितं 'प्रभुः' तेन पवित्रेण शोधितत्वात् त्वं कर्मणे समर्थः सन् 'विश्वतः' सर्वतः 'गात्राणि' यज्ञाङ्गानि 'पर्येषि' व्याप्नोषि । पवित्रेणाशोधितस्य यज्ञाङ्गत्वं नास्ति शोधितस्य तु सोमस्य यज्ञाङ्गत्वमस्तीत्यत्र हविरन्तरं दृष्टान्तत्वेनोपन्यस्यते । 'अतप्ततनूः' अतप्ता तनूः स्वरूपं यस्य पुरोडाशादेः सोऽयं अतप्ततनूः तादृशः पुरोडाशः 'आमः' अपक्वः सन् 'तत्, यज्ञाङ्गत्वं 'नाश्नुते, न व्याप्नोति । "यो विदग्धः स नैर्ऋतोयोऽशृतः स रौद्र,, इति श्रुतेः । 'शृतास इत्' पक्वा एव पुरोडाशादयः 'वहन्तः' यज्ञं निर्वहन्तः 'तत्' यज्ञाङ्गत्वं समाशत सम्यक्प्राप्तवन्तः । "यः शृतः सदेव,, इति श्रुतेः। अपक्वस्य पुरोडाशादेर्यज्ञाङ्गत्वं यथा नास्ति पक्वस्य तु यथा विद्यते तथा पवित्रेणाशोधितस्य सोमस्य यज्ञाङ्गत्वं नास्ति शोधितस्य तु विद्यत इत्यभिप्रायः । एतेनापि सोमयागाख्यप्रकरणविभेदप्रक्रियापरायत्तप्रकृतार्थे एवानाघ्रितासंदिग्धधीविलासलालिते पुनः समस्तेतरप्रमाणपर्य्यालम्बितेयागाङ्गभावयोग्यतावत्पक्वपुरोडाशनिष्पादनौपयिकषाड्गुण्यप्रतिपादनपुरस्सरमपक्वपुरोडाशसमापत्तिप्रयुक्तफलवैकल्याऽवाप्तिप्रदर्शनलक्षणदृष्टान्तमाहिम्ना दशापवित्रापरिशोधितस्यैव सोमस्य यज्ञाङ्गतासिद्धिस्तदभाववतश्चातत्सिद्धिरिति फलितं प्रतिपद्यामहे । तथा च प्रकृतपक्षतावच्छेदकावच्छिन्नशोधनधर्मकप्रकृताऽपूर्वतानान्तरीयकविधानविभेदावगाहितद्रूपावच्छिन्नसाध्यनामप्रतिपत्तिर्लब्धपदा सती न सहामहे प्रतिपत्यन्तरं न्यायाभाससहमूकसमुज्जृम्भितं कथञ्चिद्वा । नो खल्वत्र तप्यता-

पकतनुस्थेमप्रमेयमृतेऽकस्मादतप्तशब्दसमभिव्याहृततनुपदश्रवणमात्रादेव सैन्धवादिपदवद्वा समीहिताभिधेयसमाधिगमः शक्यसम्भवः । तापस्य हि तापनक्रियावद्वस्तुनानात्वपरिप्रेरितात्मनो नियतत्वादैकान्तिकग्रहग्राहकप्रकरणसान्निध्यादेर्नियतस्येह नितरामेव मृग्यत्वात् । न हि यागादौ श्रौते कर्म्मणि स्मार्ते वा ऽभियुक्तं प्रत्यभिहिताधिकारिलक्षणाऽन्यतमतया तप्ततनुताऽपि कलसताऽवभासा षष्ठाध्याये द्वादशलक्षण्यां कल्पेषु क्वचिदप्युपपद्यते विहिता । विहितेतरवर्गीयाप्रयायित्वात् । न च मुमुक्षूणामयं धर्मः पूर्वतन्त्रादावप्रतिपाद्य एव न्याय्य इत्यावेदितव्यम् । मुमुक्षवभ्यहितधर्मपूगे "शान्तो दान्त उपरतस्तितिक्षुः समाहितः श्रद्धावित्तो भूत्वाऽऽत्मन्येवात्मानं सम्पश्येत् । तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनमि"त्यादिश्रुतिशतेभ्यः सम्प्रतीते तदन्तर्गततयाऽयं प्रायशोऽतप्तलाञ्छननामा मानहीन एवास्ति यतो यतो वा सुसमीक्षावतामट्टहासप्रघट्टिकासमारम्भायैवालं विस्तरशो हन्तार्वाचीनकल्पनाया एव भाजनमधिगच्छन्त्युदासीनाः ।न चोदासीनानाञ्चेतःसञ्चारोऽत्रौदासीन्यादेवाऽकिञ्चित्कर इति साम्प्रतम् । उदासीनानामेव पक्षप्रतिपक्षयोराहङ्कारिकप्रवृत्तिद्वीयस्तया विनिर्णिनयिषादशाविशेषावच्छिन्नवस्तुयाथात्म्यप्रकटीकरणसमुत्साहसम्भरत्वात् । इत्थञ्च " पवित्रन्त " इति मन्त्रव्याख्या यथोदितैवाऽस्मदीया सुधीभिर्विभावनीया परीक्षणीया च पराकरणहेतवे परेषामपि दग्धतनूनाम् ।

५६ 'यत्ते पवित्रमि,त्यादिपवमानसूक्तस्थमन्त्रगतयोरपि पवित्र ब्रह्मपदयो सुदर्शनदेहोनार्थ इति सप्रपञ्च निरूपणम् ।

अत ऊर्ध्वमपार्थप्रख्यापनप्रावीण्यैकविख्यातीनाममीषाञ्चेष्टितमत्र काठके यजुष्युपमृष्यते "चरणं पवित्रमि"ति मन्त्रं प्रस्तुत्य या तथा हि न खल्वस्यां पवमानसूक्ते " यत्ते पवित्रमि"त्यस्यां " येन देवाः पवित्रेणे"ति पुनरस्यामृचि पवित्रपूतसहस्रधारादिशब्दानां देहदाहव्यापारकरणीभूतधातुद्रव्यस्य सुदर्शनचक्राद्यलीकप्रक्रियापर्युपेतविडम्बनात्मनो मन्यमानपवित्रार्थो वादिजनदुरावेशवासित उपपद्यत उपक्रमादिगतिभिः । ना"प्यतप्ततनुरि"त्यत्र पाप्मनिवारकसंस्कारविभेदश्चाक्रिमानवाचिसालम्बी प्राप्नोत्युपादेयताम् । 'तप' धातोरेतदर्थव्यतिरिच्यमानसुसङ्गतार्थसम्बन्धस्याद्यावध्यवधारितस्योपर्युपर्याऽवेद्यमानत्वात् । 'पवित्र,श्रुत्यर्थपराभूतमानसस्य तदेककण्ठ्यविज्ञानबहिर्भावभावितैव विद्यतेऽत्र वादिनः । न च ''यत्ते पवित्रमि,,त्यस्यां श्रुतौ तापनभावना क्वचिदालक्ष्यते । अतापप्रकाराक्रान्तवस्तुविशेषस्य स्वारसिक-

स्यैवाऽन्यादृशस्यात्र गम्यमानत्वात् । गन्धस्यैव तापमावनाया अभावे तस्या भ-क्तत्वोक्तिर्वन्ध्यामनोरथतुल्ययोगक्षेमा उपनमते । यदुक्तं "ब्रह्मनेन पुनीमहे । पूतं ब्रह्म पुनीमहे" इत्यत्रत्यं ब्रह्मपद 'मतप्ततनो' रित्यत्र तनूपदोपस्थापितश-रीरपरमिति तदयुक्तम् । वेदेषु ननिघण्टौ तद्व्याख्यायां वा नैरुक्ते ब्रह्मशब्दस्य शरीरपरतायां प्रमाणानुपलम्भात् । रत्नान्नयोरभिधातृतया एव निघण्टौ वेदाना सङ्कीर्तनात् । "बृह बृहि वृद्धावि"त्याभ्यां "बृहेर्नलोप" इत्यौणादिकस्मरणा "न्मनि" न्प्रत्यये रूपमभिनिष्पद्यते ब्रह्मेति । निर्वचनञ्चास्य परिवृढं भवति सर्वैः प्राणभृद्भिः सार्वकालिकैः सदा समुपभुज्यमानमप्यक्षीयमाणस्वभावत्वात् । स्वभावादेव वा परि-वृढं यत्कृत्स्नस्यापि जगतो विधारणाद्वर्धन्ते भूतानि वाऽनेनेति । "अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्द्धन्त" इति श्रुतेस्तैत्तिरीयकाणाम् । ऋक् चात्र "उप ब्रह्माणि वा वत" इति मानमवसीयते । धनपक्षे तु धर्मादयो वर्धन्तेऽनेन भोगानां वा बृंहकं भवतीति निरुच्यते । निगमो ह्यत्र "अस्माकं ब्रह्म पृतनासुसत्विति मानम् ।"

यदप्युक्तं "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते । मम योनिर्मह-द्ब्रह्म तस्मिन्गर्भं दधाम्यहम् । कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्" इति मुण्डकश्रुतिगीताचतुर्दशाध्यायतृतीयाध्यायस्मृत्युदाहरणप्रदर्शनमुखेना ऽत्रत्यब्रह्मश-ब्दश्शरीरवाचीति तदपि दुरुक्तम् । ब्रह्मशब्दस्यास्य हिरण्यगर्भैकवक्तृत्वात् । यदि चेद् ब्रह्मशब्दस्य शरीरपरतैव स्यात्तदा तदुत्तरं नामपदव्यवहितरूपपदमप्रयुक्तं स्यात् । प्रयुक्तेन तु तेन शुक्लनीलादिभेदभिन्नरूपाख्यं वस्तु ज्ञायमानमेव सतान्यत्र देहा द्विलक्षणाद्वस्तुन उपलभ्यते । नामान्यपि स्वोपहितं प्रतीतिविभेदगोचरमप्रत्यूहमेव देहं विभ्राणान्यतितरामनुभूयन्त इति पदाभ्यामेताभ्यामेव शरीरप्रतीत्युपपत्तौ ब्रह्म-पदादपि तल्लाभे को वा स्यादतिशयो विशिष्टानुभूतिव्यपेक्षणलक्षणः । इत्यन्यान-तिशायितार्थव्यक्तिप्रत्यायनाय शब्दान्तराप्रयोगप्रतिनियमे सति "कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्" इति गीतावचनं भगवतः प्रस्तुत्यात्र च ब्रह्मशब्द-निर्दिष्टं प्रकृतिपरिणामरूपं शरीरम् । "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायत" इति हि ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा । इहापि "मम योनिर्महद्ब्रह्मेति" वक्ष्यते । अतः "कर्म ब्रह्मोद्भवमि"ति प्रकृतिपरिणामरूपशरीरोद्भवं कर्मेत्युक्तं भवति । "ब्रह्माक्षरस-मुद्भवमि"त्यत्राक्षरशब्दनिर्दिष्टो जीवात्माऽन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं क-र्मणे प्रभवति । कर्मसाधनभूतशरीरमक्षरसमुद्भवं तस्मात्सर्वगतं ब्रह्म सर्वाधिकारिणां

शरीरं नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः" इति यदेतद्भाष्यकार रामानुजस्तत्तुच्छ-म्। हिताहितप्राप्तिपरिहारौपयिकत्वलक्षणकर्ममात्रतन्त्रतायाः शरीरापत्तिलक्षणफल-भावभूताया एव सर्वेनस्वरूपोपपत्तेः । कर्मणो हि देहोद्भववत्तायां ननु गुरुभूतायां लाघवात्कर्त्रुद्भवनैवात्र कुतो न श्रेयसी । "न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृदिति" स्मृतेः कर्त्राश्रयत्वादेव कर्मणः सकलकरणममाकाङ्क्षस्यापि सार्वदिकस्य । न ह्युद्भावयितृप्रयत्नमन्तरा सम्भवत्युद्भवमक्रिया जगत्यां जातुचित्। तदधीनसत्ताऽतिरिक्तसत्ताऽप्रयुक्तत्वाभावादेवात्मनः । इतरथा सुषुप्तावपि काष्ठ-लोष्टादिवत्प्रनीतिपापन्नस्यापि वपुषः कर्मण उद्भवमनीत्यापत्तिरपरिहार्या स्यात् । जाग्रत्यपि विषयविशेषविपक्वमानसे सति देहिनि सुखावस्थापराह्णे वा कर्तृत्वादि-धर्मभाज विरहय्य हि तं देहः कचिच्चेष्टामात्मीया नतरामेव कुर्यादित्यनुभूतिधि-श्चननीना । यदप्येतदुक्तं ब्रह्मशब्देन प्रकृतिर्निर्दिष्टेति तदपि ब्रह्मब्राह्मणहिरण्यग-र्भवेदतपआदिषु वेदवेदाङ्गयोः प्रमाणानिकरेण वृत्तस्य हि ब्रह्मपदस्य प्रकृतेरतात्प-र्यपरिचायकत्वाद्रुच्छाप्रवृत्तिमूर्द्धन्यमेव ।

यत्पुनरुक्तं "ममयोनिर्महद्ब्रह्मे"त्यत्रापि ब्रह्मपदमुक्तप्रकृतिप्रत्यायकमिति तदपि तद्वदेव। उपदर्शितादेव तु हेतोर्हेत्वन्तरभूयःप्रयोगालिङ्गनत्वात् । न वा के-वलं कर्मसाधनभूतशरीरमक्षरसमुद्भवमिति युज्यते । कृत्स्नस्यापि जगतो ब्रह्मैक-सम्प्रसूतत्वात् । न वाऽप्यक्षरशब्देन निर्दिश्यते जीवो भगवता । "ऋचोऽक्षरे प-रमे व्योमन् यस्मिन्देवा अधिविश्वेनिषेदुरि"त्यस्यामृच्यक्षरशब्देन हि शब्दाभ्यां तावदनन्यविभक्तिसन्निवेशाभ्यां सामानाधिकरण्यप्रत्यासत्तिमहिम्ना सर्वेश्वरस्यैवाभि-प्रेतत्वात् । अत एव "अक्षरन्नक्षरति न क्षीयते वाऽक्षरं भवतीति" परमात्मपरत-यैव व्युत्पादितत्वात्पदस्यास्य यास्केन भगवता नैरुक्ते। नाप्यन्नपानादिना तृप्त-क्षराधिष्ठितं शरीरं कर्मणे प्रभवतीति युक्तमावेदयितुम् । अन्नपानादिनाऽतृ-प्तागदार्तजीवात्माऽधिष्ठितस्यापि शरीरस्य कर्मनिर्वर्तनप्रकाराक्रान्ततया तेन त्व-तृप्ताक्षराधिष्ठितशरीरे साध्यवैकल्यात् । स्वास्थ्यास्वास्थ्यवतोः शरीरयोरनुगतध-र्मावच्छिन्नत्वेनाविशेषात् । न च शरीरमधिकृतं यज्ञमूलमिति मन्तव्यम् । विधा-नोद्भावितवासनालक्षणकामकारप्रवृत्तिमद्वोतृप्रयत्नातिशयस्यैव विशिष्टविज्ञानसमु-ल्लासशालिनस्य तत्प्रति मूलत्वात्।न च"मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहमि"ति चतुर्दशाध्यायस्मृत्युदाहरणेन तद्वनं महद्ब्रह्मेति पदं त्रिगुणात्मकमायाया वृद्धिहे-

सुत्वरूपाद्बृंहणत्वाद्ब्रह्मेति व्युत्पत्त्या बोधकमप्यर्थस्याऽस्य प्रसाधने "तस्मादेतद्ब्रह्म नामरूपमन्नञ्च जायते" इति मुण्डकश्रुतिप्रामाण्यप्रदर्शनमुपपद्यते । ब्रह्मशब्दस्यास्यैतच्छ्रुतिस्थस्य कार्यलक्षणहिरण्यगर्भाख्यवस्तुनोऽस्यैवाभिधायित्वात् । इतरथा मायावादमनभ्युपगच्छतो वादिनस्तदभ्युपगमस्याऽञ्जस्येन सम्प्रतिपन्त्या तद्गोचरविप्रतिपत्तिप्रवर्तनस्यैवायोगात् । "मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । इन्द्रो मायाभिः पुरुरूप ईयत" इति श्वेताश्वतरमन्त्रवर्णकसंहितावचनाविशेषाच्च मायावादित्वस्य वेद एव स्वत सिद्धतया तद्गोचराक्षेपप्रतिक्षेपाणामसम्भवात् । निरसनञ्चास्य शतदूषणीसमुपमर्दनप्रस्तावे कृतं निपुणतरमद्वैतसाम्राज्यादधिगन्तव्यतावदास्माकीनात् । प्रकृते 'तेन सहस्रधारेणे'त्यत्र सहस्रधारशब्देन पवित्रशब्दस्य विशेषणात्सहस्रधारत्वस्य सुदर्शन एव प्रसिद्धत्वादुदाहृतं श्रुतिघटकपवित्रपदमस्त्येव सुदर्शनपरमिति न च वाच्यम् । श्रुतावस्यां सुदर्शनसम्पर्कसामान्याभावस्यैव समधिगमात् । " विश्वं शतं सहस्रञ्च सर्वमक्षय्यवाचकमिति " महाभारतवचना बहुत्वमात्रविवक्षाया एवादर्तव्यत्वे "सहस्रपरमा देवी शतमूला शताङ्कुरे"ति श्रुतिघटकयोः शतसहस्रशब्दयोस्तथात्वस्यैवाऽनुभविकत्वे च तादृग्रूपार्थप्रतिपत्तिरेवात्र युक्तियुक्ता । स खल्वर्थः प्राकरणिकप्रक्रियान्तरं तावत्साङ्केतिकं न सहत इति स्थिते किम्वढीकार्थप्रकारोऽयमनुपादेय इति । पवित्रश्रुतिवर्तिपवित्रपदमपि दशापवित्रपरतया व्याकार्यैव प्रागिति न सुदर्शनवाचिताशङ्कामाधत्ते । यच्च "स तेन शैलेन भृशं रराज शैलोपमो गन्धवहात्मजस्तु । सहस्रधारेण सपावकेन चक्रेण खे विष्णुरिवार्पितेने"ति श्रीमद्रामायणे युद्धकाण्डे चतु सप्ततितमसर्गे श्लोके किञ्चाऽस्मिन्सहस्रधारत्वमस्त्येव विशेषणं सुदर्शने इत्यवादि तदप्यचतुरस्रम् । चक्रं चात्रादौ प्रकृत्य प्रवृत्तयोस्तावच्छ्लोकगतपदविशेषयोः सहस्रधारसपावकाख्ययोः पदेन तु चक्रेण समभिव्याहृतेन विशेषणभावमापन्नयोः पुनर्दार्ष्टान्तिकीभूतशैलपदसत्तात्स्वरसवाद्युद्देशाविभेदाभिधायिनोस्तथात्वस्य युक्तत्वेऽपि श्रुतिषु तु परिपठितास्वेतरयाः सामान्याश्रकात्मकापरिहार्यविशेष्यैकसध्रीचीनाया पृथत्वेन सुदर्शनपरयोजनायाः कौलेयमसमागारसमानयोगक्षेमत्वापत्तेरपरिहार्यत्वात् । यच्चाप्युक्तं "प्राजापत्यं पवित्रमि"त्यत्र "प्रजापतिश्चरतिगर्भेऽन्त"रित्यादाविव प्रजापतिशब्दस्य भगवत्परतया भगवत्सम्बन्धित्वमेव पवित्रस्य प्रतिपाद्यत इति न पवित्रशब्दस्य सुदर्शनपरत्वक्षतिरिति तदपि नोपपद्यते । दृष्टान्तेनोपात्तस्य प्रजापतिशब्दस्य "प्र-

जापतिश्चरतिगर्भे ऽन्तरि"त्यादिश्रुतिघटकस्य न हि वाचयभिप्रेतभगवच्छब्दवाच्यस्य विष्णोर्वक्तृता विद्यते । पूर्वोत्तरयोः श्रुत्यो"र्वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात् । अजायमानो बहुधा विजायत" इत्येतयोर्निर्धर्मेकब्रह्मप्रकरणप्रतिपादिन्योरवान्तरार्थतात्पर्यपर्यालोचनया त्रैलोक्यशरीरो विराडेव प्रजापतिपदेनावधारितो यतः । इह हि पवित्रे प्राजापत्यत्वञ्चाम्युक्तप्रजापतिपदवाच्यहिरण्यगर्भात्मकदेवताविशेषसत्ताकत्वमेव । न हीमं विराजं प्रस्तुतं परित्यज्याऽप्रस्तुतस्य भगवतो ग्रहणं भवति न्याय्यम् । न हि श्रुतिगततच्छब्दद्वयं वक्तृ यत भवेद्विष्णोः कथञ्चित् । पूर्वोत्तराभ्यां श्रुतिभ्यामप्रस्तुतत्वात्तस्येत्युक्तोत्तरत्वात् । प्रस्तुतं त्वमहदप्यादेयताभाप्नोति । महत्तरमप्यप्रस्तुतमुपेक्षागोचरमेव सत्यलवनवेलायामपेक्षितदात्राद्यपेक्षोपेक्षणीयशल्याज्यादिवदेवेति सुदर्शनादिपरोऽर्थो निर्मान एव । एवञ्च वाग्युद्धाविने श्रुत्यर्थसर्वस्वे सत्येवोक्तगत्या नीरसे समाशतपदनि-

५७भादिवर्णितोक्तानिर्वहणोपसंहारः। प्यतिरेकवचनविषया वा स्याद्बहुवचनविषयेतीपस्करतयोपेक्ष्यते सा पराकरणाय ।

॥ इति 'पवित्रन्त' इत्यादिश्रुत्यर्थेऽपार्थनिर्भेदः ॥

नन्वेवमपि "पवित्रमित्यग्निः। अग्निर्वै सहस्रधारः। सहस्रधारो नेमिः। नेमिना तप्ततनुः । ब्रह्मणः सायुज्यं सलोकतामाप्नोती"ति सामवेदमैत्रायणीयशाखागतश्रुतेस्तप्ताङ्कनपरायाः सद्भावे कथं न स्यात्तात्सिद्धिरिति चेदित्थम् । "पवित्रमित्यग्निः । अग्निर्वै सहस्रधार" इत्येतयोः श्रुत्यंशयो"रग्निर्वाव पवित्रमि"त्यादितैत्तिरीयब्राह्मणश्रुतिसंवादसम्भृतयोश्चकाङ्कनविकृतव्यवहारमसहमानयोरर्थत उपादेयत्वेऽपि सहस्रारो नेमिरित्याद्यवशिष्टांशानामसंवादसम्पन्नानां प्रत्युत तच्छाखायामनुपलभ्यमानतया तन्नाम्नोपस्थापनलक्षणक्षेपकतामात्रमूर्तीनामवेदादिवचनत्वेन च निर्युक्तिकत्वेन हेयैककोटिकत्वात् । न च 'पवित्रन्त'इति श्रुतौ तप्ततनुपदस्य घटकतया नासंवादोऽस्तीत्याशङ्कनीयम् । तत्र तु तत्पदसच्छायत्वसम्भवेऽपि निरूढार्थस्य हि तस्याः प्रतिपादितत्वादपार्थनिर्भेदनपुरःसरमतितराम् । समञ्चेदग्निपदेन पवित्रसहस्रारयोः सामानाधिकरण्यमुपगम्याङ्कनचेष्टितं प्रवर्तयेत्तर्हि "वायुः पवित्रमुच्यत,, इत्यादिसहपठितवाक्यान्तरे पदस्यास्य निष्प्रत्यूहमुल्लसिततया कुतो न तदादिनाऽङ्कनकृत्यं निष्पादयेदास्तिकम्मन्यः । उपेक्षमाणेनैवेनद्वचोऽतमसावप्य-

५८ आदिना सामवेदीयतयोद्धृत'पवित्रमि,त्यादिवाक्यादपि वा तत्ताङ्कनाऽसिद्धिरिति प्रतिपादनम्।

गिवाङ्मतिमन्तरा कुतो न तित्यानयिपिता पुनः प्रामाणिकम्मन्येन । तस्ततनोः पातित्यपरिणामभागितया यमालयैकयोग्यतावतो दूरतोऽपास्तैव ब्रह्मणः सायुज्य-सालोक्यवार्ता वा निःशङ्कम् । सायुज्यसालोक्यहेतुभूतज्ञानोपासनयोर्वैयर्थ्यापत्ते-रपरिहार्यत्वात् । न हि "आमा ह्यतप्ततनवः तप्ताङ्का हरिलाञ्छनैः । शृता सुभो-ग्यतां प्राप्य भुज्यन्ते परमात्मने,,त्यादिवचोनिचयस्योदाहरणं भारद्वाजस्याङ्कनक-र्मप्रतिष्ठापनायालं कथञ्चिद्वा । मनुयाज्ञवल्क्यगौतमादिस्मृतिसंवादविहीनत्वादप्रा-माण्यमेवेति प्रागेव परास्तत्वात् । वस्तुतस्तु वाक्यनिचय एवम्भूतः परमर्षेर्न युज्यते भारद्वाजस्य कल्पसूत्रकृतो ब्रह्मविदः । यत एत"त्तद्धभारद्वाजं भरद्वाजो ह वा ऋ-षीणामनूचानतमो दीर्घजीवितमस्तपस्वितम आस स एतेन सूक्तेन पाप्मानमपाहत तद्यद्भारद्वाजो शंसति पाप्मनोऽपहत्य अनूचानो दीर्घजीवी तपस्व्यसानीति तस्माद्भारद्वाजं 'शंसतीति' बह्वृचारण्यक-वचनबलाद्भरद्वाजनिष्ठमृषीणामनूचानतमदीर्घजीवितमतपस्वितमत्वल-क्षणं विशिष्टयोग्यतावत्त्वमपौरुषेयसूक्तविशेषद्रष्टृत्वेन विज्ञायमानं सत्पुनः सूक्तस्य "पिबा सोममभियमुग्रतर्द,,इत्येवमात्मनः समाराधन-महिम्ना पाप्माऽपहतिविभूत्याधिक्यलक्षणं कथमन्यथा "पतितं तप्तालिङ्का[illegible]यं चक्रा-ङ्कितमथापि वे,,त्यम्युदितवचनोपवर्णिताऽङ्कनक्रियाजन्यपातित्यप्रसक्तिमुपावस्मिन्स-हेत वा कदाचित् । श्रुतिगतविशेषणानामनूचानतमत्वादीनां तप्ताङ्कनाभिधानपा-पाचारं प्रत्यवरोधकत्वात् । नह्यवरोधकमारोपितमनुमन्यते धर्माभासं सुभ्रान्तानाम् । आत्मनिष्ठसालोक्यार्थाविर्भावनापनयनसामर्थ्यस्य सांसिद्धिकत्वात् । तस्मादसम्भाव्य-द्रव्यस्वरूपप्रणयनं नाभिमतमेवाऽस्त्यणीयो वा मुनीनाम् । एवं तर्ह्यरचयितैतासां वाचामन्य एवासीद्भरद्वाजनामा तप्ततनूरामानुजीय इति वाक्यवैखर्याऽवगम्यते । "पवित्रं विततं ब्राह्मं प्रभोर्गात्रेषु धारितं श्रुत्यैवाचाङ्क्ष्येद्गात्रे तद्ब्रह्म संमवाप्तये । यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ब्रह्म तेन पुनीमहे ब्राह्मणश्रुतिबृंहितामि,,त्यादि-रपि श्लोकनिकरो हारीतस्य संवादकमन्वादिस्मरणान्तरमृग्यत्वात्तत्रापि रामानुजव-र्मैकचतुरावेशरूपितत्वादर्वाचीनरामानुजीयकृतक्षेपणकृत्यो विज्ञायते विस्पष्टम् । नैता-वता मुनित्वमत्राभिनिवेष्टव्यं तनुतरमत्या वा मानवेन । इत्यलन्न भारद्वाजीयतयो-दाहृता "अतप्ततनव,,इति वचनस्यैव शब्दतो वाऽर्थतोऽङ्गीकरणासिद्धौ का वा पवि-त्रश्रुतेरङ्कनयाऽर्थप्रामाण्यप्रत्याशा ।

५९ वादिनाभारद्वाजहारीततयोदाहृतवाक्यानि न्यायुरेव तयोरर्थौ. कितमन्यावेव तप्तमानौ तावासन्नवमनूरामानुजीयावेति फलितोऽर्थः ।

यत्तु "विष्णोर्नुकेन मन्त्रेण तापयित्वा सुदर्शनम् । चरणं पवित्र-मिति द्वाभ्यां तदभिमन्त्रयेत् । पवित्रन्ते विततमिति मुद्रयेद्दक्षिणे भुज,,इति वचांसि

१० 'विष्णोर्नुकमि'त्यादिमन्त्रवर्णानां यौगिकविनियोगपरतेति परमार्थं तत्साधकतयोदाहृतसनकादिवाक्यानां प्रतिष्ठितवेदाद्यादिप्रमाणविप्रतिषिद्धतयाऽनुपादेयताप्रतिपादनम्।

सनकस्मृतिगततया सौदर्शने कर्मणि विनियुक्ततया चोद्यन्ते तन्नोपपद्यते । महाभारतादौ सनकस्य ब्रह्मात्मैकत्वप्रतिपत्तिमत्त्वेन सङ्कीर्तितस्य देहेन्द्रियादिवासनासामान्यविनिर्मुक्तस्य भगवतस्तद्वासनाविवृद्ध्यौपयिकप्रक्रियालापकत्वमन्याय्यं यत । वस्तुतस्तु "आभिप्लवषडहेपृष्ठ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थमिदमादिसूक्तद्वयं विनियुक्तम् । सूत्रितञ्च "विष्णोर्नुकमिति सूत्रे "परोमात्रयेत्यच्छावाक,,इत्याश्वलायनेन भगवता । एवञ्च श्रौते कर्मण्यच्छावाकाद्यृत्विककर्तृकाविष्णुदेवतोद्देश्यकाविशिष्टहोमव्यवहारस्यैव प्रस्तुततया न ततो विरुद्धयमानमायिकप्रयोगोऽयमादरगोचरो भवेच्छौनकीय अंशतो वा सुदर्शनस्य वा तत्तापनादेः पदेनैकनमेनग्र्वटकेनानुक्रमणिकानिरुक्तकल्पाद्येवंविधव्याख्यानहीनेन तद्बन्धानभ्युपगमाच्च । न हि "विष्णोर्नुकमि,,त्यत्र विष्ण्वादिपदानामापातश्रवणेन वा दग्धाङ्कानामभिनिवेशसंसिद्धिः । तत्पदबोध्यताया "विष्णोर्व्याप्तिकर्मण,,इति निर्वचनानुरूपायाः स्वारम्भकव्यूहविशेषविध्वंसनपटीयस्यास्तैरेतैश्चित्तशान्त्या शोचयितव्यत्वात् । यद्यपि शिवादिद्रोहिणां नोदीयादेव चेतःशान्तिः कल्पान्ते वा तथापि सत्पथाविद्योतनैकहेतवे वचनव्यक्तिराञ्जस्येनासावित्यवगच्छन्तु तटस्थजनाः । न हि "चरणं पवित्रमि,,त्यस्य वा मन्त्रस्य सुदर्शनाभिमन्त्रणे विनियोगो गृहीताशिष्टग्रहः । अपाद्याख्यानामिष्टीनां हविषः पुरोऽनुवाक्याया एव मन्त्रेण किलानेन विधीयमानत्वात् । "पवित्रन्त,,इत्यस्य तु मन्त्रस्य वादिकृतविनिवेशविषयदुरालापसमूलोन्मूलनमभिवृत्तं न प्रस्मर्तव्यम् । तथा च मुद्रणं वा दक्षिणे भुजे मन्त्रेणानेन न विधीयत इति सुस्पष्टम् । विनियोगस्याऽप्यस्य पुरस्तादुपदर्शितत्वात् ।

यत्तु "चरणं पवित्रं पुराणं वाङ्मयं शुभं तेन चक्रेण सन्तप्तास्तरेयुः पातकाम्बुधिम् । पवित्र ब्राह्मणस्पत्यं जगद्व्याप्तं हरेस्सदा तेनातप्ता तनूर्येषां न ते यान्ति परं पदम् । तेन तप्ता तनूर्येषां ते प्रयान्ति परम्पदमि,,ति पाद्मपुराणोत्तरखण्डे द्वितीयाध्यायस्थतयोदाहृतं वचोजातं तत्तूपावृत्तभरद्वाजहारीतादिवचननिराससम्प्रयुक्तयुक्तिभिरेव प्रत्युक्तं वेदितव्यम् । पुराणांशस्याधिकतरविचारमाश्रित्यापि विगान-

बाहुल्यादेव पुराणान्तरस्य पराकरणं तप्ताङ्कनस्य प्रकमत्येव प्रतिप्रसक्तम् । यत्त 'शुद्धेन वन्हितप्तेन ब्रह्म तेन पुनीहि नः । अस्मिन्हि बिभ्रते देवा महोन्नतपद यगु, रित्यादिशब्दसद्भावमुपबृंहणगततयाऽबोचत् तच्च तार्तीयेन पुनर्विषयान्तरवादिना नीयमानमन्यथा किमत्र जानीया । अपार्थप्रतीतिमृते किमप्यन्य न ब्रूया स्त्वद्वाद तदा तन्न्यायेन वाद तावक मृपामथ ब्रूयादेव यथावत्स वादिजन इति न कथञ्चित्पारयस्यपन्होतुमन्यार्थमर्थयितु वा स्वार्थम् । इत्थञ्च पवित्रश्रुतेस्तप्ताङ्कनप्रत्यायकोपबृंहणलेशस्याप्यवास्तवतया वेदतदङ्गस्मृतीतिहासपुराणशिष्टाचारवाह्यमेवाङ्कनमेतादिति सिद्धम् । यदप्यकूजत् पवित्रश्रुते कर्मान्तरविनियोगप्रतीतावपि गौणमुख्यविनियोगाना बहूनामेकस्य सद्भावस्थले मुख्यार्थमनुपमृद्यैव कथञ्चित्तत्तद्विनियोगनिर्वाहवदिहापि तथा निर्वाहसम्भवान्मुख्यत्वसम्भवे प्रयोगभेदेन तत्परत्वस्यापि सम्भवे बाधकाभावाच्च न चक्रधारणपरत्वविरोध इति तदप्यपभाषितम् । विनियोगाद्युदाहृतकल्पसूत्रसङ्कीर्तिताद्विनियोगान्तरस्यैव वाऽत्यन्तमप्रतिपत्ते । न हि कल्पसूत्राहृते वेदाङ्गतयाऽवधारितात्किमप्यन्यत्प्रस्थानं न प्रभवत्यवधारयितु विनियोग मन्त्राणाम् । अकल्पत्वादेव प्रस्थानान्तरस्य वेदान्प्रति सर्वकालम् । न ह्यनपेक्षितार्थेन तन्त्रेण तन्त्रान्तरीय वस्तु विधानायाल वा निषेधनाय । सर्वेण सर्वस्यैव वस्तुनो निर्व्वर्त्यतापत्तेरपरिहार्यत्वाच्चेदिदमध्यवसीयते विनियोग एक एवास्ति मन्त्राणा कल्पसूत्रप्रस्थानसङ्क्लृप्तो यथामानमिति । इतरथा स्वैरिमानवसमुद्धावितार्थनाष्टासहत्वलक्षणरिरक्षयिषासशीलिना नु वेदाङ्गाना व्याकोपापत्ति । प्रयोजन तेषा "रक्षोहागमलध्वसन्देहाः प्रयोजनमि,,ति दर्शयन्त्या अत्रभवत्कात्यायनवाचोऽनुपादेयताप्रसक्तिश्च । एवञ्च पवित्रमित्यग्निरित्यादिवाचामतप्ताङ्कनपरता च प्रायेण क्षेपकतेत्यवधेयम् ।

अथा"थ यजुषि काठके पठ्यमान——चरण पवित्र वितत पुराण येन पूतस्तरति दुष्कृतानि । तेन पवित्रेण शुद्धेन पूता । अतिपाप्मानमराति तरेम । लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमान महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरण नो लोके सुधिता दधात्वि,ति मन्त्रद्वय व्याख्यायत इति प्रतिज्ञाय सुदर्शनपरतया व्याख्यातेय मन्त्रद्वयी समीहितसाधनायाल नो वैष्णवाग्रयायिनामिति चेन्नैवम् । आपाद्यास्याना

६१ चरण पवित्र। शाकस्य द्वारमित्यायाम त्रयास्सुदर्शनमहिमानुवर्णन निराकरणमुखेन कथ्यत्युपानबद्ध्यो मन्त्रविनियोगानुपदर्शनम् ।

मिर्षीनां याज्ञानुभाष्याया एव सुदर्शनतप्ताङ्कनान्त्रिसस्पर्शसामान्याभावत्वा अत्र

निर्दिष्टत्वे तद्विषयविषयव्याख्याप्रवृत्तेर्दिनोऽन्याय्यत्वात् । असिद्धे विषये स्वर्गो-
चरोपचयापचयचिन्ताया "मृगतृष्णाम्भसि स्नातः खपुष्पकृतशेखरः । एष वन्ध्या-
सुतो याति शशशृङ्गधनुर्धरः ,, इति वच्छून्यार्थतयाऽकार्यकारित्वाच्च । न चायं
चरणशब्दः सुदर्शनाभिधायीति धानुष्कयज्वनाम्ना त्रिवेदीभाष्यकारेण व्याख्याना-
द्नोऽयं शब्दो देवताविशेषपर इति ज्ञानयज्ञाख्ये भाष्ये भट्टभास्करेण व्याख्या-
नाच्च सुदर्शनवचन एवायं चरणशब्द इति सन्तोष्टव्यम् । धानुष्कयज्वनाम्नः
त्रिवेदीभाष्यकारस्यैकेनापि ग्रन्थकारेण क्वचिदपि वा ऽनुदाहृतत्वात् । भट्टभास्कर-
कृतवृत्त्या तत्तदाम्नायभागे ऽनुभूयमानया चरणशब्दो देवताविशेषपर इति वच-
नव्यक्तेर्विष्णोरेव पादेन्द्रियाभिमानिदेवताविशेषतया निर्देशादनिर्दिष्टत्वाच्च तस्य-
दवेचनया सुदर्शनस्य । यथा चाम्नायते " अग्निर्वाग्भूत्वा मुखं प्राविशदादित्य-
श्चक्षुर्भूत्वा ऽक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नि " त्यादि । स्म-
र्यते च " वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः । वक्तव्यमधिभूतं च व-
ह्निस्तत्राधिदैवतम् । पादावध्यात्ममित्याहुर्गन्तव्यं यच्च तद्गतम् । अधिभूतं
तदित्युक्तं विष्णुस्तत्राधिदैवतमि,,ति ॥

एतयोर्विस्पष्टाभिधेयप्रतिपादनप्रवणवार्तिककारिकाः पुनः " श्रोत्रम-
ध्यात्ममित्युक्तं श्रोतव्यं शब्दलक्षणम् । अधिभूतं तदित्युक्तं दिशस्तत्राधिदैवत
मि"त्यारभ्य " हस्तावध्यात्ममित्युक्तमादातव्यञ्च यद्भवेत् । अधिभूतं त-
दित्युक्तमिन्द्रस्तत्राधिदैवतम् । पादावध्यात्ममित्युक्तं गन्तव्यं तच्च यद्भवेत् ।
अधिभूतं तदित्युक्तं विष्णुस्तत्राधिदैवत मि,,त्येवमाद्याः सम्मासन्ते । एतेन पा-
देन्द्रियाभिमानिन्या ननु विष्णुदेवताया अभ्यर्हिताचारनिर्वर्तनौपयिकयोग्यतावत्या
"अग्निर्देवानामवमो विष्णुः परमः । अग्निरग्रे प्रथमो देवतानां सन्नातानामुत्तमो
विष्णुरासीदि ,, त्यादिश्रुतिविशेषसम्प्रतीतस्वेतरदेवतासमवायसहभाविनिजभावाया
वृत्त्यन्तरप्रत्यासत्या कथञ्चित्प्रतिपत्तिसम्भवे ऽपि तल्लाञ्छनानुस्मारकाङ्कनकर्मणः
सम्पर्काभावमेव मानाभावादधिगच्छामो यतो ऽनुवाके किलाऽमुष्मिन्नुदीरितक्रिया-
याः मुद्राग्रहैकगृहीताया उदर्कादिसामग्रीसामान्यविहीनायाः प्रागभावाप्रतियो-
गित्वमथापि तद्ध्वंसाप्रतियोगित्वञ्च । वस्तुतस्तु प्रस्तुतप्रयोज्यतालक्षणानामि-
ष्टीनामनुष्ठानात्मकसामर्थ्याधायकेन्द्रियपाटवं वा तदनुग्रहायत्तवेदार्थसमाचारश्च-
रणशब्दाभिधेयो नेतव्यः । एतावतैव प्रकरणस्यास्यानवद्यवेदार्थलक्षणस्य च-

रितार्थत्वात् । न ह्येतस्याधिकारे तापनप्रसक्तिर्देहस्य विचारसहा । त्रैवैव हि निर्विचारणया समुपस्थापितत्वादर्थस्यास्य सुमन्दमतिभिः परम्परातः । इतरथा शीक्षितधीसहस्रव्युदासव्यापारास्पदा तस्मिन्न स्यादेव दुर्निवारा । इत्थञ्च कल्पादिप्रमाणमात्रनिर्णेमनार्हो ऽयमर्थश्चरणश्रुतेरुपेक्ष्यते खल्वास्तिकाभाससन्तप्तगात्रायाम्युद्भावित आसमन्तात् । कल्पादिप्रमाणकार्त्स्न्योज्जृम्भी तु विचारणमुन्नीतो ऽर्थो मनीषिमान्यैकमान्यो यथा "चरत्यनेनेति पादेन्द्रियं 'चरणं' शास्त्रीयाचरणं वा तेनोच्यते । तच्च 'पवित्रं' शुद्धिकारणं 'विततं' सर्वप्राणिविषयत्वेन विस्तीर्णं 'पुराणं' सृष्ट्यादिमारभ्य प्रवृत्तत्वाच्चिरंतनं 'येन' चरणेन देवेन 'पूतः' शोधितः पुरुषः 'दुष्कृतानि तरति' पापानि विनाशयति 'पवित्रेण' अन्यस्य शोधकेन स्वयमपि 'शुद्धेन' तेन चरणदेवेन 'पूताः' वयं 'पाप्मानमरातिं' पापरूपं शत्रुं 'अतितरेम' अतिशयेन लङ्घयामः ॥

१२ उक्तमन्त्राणामशेषवेदाङ्गसम्मतमर्थनिर्वचनं पुनरस्मीर्वा तस्माङ्गनपरतादुरुहनावधूननञ्च ।

तत्रैव याज्यामाह । "लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितां दधातु" इति । यदेतच्चरणाख्यं देवतास्वरूपं तदेतत् 'नः' अस्माकं स्वर्गलोके सुधितां सुखयुक्तामवस्थितिं 'दधातु' सम्पादयतु । कीदृशं चरणं 'लोकस्य द्वारं' स्वर्गस्य द्वारवत्प्रवेशसाधनं 'अर्चिमत्' अर्चनायुक्तं सर्वैः पूज्यं 'पवित्रं' शोधकं ज्योतिष्मत् त्विषा प्रकाशनसामर्थ्योपेतं 'भ्राजमानं' स्वयमपि दीप्यमानं 'महस्वत्' माहात्म्ययुक्तम् । 'अमृतस्य' पीयूषस्य 'धाराः बहुधा दोहमानं' अनेकप्रकारेण सम्पादनशीलमिति श्रुत्यर्थो हि निरवद्योऽवधार्यताम् । न च तप्ताङ्कनमास्तिकैरनादिकालतोऽनुष्ठीयते तत्फलं च सर्वपापनिवृत्तिः तत्पूर्वकमस्माज्ज्वालाकिरणतेजो हि शोभमानं सुदर्शनं परमपदे निरतिशयसुखं स्थापयतीत्यभिनिष्पन्नतयाऽर्थवर्णनं चरणश्रुतेर्युज्यते न्याय्यं वादिनः । सर्वेभ्यास्थाऽतिचारितरमणीयत्वात् । अधुनातनैरप्यास्तिकैरननुष्ठीयमानम्प्रत्युत प्रत्यर्थं निरस्क्रियमाणं नाम तप्ताङ्कनाख्यं वस्तु नादिकालप्रवृत्तेस्तरतमभावेनास्तिक्यसम्भाविनात्मभिः कथङ्कारमादृतं स्याद्दुष्कृत्यम् । यद्यादृशाङ्कना एवास्तिका आसुर्नाऽदृताङ्कना इति ब्रूषे तदाऽभ्युपकरीत्या कृत्स्ना एव महाजनास्त्वत्परिदेवनाद्दुर्निरीक्षणाक्रान्ता आसन्नथं ते सहेरन्ते कथं वा सर्वतन्त्रसिद्धान्तिनो दुर्नयाधीनं सन्न्यायप्रगेणार. । न कथञ्चिद्धीति

निरूपणे साहजिके मिलिता एवालापा मृद्गेषु रेवायास्तार्किकीनाः । परमपदनिरतिशयसुखयोस्त्वद्दुदीरितयोरसम्प्रतिपत्त्या सम्प्रतिपत्तिस्तेन निरयपदनिरतिशयव्यसनयोरेव जागरूका । न च पुनः पापनिवृत्तिकामस्तप्तचक्रधारणलक्षणसंस्कारविशेषं कुर्यादिति परमपदप्राप्तिलक्षणमोक्षकामस्तादृशसंस्कारविशेषं कुर्यादिति च विधिः फलिनो द्रष्टव्य इति वाचोयुक्तिर्युक्ता व्युत्पादकम्मन्यस्य । लिङादिप्रत्ययघटितस्य हि वाक्यस्याद्यावध्येकनमस्य वाऽङ्कनसंस्कारकर्तव्यताग्राहकस्य वादिनाऽनुच्चारितत्वात् । वाक्यस्याङ्कनकर्मण्येवमात्मनो भारत्या अप्याख्यातुमशक्यत्वं त्वधिगतमेवाभियुक्तैः । न चापि विधिः फलतीति सूक्ष्मदर्शिता दर्शनदूषितस्योपपद्यते कार्यकारिणी यतो वयं विध्युदयौपयिकपरिकरपारम्परीं मृग्यामहे विशिष्टावगत्यै विस्पष्टाभिधेयधीनिदानार्थवादवाक्यावल्या माध्यमिकमतोन्मेषचमत्कारचिन्तितत्वात् । "शेमुषी भक्तिरूपेति,, श्रीभाष्यप्रतिपादितभक्तेरेव श्रीनिवासनिष्ठायाः परमपदप्राप्तिहेतुतया निर्दिष्टाया विग्रहविशेषापत्तिरतयासत्यङ्कनकर्मणः पुरो मार्गे भक्तेरप्यतिशयितयोग्यतापादकत्वप्रत्ययवतोऽत्र वादिमानवाहतस्य च । एतेनाप्यपार्थ एव पूर्वपक्षिणः समुन्मीलन्नुन्मार्गितो वेदितव्यः । न हि "चरणं प्राङ्गणे चक्र,, इति वचनं निघण्टौ वेदानां क्वचिदस्ति न वा नैरुक्ते । प्रागेवाऽत्र नैघण्टुकपाद्मपुराणश्रीशास्त्रवचनतयोदाहृतपदपद्धत्या मृषात्वस्य विस्पष्टं प्रसाधितत्वात् । इत्थं चरणशब्दस्यासुदर्शनार्थत्वे सर्वतः सिद्धे सुदर्शनवस्तुप्रत्यायनानुकूलकुप्रवृत्तिं चरतेर्गत्यर्थकत्वात्प्रत्ययस्य करणार्थकत्वाच्च परगतसाधने च यौगिक चरणशब्दस्य विशेष्यपरत्वमन्येषां निर्वचनविवक्षया विशेषणपरत्वं "सुचितवसुधितनेमधितधिष्यधिषीयत्वे,, त्यादिनाऽनर्थव्युत्पादनोपायलक्षणां विदाङ्कुर्वन्तु दोषज्ञगणाः । न हि पुना "राज्यं हुत्वा ततश्चक्रं तदग्नौ प्रतप्ते गुरुः । चरणं पवित्रमिति तच्चक्रेणाङ्कयेद्धुजमि,,ति वृद्धहारीतस्मृत्युपन्यासेन वा विनियोगो मन्त्रस्यास्य न्याय्यो मन्तव्यः । हारीतोदाहरणधाष्टर्यस्योदाहर्तुरसद्धृदय प्रत्याख्यानं विहितं नूनं यायादेव विदुषां चेतोवर्त्मनि यस्मात् । तथा च मन्त्रयोरेतयोर्निर्यारण्यतीर्थोपवर्णितप्रकरणार्थेनैव वेदाह्वावतरणसमलङ्कृता च निरोधीवन्येनि स्थितम् ॥

इति विष्णोर्नुकम् । चरणं पवित्रम् । लोकस्य द्वारमित्यादिमन्त्राणां चक्राङ्कनपरतानाङ्कानिरासः ॥

ननु "चमूषच्छ्येनश्शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति," इति मन्त्रसमाम्नानबलाद्भगवद्गोविन्दचक्रादिलाञ्छनधारणस्य सुस्पष्टप्रतीत्या कथङ्कारं तद्व्युदसनं विधीयतामिति चेन्मास्मैवं मंस्थाः । भगवल्लाञ्छनलेशस्याऽप्यत्राप्रतिपत्तेः । सूक्तं हीदं "प्रसेनानीरि,,ति चतुर्विंशत्यृचमेकादशं दिवोदासपुत्रस्य प्रतर्दनाख्यस्य राजर्षेस्त्रैष्टुभं पवमानसोमदेवताकं विद्योतते । तथाचानुक्रम्यते "प्रसेनानीश्चतुर्विंशतिर्दैवोदासिः प्रतर्दन इति गतोऽयं सूक्तविनियोगः । एवञ्च ऋच एतस्याः पूर्वापरासां नाम सोमस्यैव देवतायाः स्वरूपसङ्कीर्तनलक्षणमहिमावबोधिनीनां पुनरतिरिक्तार्थावरोधिनीनां परं विनियोगतात्पर्ययोगमकत्वे तद्वत्स्वान्तर्गतोपोद्बलकबलविभेदसमलङ्कृतत्वे हन्तर्चोऽमुष्या एव मध्यपातिन्याः पुनरपक्षपातिन्याः पाक्षिकाभिधेयगोचरचिन्तासन्तानः सामञ्जस्यं नाश्नुवीत प्रमाणभूतानाम् । अन्यथाऽप्रस्तुतमप्याराद्धं मतिवैकल्याद्वाच्यतामस्वाध्यायाऽनुगुण्येन सर्वत्र सर्वस्यैव सर्वार्थतापत्तिः । इत्यच्चानिष्टमेवेष्टमर्थयतो वा देवानांप्रियस्य " ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रणीथः पदवीः कवीनां तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् । मर्यो न शुभ्रस्तन्वं मृजानोऽत्यो न सृत्वा सनये धनानाम् । वृषेव यूथा परिकोशमर्षन्कनिक्रदच्चम्वो३राविवेश,, इत्येवंरूपे ऋचौ स्वाव्यवहितपूर्वोत्तरे मारिके भवन्त्यौ । न ह्यमुयोः स्वान्तर्वर्तिपदपूगेन सोमस्यैव ग्राहयित्र्योरन्यतरा वा ऋग्भगवदायुधं वा तापनं तस्याभिधत्ते । यद्यगमिष्यद्विगानावकाशशीलितया वाद्यभिहितप्रतिपत्तिस्तदा नाकरिष्यद्देवोपेक्षां तदाकर्षणविषयिणीं भवन्नपि मतिमानयमायुष्मान् । ऋचि त्वमुष्यामायुधगोविन्दुपदे यदृच्छया प्रतिपद्यमानः पुनरप्रतिपद्यमान एवाभिप्रायं तयोरयोग्यमयदकस्मात्कुत्सिताभिधेयं सुधीतनितिरस्कारभाजनं सर्वशः । तितउसत्तासमुल्लासितात्मानो न सेहिरे प्राञ्चो न वा सहन्तेऽर्वाञ्चो वस्त्वेतत्तत्पदबोध्यतया शास्त्रस्याः । "युधृप्रहरणे,, इति स्मरणाद्रणरङ्गकालीनधनुर्धारिसमुत्सादनानुकूलविशिष्टव्यापारकरणात्मा व्यक्तिविशेष आयुधम् । तदिदं स्वस्वकालीनात्मसेतुभेत्तृदैतेयमानवविमोहनायैव प्रयोगयोग्यमुन्मार्गिपरिरक्षिताङ्कनकर्मणे धातुशक्लसम्भनोदिताय भगवद्दिव्यदेहैकदेदीप्यमानं करचरणादिवदभिन्नप्रतीतिमात्रसमास्पदं कथमन्यथा परिणेतुं स भगवान्स्वभक्तो

६३ चमूषच्छ्येनेत्यृचस्तत्साङ्गनपरत्ववर्णनं वादिनो निराक्रियते मानैस्समस्तैरेवातितराम् ।

वा वियोजयितुं प्रभवेत्ततस्तदाभास इत्याक्षेपो वा समाक्षेप्तुराराधकाभासदुर्दैवकथानुकार्येवाऽपतत्यतितराम् । न हि नारायणो भगवान्पदाद्गोविन्दात्मकादृते पदे न गोविन्दात्मना क्वचिदपि सङ्कीर्तितः परिदृश्यते । अत एवामरकोषादौ "विष्णुर्नारायणः कृष्ण,, इत्यारभ्य "गोविन्दो गरुडध्वज" इत्येवं प्रवर्तितायामभिधानपरम्परायां पश्यामः सर्वत्रापि "गोविन्द,, इत्येतदेवाविशेषात् । तद्रूपप्रसाधनन्तु योगेन केनचिदेच्छिकेन सम्पन्नप्रायमपि योगेन केनापि न भवत्येव वक्तृ विष्णुदेवतायाः पदमेतत् । "वेदान्तो वैदिकाः शब्दा सिद्धा लोकाच्च लौकिका,, इति पस्पशाह्निकधृतकारिकार्थपर्यालोचनयाऽपि गोविन्दं गोचरीकृत्य भगवन्तं प्रयुक्तात्पदादन्यदेवेदं "गोविन्दु,, पदं वस्त्वन्तरवाच्येव प्रतिपद्यामहे । किं तदित्याकाङ्क्षायां यद्गूणां गवां लम्भकः सोम एवानुक्रमणिकाकल्पादिभिरधिगम्यते । तस्यैवात्र प्रस्तुतत्वात् । न हि तृज्वद्भावोऽत्र छान्दस इत्येतावता गोविन्दुपदनिष्पत्तिः । विधानविशेषान्तरस्यापि तद्विषयस्याप्रदर्शितत्वात् । न वा तावता तद्विग्रहलाभेन विग्रहान्तरवतो गोविन्दस्य क्वचिल्लाभ उपजायते । तृज्वद्भावापवादिकाया "द्रुकृपुत्रदोहनादेश्चे,, त्यादिवामनकारिकाया जागरूकत्वात् । "विन्दुरिच्छुरि,,ति पाणिनिस्मरणस्य तुप्रत्ययान्तत्वेन निपातनविधायिनस्तद्रूपापत्तिविघटनाच्च । "तुप्यतु" नयेनेदमादृत्यापि षष्ठचन्तं परिकल्प्य पदेनानेन शेषिभावमापाद्यमानस्यैव विष्णोर्गोविन्दस्य "द्रप्स,, शब्दशब्दतयोपादीयमानशेषभावापन्नस्य जीवस्य वर्णनमिष्यते सोपपत्तिकम् । गौणमुख्यादिसम्बन्धावगाहिभेदान्वयस्यात्रात्यन्तानुपपत्तेः । अभेदान्वयस्यैवैकविभक्त्यन्तपदोपस्थापितधर्मिसमनियतस्येह "शाकुनद्रप्ससचमानमहिषात्मक,, पदबहुत्वगोचरस्य स्वारसिकत्वे विशेषणात्मनस्तत्पारम्परीमध्यपातिनो "गोविन्दु,, पदस्यापि तद्वत्तैव "ऋषिमना,, इत्यव्यवहितपूर्वर्गगतसोमशब्दं प्रति विशेष्यभूतमानुषङ्गिकमुदया सम्पद्यते । न चेमां सदर्थव्यक्तिं परित्यज्यासत्पदपदार्थप्रलापो भवेत्तत्त्वग्राही । न वा गत्यन्तराभावकृतात्मकौशलप्रदर्शनं विचारसहम् । तस्यैवात्राप्रस्तुतत्वात् । यत्र हि तात्पर्यानुपपत्तिलक्षणन्यूनताविशेषावाप्तिस्तत्रैव तदपोहनाय पदपदार्थस्वरूपव्यतिक्रमणमुपपद्यते न्याय्यं न त्वितरत्र । यथोक्तं "श्रीयमानपरित्यागो बाधके नास्ति स्मृते । दृष्टात्कार्योपपत्तौ च नादृष्टपरिकल्पने"त्यत्रभवद्भिर्भट्टपादैः ॥

वस्तुतस्तु नेदं सूक्तं भगवन्तं वक्ति गोविन्दम् । न वा शेषशेषिभावा-

१४ पुनरपि तेनोपवर्णितस्याप्रकृतार्थस्य पराकृतिः ।

पन्नयोर्जीवेश्वरयोः सेव्यसेवकभावं विवक्ते यतोऽत्र वादी "ममैवांशो जीवलोके जीवभूतः सनातन,, इति स्मृतिमुदाहरन्नोपादेयवचनः स्यात् । तदभावादेव हि मृषात्वं वादिनो व्यक्तीभवत्यत्युच्चैः । नापि शरीरशरीरिभावापन्नत्वाधेयत्वशेषत्वलक्षणं किञ्चिद्वा निर्दिश्यते । असङ्गतत्वादकिञ्चित्करत्वाच्च सूक्तार्थे । न हि द्रप्सशब्दोंऽशभूतजीववाची ज्ञातव्यः । अंशांशिभावमार्ग्जीवेश्वरव्यतिपङ्कस्येह मावाभावात् । न ह्यसम्बद्धोऽर्थः सम्बन्धाधीनविशिष्टप्रकरणसरणौ प्रवेशयितुमीष्टे । स्वस्वभावविलोपापत्तेरनपोह्यत्वात् । एवञ्च "द्रुप्सस्रवण,, इत्यस्माद्द्रवणशील इत्येवाभिधेये पर्युपेते स चासावत्र परिनिष्पन्नगुणातिशयशालिसोम एवाभ्युपेयते न तु जातु जीवः । तस्य स्वम्युदितगुणाऽकान्तत्वात्प्रकरणबाध्यत्वाच्च । न चेह एं प्रतिपाद्ये श्रौते कर्मण्यायुधपदवेदनीयान्युपपद्यन्ते सुदर्शनादीनि । स्फ्यकपालादीन्येवायुधानि दश किल यज्ञे परिगणितानि यतः । न हि कश्चिद्दुरभिनिवेशो वादिनो वस्तुनि यागाख्ये सुदर्शनादिकमायुधाभिधानाभिधेयतयाऽलं ग्राहयितुम् । अभिनिवेशस्यैवमात्मनोऽभिनिवेष्टुःशिवालापमहायासैकवल्गितत्वात् । न च पुनः कस्य द्रप्सइति कस्याऽयुधानीति चाकाङ्क्षाया उभयत्रोत्थानाच्छामकपदान्तराभावात्संनिहितत्वाच्च पूर्वोदाहृतश्रुत्यन्तराधैककण्ठ्येन सुदर्शनादिभगवदायुधानि वन्हिसन्तप्ततत्संयोगजन्याङ्कनद्वारा धारयन्सन्नित्यर्थनिरूपणशैली नूनं दग्धतनोर "नतुमापणा,, रुयादिनिग्रहस्थानपराहता इतैव पर्युपेयते । वर्णितरीत्या संसर्गसंसर्गिणोरनवसराच्छुतावस्या आकाङ्क्षाया एतस्या अनुत्थानादेव तच्छामकशब्दान्तरगवेषणमनावश्यकम् । न हि प्रागुदाहृताया अस्याः पुनः श्रुतेरितरेतरविलक्षणप्रकरणपठितत्वात्तादृशस्यैवार्थस्याभिधायित्वाच्च सान्निध्यं वा संसर्गो वा आकाङ्क्षा वा भवत्यथ्र योगयोग्या । तप्ताङ्कनगन्धस्याप्यप्रत्ययसंसिद्धिवदुदाहृताया अमुष्या अपि सिद्धिरविषमैव वर्णितवर्णयिष्यमाणाभ्यां तावद्गतिभ्यामुन्नीयते । न चात्र शकुनपदाच्छक्तिमत्ताया युक्तत्वेऽपि संसारादात्मन उन्नयनानुकूला शक्तिः सा युज्यते प्रस्तुना । स्वसेवनोद्भूतसंश्रितगुणाविर्भावप्रयुक्तत्वाद्दलिगृयनमानं प्रति वल्लीरसस्य सोमात्मनः मुख्यत्वम् । यत एवमतो "विभृता,, पदस्यान्येषामपि भरणसमर्थ इत्यर्थो ऽव्युत्पन्नव्युत्पत्तिप्रदर्शनपूर्वको नार्थः । अधिकारादत्र "हरनेरानोमभिनि,, त्यादिना "कनिष्ठ,, त्ययान्ताभ्यास्य स्वाधारभूतय-

ज्ञपात्रेषु विहरणशीले इत्यस्यैवार्थस्य कल्पादिसम्मतत्वात् । नापि चमूपच्छब्दो नित्यसूरिपरिषदि सीदतीति व्युत्पत्तिं सहते । नित्यानित्यसूरिपरिषद एवात्राप्रसक्तेर्दिव्यसूरिं तावत्स्त्रीशूद्रगुरुं मन्यमानस्येयमनुस्मृतिर्मलिनात्मन आलक्ष्यते ॥

६५ अत्र एतस्यास्तत्वार्थोऽवेदनम् ।

तत्त्वतस्तु सूक्तस्वामिनः सोमात्मनो विवर्तभूतस्यैव वल्लीरसस्य चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्त्या अविपन्नफलके वर्तमानश्चमूपदित्येवार्थो वेदार्थो न तु जातु दग्धतनुजल्पितः कल्पान्ते वा । अस्पृष्टनिरुक्तोऽपि तत्रत्यतया शकुनश्येनादिशब्दयोर्निर्वचनमवगाहयन्नायं दग्धात्मा मन्दाक्षमन्दाक्षतां नावत्त इत्याश्चर्यम् । नाप्यर्चिरादिगत्या परमपदगमनदशायां नित्यसूरिभिरभिमुखमागतैरनुगम्यमानो गच्छतीति स्वारसिकार्थवर्णनं तस्य प्रामाण्यमश्नुते तराम् । त्रिगनासुरिवानिशं वर्तमानस्य हि दग्धाङ्गस्य सुरासुरमानवैरपरिहार्याभिभवभूमित्वात्प्रत्युत निरयाध्वसन्धानाधीनविलक्षणक्रियापारम्परीपरिवेष्टितत्वाच्च । सम्मुखागमनकथायाः कोऽवकाश इति चिन्तयन्तु चेतनावन्तः । न हि "तुरीयं धामे,, ति पदं विशेषणविशेष्यभावापन्नं वासुदेवाख्यं परं तेजोऽत्राभिधत्ते । अपेक्ष्यैव सूर्यादिधामानि चान्द्रमसस्यैव धाम्नस्तुरीयपदेन भक्तते विवक्षितत्वात् । "तृतीयस्यामितो दिवि सोम आसीदि,, त्याद्या श्रुतिस्तथात्वमेकधामान्तरितनियमनेनावेदयति । न हि "विवक्तिपदं, विशिष्टवचनलक्षणमत्यनपरं न वा तत्र "तद्विप्रासो विपन्यवः । एतत्सामगायन्नास्त,, इत्याद्याः श्रुतयो भवन्ति मानम् । सोमवाससमाश्रयीभूतलोकस्यैव प्रकृतत्वे न ततोऽतिरिक्तस्तवनं विवक्षाविषयतां प्राप्नोति । स्थाने सदर्थत्वेऽप्यस्थाने तस्यापार्थत्वात् । ध्यानसमाधिसन्निवेशितचेतसां नाम ब्रह्मविदां स्वकाले साक्षात्कारविषयीभूतनिरवच्छिन्नप्रत्यक्तत्त्वैकमाहात्म्यानुभवस्वरूपसङ्कीर्तनस्यैवैवमादिश्रुतीनामर्थत्वे स्तुतिस्तव्यस्तोतृलक्षणत्रिपुटीपर्यवसन्नभेदप्रतिपत्तेरवेदार्थत्वात् । विस्तरस्तस्याद्वैतसाम्राज्यादास्माकीनादवगन्तव्य इति बाहुल्यभयादिहोदास्यते । विलक्षणस्थलापेक्षया प्रयुक्तायाः किल निरुक्तेर्भूयस्या आख्यातानुक्रमणिकायां माधवाचार्यैः श्रीमद्भि "विवक्ति सिपक्ति जुषन" इत्येवंरूपायास्त्वयोदाहृताया व्याख्यानकारस्यैं प्रति तेषा मान्यतरतामतिमत्ताऽवबोधनं त्वदादीन् न्याय्यमेव सर्वदा सर्वथा च । न चक्रादिभगवल्लाञ्छनधारी तत्तु स्वयं तारयितुं वेतरान्शक्नोति कथञ्चित् ।

"स्वय नष्टः परान्नाशयती,, ति न्यायात्पतितभावादमुष्य संसर्गिणा पातित्यात्ता सिरेवातितरा यतः । "पतितास्तत्संयोगिनश्चे"ति स्मृतिषु घण्टाघोषात् । न च संसारनिवृत्तिपूर्वकपरमपदप्राप्तिकाम प्रति गोविन्दायुधधारण कश्चिदप्युपदिष्ट प श्यामः । प्रत्युतोदाहृतोदाहरिष्यमाणवर्त्मना घोरतरसंसारपदावाप्तिहेतुभूतदेहादि निबिडतरवासनानिदानाज्ञानतमिस्रासमाच्छन्नतामेव दग्धतनूनामध्यवस्याम । लाञ्छ नमेतद्भगवद्भावसम्बन्धं न भजते भजत्येव तु ज्वलदयोयष्टिकासङ्गतिमहामोहमित्यस कृदवोचाम च । यत्तु "चमूषच्छ्येन,, इति च "प्रते विष्णो,, इतीत्यृचौ "पा ठयेद्धुत्वा पश्चाच्छाकुनं सूक्तमेव च । गोविन्दस्यायुधान्यङ्के बिभ्रत्सुश्रोणि वै द्विज । तुरीय धाम तद्विष्णोर्महिष्ठ प्राप्नुयादि,,ति "चमूषच्छ्येनश्शकुनो वि भृत्वतिन्द्रगब्रवीदि, ति पारमेश्वरसंहितास्कन्दपुराणवचनतयाऽत्रोदाहारि वचोजात तत्तुच्छम् । संहितादिनाम्ना वाङ्निकरस्यास्य दग्धाङ्कैरारचितत्वान्मायाविभि । यदीय विनियोगवार्ताऽपि स्यात्तदा ऋषिभि कल्पसूत्रप्रणेतृभिराश्वलायनादिभिरुप स्पृष्टा पुनरात्मप्रनाड्या पर प्रवर्तिता स्यात् । नोपस्पृष्टा न प्रवर्तिता चेत्यलीकमे वोदाहरण वादिनोऽवधारयन्ति धीराधिराजा । श्रुतेरस्या योजनान्तराण्युपबृहणान्त राणि चान्यत्र द्रष्टव्यानीत्युक्तिर्वा तस्य किमात्मिकेति विचिकित्सायां वपवच्छल मात्मिकैवेति ब्रुवते किल विपश्चिज्जना ॥

इत्थञ्चाश्वलायनादिकल्पसूत्रोपात्त एव विनियोगस्तदनुयायिविद्यारण्यो पवर्णितश्चार्थः सद्भ्यावन्मान्यो यथा । "चमूषत् । चमति भक्षयन्त्यत्रेति चम्वश्चमसा । तेषु सीदन् । यद्वा । चम्वावधि षणफलके । तयोर्वर्तमान श्येन शसनीयः शकुन शक्तः सा मर्थ्यकारी विभृत्वा । "हरतेरातोमनिन्नि" त्यादिना कनिप् । पात्रेषु विहरणशी लः । गोविन्दुर्येममानाना गवा लम्भकः । विन्दुरिच्छु । पा ३ २ १६९ । इत्युप्रत्ययान्तत्वेन निपातित । द्रप्सो द्रवणशील आयुधानि स्फ्यकपालादीनि बि भ्रद्धारयन् अपामुदकानामूर्मि प्रेरक समुद्रम् । अन्तरिक्षनामैतत् । अन्तरिक्षलोक सचमान सेवमानो महिषो महान् य एवंविध सोमः स सोमस्तुरीय चतुर्थ धाम चान्द्रमस स्थान विवक्ति सेवते । सूर्यलोकस्योपरि चन्द्रमसो लोको नियत इति "यम पृथिव्या अधिपति स मावत्वित्यादिभिश्चन्द्रमा नक्षत्राणामधिपति समा

६६ वेदाहगर हर्यैकसमलङ्क तश्रीविद्यारण्यभा ष्याधाहरणम् ।

धारित्वत्यन्तैर्मन्त्रैर्ज्ञायत" इति। एवं वादिनस्तत्ताङ्कनपरतयोपवर्णनं श्रुतेरस्या मृषामयमिति सिद्धम् ॥

इति चमूपच्छ्रुतिव्याख्यानमत्याख्यानम् ॥

१७ तप्त चक्रमित्यादिवाचा वेदपाधत्व पुनरेताभिस्तत्ताङ्कनासिद्धिरिति निरूपणम् ।

ननु भोः शतपथब्राह्मणे याज्ञवल्क्यकात्यायनसंवादरूपे दशानुवाके चक्रब्राह्मणे प्रत्यनुवाकं परमपुरुषसायुज्यसालोक्यादिपुरुषार्थहेतुतया तप्तचक्राङ्कनमूर्ध्वपुण्ड्रधारणं च "तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तस्माद्द्विरेखं भवति । ब्राह्मणः सायुज्यं स-लोकतां जयति य एवं वेदे" त्यादिवाङ्निकरेण प्रतिपाद्यमानं कथं त्वया पराहण्यतामिति । इत्थम् । सर्वं चेदं प्रलापजालं शिक्षापात्रमुपतिष्ठते यत आदौ शतपथे नन्वनुवाकसङ्केतलक्षणसंज्ञाया एवात्यन्ताभावः । ब्राह्मणसंज्ञाया एव तत्र निहितत्वात् । संज्ञा चेयं सर्वदेशीयवैदिकप्रणालीपठ्यमानपुस्तभारात्पुरातनात्तालपत्रसंचिनिकाच्चानाधितासन्दिग्धप्रतीतिविषयाऽवसीयते चतुर्दशकाण्डेष्वप्यविशेषात् । न तत्र कुत्रापि मैत्रेयीब्राह्मणान्तर्यामिब्राह्मणज्योतिर्ब्राह्मणादिवच्चक्रब्राह्मणसमाख्यं प्रकरणं किंचित्प्रतिपद्यामहे यत्र हि याज्ञवल्क्यकात्यायनसंवाद उपनिबद्ध इति मृषा रोदिषि वृथा पुनर्मन्दबुद्धे । यदि चेत्तत्र "तप्तं चक्रं द्विभुजे धार्य" मित्यादिपदपङ्क्तिः सत्या स्यात्तदा तदर्थगोचरसंदेहतो वैदिकत्वादशेषा एव विद्वांसो व्यावृत्तमतयो भवेयुरेवाविवादम् । बिभृयुर्वा लाञ्छनानि किल तानि निर्वैरं प्रत्यर्थम् । न तेऽवर्तन्त वा वर्तन्ते तद्विषयविषयविश्वासलेशभाजो जातु चित् । प्रत्युतैतल्लाञ्छनादिमन्मानवान्हुड्कुर्वन्ति दयार्द्रहृदया अप्यमत्सराः । शश्वद्दग्धाङ्ककल्पितवचोजातमेवंरूपं दाहार्थकं मृषाभूतं निश्चिन्वाना विराजन्ते सदध्वन्येव तल्लाञ्छनाद्युपलक्षणविधुरे वैदिके परमनादिनिधने स्मृतिकारकल्पकाराद्यृषिसाहस्रीपरिसेविते विचारकाग्रेसराः । यदि चेच्छतपथाच्चक्रब्राह्मणमाभीनिर्गच्छेत्तर्हि शङ्खब्राह्मणं स्वन्यायादेव कुतो न ततो निर्यायात् । गदापद्मयोस्तद्वच्छुभ्रमृद्रेखयोरपि स्वान्तर्हिततामूर्धीकयोर्विशिष्यैव ब्राह्मणानि ततो निष्कासयितुकामोऽपि लज्जयैव कयाचिदप्रदर्शयितुमना व्यवतिष्ठमान आलक्ष्यते । एवञ्च दुर्भगाभ्रयाभ्युपकल्पित "तप्तं चक्रं द्विभुजे धार्यमि" त्यादिकं वचोजालमतद्ब्राह्मणवर्त्येव सज्जम्बुकालापपूर्वमनुपमरसब्राहनयनमवजानीमहे । यथा-

यत्सशकलैककृतनतापनक्रियैव ब्रह्मणः सायुज्यसालोक्ये चेद्भवेतां तर्हि ब्रह्म वा दग्धतनूनां सायुज्यसालोक्ये वा काकणिकामात्रप्रतितन्त्राणीति कृतं व्याख्यानप्रज्ञया माननीयशेमुषीकस्य नूनं देवानांप्रियस्य ॥

ननु च भोः "देवासः पितरो येन विधृतेन बाहुना सुदर्शनेन प्रयतास्स्वर्गं लोकमायन् । येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्ति अग्निना वै होत्रा तप्तं चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत् । तस्माद्धिरेखं भवति । पुनरागमनं न याति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेदे"ति श्रवणेन देवानां पितृणां च सुदर्शनधारणलक्षणसंस्कारमहिम्ना स्वर्गलोकप्राप्तिमनूनामपि तन्महिम्ना लोकसृष्टिशक्तिलाभस्तादृशसंस्कारस्य ब्रह्मविद्धार्यमाणत्वार्थवादमर्यादया प्रदर्श्य तप्तचक्राङ्कनसच्छिद्रोर्ध्वपुण्ड्रधारणे परब्रह्मसायुज्यसालोक्यप्राप्तिलक्षणफलवती इति निरूपितं मया कथङ्कारमपाकुर्या इति चेदेतदेवं विजानीयाः । सर्वमेतत्सन्निपातसमयावच्छिन्नस्वच्छन्दालापविलापसोदरमेवाध्यवस्यन्ति विद्वांसः । परिहृतमेतदनुवाकसंज्ञैव शतपथे नास्तीति पुनरपि "तप्तं चक्रं द्विभुजे धार्य"मित्यादिवचो"यद्देवासः पितर"इत्यपि वाक्पटलं न भवत्येव तत्रेति परिहूयते मूले व्याख्याने तदत्यन्ताप्रत्ययादवच्छेदकावच्छेदेन । सामानाधिकरण्येन प्रतीतिरेवं सत्येतस्याः प्रतिबद्धेति विजानीयाः । अभिलाप्याभिलापकयोरभावे प्रचारवार्तायास्तयोः किमात्मकतेति परं मन्वीथाः । सत्यप्येवं 'तुष्यतु' नयेन याथार्थ्यमेतामवतार्य विचारयताऽपि नितमत्यनीकभावापन्नं "ज्योतिष्टोमेन स्वर्गकामो यजेत । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती" ति परिगणितविध्यर्थवादवाक्यवल्लीप्रतिपाद्यमानवस्तुसमूहबहिर्भावभावित्वात्कृत्स्नं पुन एतस्यैव तापनोर्ध्वपुण्ड्रधारणात्मनो मृषात्मकतैवापद्यते । दग्धो दाहेन जन्तुमन्तानसामान्यसंमीयमानेन शाखेत्यादिकूजितानन्दनादिदृष्टफलातिरिक्तफलप्रत्ययस्यानौचित्यात् । न ह्यनुचित उचितावगतिर्न्यायसिद्धा । सर्वेण सर्वस्य साध्यतापत्तेरपरिहार्यत्वात् । न हि देवाः पितरो वा आजानसिद्धाः पुनर्विभूतिमन्तः सत्त्वोत्कटास्तामसकार्यमङ्कदाहाद्यावेयुर्जातु चित् । न हि लोकमर्जनप्रज्ञावत्वे तन्त्रं भवत्यङ्कनं यतस्तत्प्रयोजककामसयापास्तपोयोगात्मिकायाश्च मानस्याः सकाशात्तिरस्कारगोचरं भवत्यगुरुधैर्यसश्च भामभया स्वप्रभैव वितेनिरे केवलं मनवो वस्तुसृष्टिम् । न हि वस्तुनो

९८ देवासः पितर इत्यादीन्यपि वचनान्यर्थवादवचनानि यत एतैरप्यनङ्कनसिद्धिरिति प्रतिपादनम् ।

ब्राह्मण्यभाजो वहन्ति वा वाहयन्त्यङ्कनं कथंचित् । ब्राह्मण्यात्प्रभ्रश्यतापत्तेः प्रत्यासन्नत्वात् । न च सच्छिद्रोर्ध्वपुण्ड्रधारणं पुनरागमनादिभयात्तापनोदनं न्याय्यं पश्यामः । सत्वशुद्धिप्रयोजकीभूतकर्मोपास्त्योर्बाह्याङ्गत्वेनाभ्युपेतत्वे तिलकाद्याचारस्य न तेन बाह्याङ्गभावभावितेनाभ्यन्तरविज्ञानलक्षणोपायातिशयसंलब्धपुनरावृत्तिनिवृत्तिरभिनिष्पद्यते नापि तत्फलभूतं सायुज्यादि नितराम् । तथा च तिलकमात्रस्यैवंरूपत्वे वेदबाह्यं चोक्तलक्षणमूर्ध्वपुण्ड्रमप्रयोजकं पर्यवस्यत्यविवादम् ॥

ननु "धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदिस्थितं परात्परं यं महतो महान्तम् । धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम् । स्मृत्वा विमुच्येत नरः समस्तैः संसारपाशैरिव चैव विष्णुः । हरेः पादाऽऽकृतिमात्मनो हितं मध्ये छिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति स पुण्यवान्भवति स मुक्तिमाग्भवती,,त्याद्यभिधेयाश्रमं कठवल्लीमहोपनिषदाथर्वणानां श्रुतिभिः स्मृतिपाञ्चरात्रादिवाग्भिश्च "ततो दिव्यं च हारिद्रं सामोदतुलसीदलम् । मन्त्रेण धारयेच्चूर्णं पुण्ड्रेषु द्वादशेषु च । ऊर्ध्वपुण्ड्रस्य मध्ये तु दिव्यचूर्णं च धारयेत् । श्रीकरं विजयं पुण्यं सर्वदोषप्रणाशनम् । ऊर्ध्वपुण्ड्रस्य मध्ये तु रजनीचूर्णमुत्तमम् । लक्ष्मीरूपधरं नित्यं द्रव्यं तत्र विधारयेत् । विष्णुरूपेण संसृष्टं तच्चूर्णं शिरसा वहेत् । तस्याऽशुभानि नश्यंति पुण्यमार्गो भवेन्नरः । ऊर्ध्वपुण्ड्रं मृदा धार्यं सच्छिद्रं सौम्यमेव च । तदलङ्करणार्थाय हारिद्रां धारयेच्छ्रियम् । विलोक्य दर्पणं विद्वानूर्ध्वपुण्ड्रं मनोहरम् । कुर्यान्मङ्गलमाकाङ्क्ष्यं हरिद्राचूर्णसंयुतम् । ऊर्ध्वपुण्ड्रस्य मध्ये तु अन्यद्द्रव्यं न धारयेत् । विष्णुपुण्ड्रेण संस्पृष्टं हारिद्रं धारयेद्द्विज ,,। इत्याद्याभिरसङ्ख्याकाभिश्च निर्णीतलक्षणोर्ध्वपुण्ड्रधारणस्य विहितत्वे कथं त्वया साहसमात्रेणापन्हूयते तदेतादिति । तत्र । सर्वस्यैवास्य वचोजातस्य वेदवेदाङ्गादिप्रतिष्ठितप्रमाणविप्रतिपिद्धत्वात् । न खलु "धृतोर्ध्वपुण्ड्र,, इत्याद्या वाचो विद्यन्ते कठवल्ल्यादौ पुरातनेष्वधुनातनेषु वा तालपत्रादिपुस्तनिचयेष्वेव सर्वदेशीयेषु स्मृत्यादौ हारीतादेरुदितवचोविन्यासविशेषसम्भवेऽप्यनुपादेयतालक्षणाप्रमाणतायाः प्रतिपत्तिस्तेषां प्रागेवावेदिता नूनं दग्धतनुजरित्रानाकूलक्षेपकतादिदूषणगणग्रस्ततासुविभासा-

१९ धृतोर्ध्वपुण्ड्रइत्यादीनि वा वचांसि न वेदादिगतानि नाप्येतैरभिप्रेतार्थसिद्धिरिति व्यवस्थापनम् ।

-याः । पुराणेषु पुनः स्वार्थप्रत्यर्थिप्रतिपादकगीर्जातं तावच्छतशोऽथ सहस्रशः प-
श्यामश्च विस्पष्टम् । तेन नो खलु वयमभिधेयं तमणुतरं वा प्रतिपत्तुं प्रभवामः ।
न च भवत्समीपे सर्वाथर्वणशाखाग्रन्थस्याभावो यज्ञोपवीतमिति मंत्रस्य यज्ञोपवी-
तधारणे विनियुक्तस्याथर्वणिकस्य खिलत्वमभियुक्तोक्तं कथं सङ्गमनीयमित्याद्युक्ति-
स्तात्विकोपादानग्राहिणी शोभते हन्त सज्जनमनोनिरञ्जनम्प्रति व्यामोहविद्रावण-
स्य । विद्रावणाभासकर्तुरप्यस्याशे स्वाभ्युक्ताथर्वेदकतच्छाखाग्रन्थस्यासंभवादति-
राम् । यदीयं तदन्तिकेऽस्तित्वभाविता स्याच्छाखा तर्हि समूला सा स्वन्यायेन
स्वरूपविरूपविद्वन्मान्यपुस्तकालयसंगृहीता विषयान्तरसहस्रवत्स्यादेवोपलब्धा ।
यक्तिस्त्वेषा स्वसमीपेऽपि सदनस्तित्वं द्योतयन्ती वदनगाम्भीर्यमेवानभिज्ञमानवव्या-
मोहजननमावेदयत्यातितराम् । उत्सन्नशाखापुनरशेषाणामविशेषाद्विशेषतो ना-
म्यत्येव कस्यचिद्वा ग्रहणमिति न्यायोऽयं विश्वजनीनः । पठ्यमानया त्वध्येत्र-
ध्यापकपरम्परया परिप्राप्तया भवितव्यमेवेति तदभावादेवावसीयते तदभावः ।
न हि यज्ञोपवीतमिति, मंत्रस्य यज्ञोपवीतधारणे विनियुक्तस्याथर्वणिकस्य खिलत्वम-
खिलवेदवादिसम्मतं स "यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत् । त-
स्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षि-
णत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्रा-
चीनावीत"संवीतं मानुषमि,,तितैत्तिरीयारण्यकश्रुत्या पुनस्तदुपजीव्याश्वलायनापस्त-
म्बादिसूत्रसन्दर्भेण यज्ञोपवीतसंवीतनिवीतप्राचीनावीतभेदभिन्नधारणविशेषविनियो-
जकेनैतैरर्वाऽनुवादसहस्रैरुज्जृम्भमाणमत्युच्चैः सङ्गतमेव भवच्च कथं सङ्गमनी-
यमिति सम्भावनामात्रं भवेज्जातु चित् । एवं चानुवादसामान्यविनिर्मुक्ता स-
र्वसी गीः प्रतिद्वन्द्विवाग्वल्लीप्रसारपराहता परमलीकैवापद्यते मृदोर्ध्वपुण्ड्रवादिनी
पुरो वेदार्थसम्मीलितस्वान्तातिशयसमारम्भाणान्तावत्संख्यावताम् ।

७० त्रिभूत्यलङ्कृतं त्रिपुण्ड्रमेव तिलकं तदेव श्रौतं पुनः सकलकर्मोपासनाङ्गभूतञ्च शिष्टाचारविषय तथा सर्ववर्णाश्रमिणां वि-

वस्तुतस्तु त्रिपुण्ड्रमेव श्रौततया पुनः श्रौतस्मार्तनित्यनैमित्तिकधर्मानुष्ठा-
नयोग्यतासम्पत्सम्पादकतया च संस्तूयते श्रुतिस्मृतिकल्पसूत्रे-
तिहासपुराणेषु । तत्किल मुख्यया वृत्त्या त्रिभूत्यपरपर्यायं भव-
ति तावद्भस्म । वृत्त्या तु भाक्तया चन्दनाद्युपजायते । धा-
रणे चास्य श्रुतयः "शंनमां भूर्मि नय्यौ जिगायत । तनामो-
जिष्ठां देवहितां च ऋत्विजः । प्रसह्य भस्मना योनिमपश्च पृ-

हितमिति नि- थिवीमग्ने। स ऽ सृज्यमातृभिस्त्वं ज्योतिष्मान्पुनरासदः। त्र्य-
रूपणम्।
म्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृता-
त्। त्र्यायुषं जमदग्नेः। कश्यपस्य त्र्यायुषम्। यद्देवेषु त्र्यायुषम्। तन्नो अस्तु
त्र्यायुषम्। अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म। स्थलमिति भस्म
व्योमेति भस्म। सर्वं ऽ ह वा इदं भस्म। मन एतानि चक्षूंषि भस्मानीत्येवमाद्याः
प्रतीततरा अधिगम्यन्ते। गृह्यकल्पकारा हि आपस्तम्बकात्यायनबौधायनसत्या-
षाढगोभिलपिप्पलादपुरोगमा विनियोगमेतेषामिदधुर्विभूतिधारणाम्नायार्थव्यव-
स्थापकाः सोत्साहम्। त एते पूर्वपूर्वकल्पकृन्मुनिमण्डलीनिरूपणमनतिक्रम्यमा-
ना मर्यादां किल सनातनीं प्रतिष्ठापयाम्बभूवुरद्वन्द्वाः। अत एवाद्यावधि शिष्ट-
विशिष्टपरम्परापरिप्राप्ताः प्रत्यर्थमशेषा एव वर्णाश्रमिणः तद्धारणाधीनसदाचार-
शीलितचेतसो विजयन्ते तत्त्वरसिकाः। भस्मधारणात्मनस्त्रिपुण्ड्रस्य तु वैदिकत्वं
ताद्रूप्येण हि तस्यासन्दिग्धाविपर्यस्तमहाजनसमाचारगोचरत्वं चादिमाश्रममार-
भ्यान्तिमाश्रमपर्यन्तमभिविहितशौचिष्केशसमाराधनाभिनिष्पन्नप्रत्यासन्नवस्त्वात्मनो
विश्वजनीनमनुभूयते। तद्धारणमन्त्रा अपि "मेधावी भूयासम्। तेजस्वी भूयास-
म्। वर्चस्वी भूयासमायुष्मान् भूयासम्। अन्नादो भूयासम्। सर्वसमृद्धो भूया-
समि" त्येते लसन्ति विश्रुताः। तत्त्वे च भस्मनः परीक्ष्यमाणे त्वनवधिकातिशय-
शुचित्वोपहितं तावद्धोमयं भवत्यस्य मूलद्रव्यम्। प्रकृतिभूता खल्वस्य वि-
श्वश्रुत्यादिपारम्परीपरिपूयमाना किलास्ति जगद्वन्द्या क्षीरसर्पिरादिहोमीयवस्तु-
पूगप्रदानौपयिकयशोवर्चोवद्विशिष्टव्यक्तिभूता परमसाधारणसर्जनक्रियाभिगामि-
नी च महेशितुः। तथाच मन्त्रा "यत्ते चर्म शतौदने यानि लोमान्य-
घ्न्ये आमिक्षां दुहूतां दात्रे क्षीरं सर्पिरथो मधु। बृहस्पतिनाऽवसृष्टां वि-
श्वे देवा अधारयन् वर्चो गोषु प्रविष्टं यत्तेनेमां संसृजामसि। बृह० अ-
धारयन् तेजो गोषु प्रविष्टं यत्तेनेमां संसृजामसि। बृह० अधारयन् पयो गो-
षु प्रविष्टं यत्ते० संसृजामसि। बृह० अधारयन् यशो गोषु प्रविष्टं यत्ते० संसृजाम-
सि। बृह० अधारयन् रसो गोषु प्रविष्टो यत्ते० संसृजामसि। बृह० अधारय-
न्नि,,त्येवंभूता अथर्वणसंहितायाः प्रकाशन्ते। कृच्छ्रचान्द्रायणाद्यनेकव्रताभिनिर्वर्त-
नवेलायां दैनन्दिनधार्मिकव्यापारसामान्यशुचित्वापादकदर्भादिद्रव्यनिवहनिरूढस-
न्निवेशसमाकाङ्क्षितायामखिलैरेव स्मरणैः स्मर्तॄणां मन्वादीनां पञ्चगव्यं ननु

गोमयगोमूत्रादिभास्मिकसत्तासमानकान्दिताभिधेयभूतं प्रतिपद्यन्ते पर्युपादेयतयाऽऽस्तिकगणाः । अवैशेष्यादेव तस्मात्प्रत्युत ततो विशिष्टतया गोमयमुपादीयते कृते तावद्विभूतेः । यथाहुः स्मर्तारः "आग्नेयमुच्यते भस्म दग्धगोमयसम्भवम् । तदेव द्रव्यमित्युक्तं त्रिपुण्ड्रस्य महामुने । अग्निहोत्राग्निजं भस्म विरजाहोमजं तथा । औपासनसमुत्पन्नं समिदग्निसमुद्भवम् । समिदग्निसमुत्पन्नं धार्यं वै ब्रह्मचारिणा । शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् । अन्येषामपि सर्वेषां धार्यं दावानलोद्भवमि"त्यादि । एवञ्च भस्मन उपादानोपादेयाद्वियथोदितस्वरूपसाक्षात्कारपर्यालोचनया वैदिकं पुरराग्नितेनोविशेषपरिष्कारादिग्रह "मग्निरित्यादिभिर्मन्त्रैः शुद्धं ब्रह्माभिमन्त्रितम् । शिवमन्त्रेण तद्धार्यं मन्त्रेणाष्टाक्षरेण वा । गायत्र्या वा च देवर्षे मन्त्रेण प्रणवेन वा । करोति शिवमन्त्रेण यस्त्रिपुण्ड्रं द्विजोत्तमः । त्र्यक्षः शुद्धतरः सौम्यः शिवलोके महीयते । अष्टाक्षरेण मन्त्रेण यः करोति त्रिपुण्ड्रकम् । विष्णोः पदमवाप्नोति नान्यथा श्रुतिचोदितम् । तौर पदमवाप्नोति गायत्र्या मुनिसत्तम । प्राप्नोति ब्रह्मणो रूपं प्रणवेन न संशयः" इत्येवमाद्यभिमन्त्रणाभिधायिवचोविशेषैः पुरस्तादस्य महीकृतमध्यवसीयते भस्म । न चास्य धारणे शैवा एवाधिक्रियन्ते नेतरे वैष्णवादय इति भ्रमितव्यं वा वञ्चयितव्यम् । शिवविष्ण्वादिदेवता व्यष्टया पुनः समष्टया समाराधयतः सर्वान्मर्त्यविशेषेण तद्धारणविधानविशेषस्य संश्रवणात् ॥

यत्तूक्तमविचारकेण केनचिच्छैवानां त्रिपुण्ड्रमूर्ध्वपुण्ड्रं [illegible] वैष्णवानां विहितं भवतीति तदुरुक्तम् । शैववैष्णवत्वादिभेदभिन्नव्यवस्थाया एव वेदबाह्यत्वात् । नो खलु वेदे शैवाः शाक्ता वा वैष्णवा इत्येवंभूताः शब्दविशेषा अभिकृत्याधिकारिणः परिपठिताः कचिदपि दृश्यन्ते । उपासनामृते देवतायास्तत्तस्याः साम्प्रतिकदुर्भगाग्रथाप्युपकल्पितं वैष्णवादिमतं न मनस्येव लोचनविषयं विशिष्टविदुषाम् । अत एव भगवच्चरणैः समूलमुन्मूलिता अभूवन्नेव दिग्विजयमहोत्साहे हेलयैवैते दुरात्मानो वैष्णवादिकम्मन्या धर्मान्तरानुयायिनश्च सहस्रशः । मृतानां तावत्तेषामुपमीवका अधुनातना अप्यमी मृतका एव सन्तः स्वस्वरूपानुरूपमेव निर्लज्जा जल्पन्तीति चित्रं न जातुचित् । नसिद्धयन्ति चेच्छैववैष्णवादयो वेदतः के तर्हि भवन्तस्तदपरादर्शिनः इति चेद्वयमभिदध्महे ब्राह्मणपरिव्राजकन्यायेन वनसिंहन्यायेन वा

७१ वैष्णवादिमतानाञ्च सम्प्रदायानां वेदबाह्यत्वप्रतिपादनम् ।

श्रौताः पुनरौपनिषदा भावामो वयमिति । न मनाक् शैववैष्णवादिशब्दाभिधेयाः स्मो यतो वयमनाधेयातिशयशास्त्युपासनासु यथाप्रस्थानं भगवद्धरिहरादौ निरूढचेतः-सञ्चारसाम्राज्यरञ्जिता अप्यखिलोपाध्यनवच्छिन्नप्रत्यगात्मज्योतिषो याथा-त्म्यपरिनिष्ठापरावृत्तिप्रयुक्तपरमार्थप्रभ्रंशनमसहमानाः स्तोकतरं वा । न हि वैष्णवादिमतभेदाः स्वातन्त्र्येण वेदानां विषयतया सम्प्रदायापरपर्यायतया वा उपादातव्याः । तत्तद्देवतामाहात्म्याद्यवबोधनाकारप्रवृत्तिमत्त्वेऽपि परमर्षीणां प्र-स्फुरत्प्रतितन्त्रार्थसर्वस्वसन्दीपितात्मानो निरवच्छिन्ने परे सर्वतन्त्रसिद्धान्तभूत अभिधानादिपाक्षिकव्याहारसामान्यविधुरे च सर्वाधिष्ठाने प्रज्ञामात्मीयां प्रचो-दितवन्तो महानुभावा नार्वाचीनविषमविषवल्लीसमानाकारवैष्णवादिमतविभेदानां बीजिभावभाविता भवेयुः कथञ्चिद्वा । एवञ्च "पूर्वपूर्वैः स्वशिष्येभ्यः कृतस्यो-पदेशस्य विषयीभूतो ह्यर्थः सम्प्रदायशब्दार्थ इत्युक्त्वा "येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् । समित्पाणिरि,,तिमानभ्वाम्रोदामहार दुर्नलकरि-पञ्चानने तेङ्गछरङ्काचार्यस्तत्र पुनरालम्ब्य "सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायो वेद" इति कुसुमाञ्जल्यां वर्द्धमानोपा-ध्यायकृतसम्प्रदायशब्दव्युत्पत्तिं तां न्यवेदयद्व्यामोहविद्रावणे तदप्राह्यम् । अपास्तसमस्तवैष्णवाद्यश्रेयोवहसम्प्रदायस्याद्वन्द्व-हृदयाम्बुजातसौरभाविभासिविज्ञानिजनमहस्तसाक्षात्कारगोचरस्याखण्डार्थज्ञानैकस-मधिगम्यमानस्यैवात्मतत्त्वस्य जिज्ञासोरुपदेश्यस्य प्रतीततरसमीहाकृतार्थीकरणस-त्ताकत्वेन तत्प्रत्येव प्रशास्तृभावो ब्रह्मण्यानामुपपद्यते तरां यतः । व्युत्पत्ति-श्चोपाध्यायानां वेदविषया सा यथोदितदुःसम्प्रदायासहा न कथञ्चित्कैतव्यव-ण्टापथकण्टकायितवैष्णवादिसम्प्रदायान्तताठीकार्थतमस्तोमसमाच्छन्नानधिकुर्यादपि धा द्वितीयावस्थायाम् ।

७२ दुर्नलकरि-पञ्चाननव्यामो हविद्रावणमार्त-ण्डकृतौ वाचस्या-त्रार्थे सुशिक्षिता भवन्ति ।

यत्तु "बृहदारण्यकभाष्यारम्भे आहुः शङ्कराचार्याः । "ॐ नमो ब्रह्मा-दिभ्यो ब्रह्मविद्यासम्प्रदायकर्तृभ्यो वंशर्षिभ्यो नमो गुरुभ्य" इतीदमुदाहरन्नर्थ-तोऽसत्सिद्धान्ततमिस्रामयस्यैव सत्सिद्धान्तमार्त्तण्डस्य कर्त्ता च कश्चित्किञ्चिदशुद्धं शुद्धाद्वैतं स्वीयसिद्धान्ततया मन्यमानो मुमुदे तन्मन्दम् । अमन्दमतिमननैकयो-ग्यनिगूढाभिसन्धिसन्धानासमर्थचेतःपराहतत्वात्तुदितवाक्योदाहर्तुरासमन्तात् । न खल्वसौ वाग्व्यक्तिः प्रकृतप्रसङ्गानुकूलार्वाचीनवैष्णवादिमतयाथात्म्यव्यवस्था-

पनौपयिकहुःसामग्रीप्रवाहपतिता वा तस्याः समुत्तेजनविज्ञानषद्धादरा कथमप्युन्नीयते । प्रत्युत तयोरेतयोर्विघटनानिरूपकविरूपसामग्रीं त्रिभूणैव सम्मीयते । न च निरस्तनिखिलोपाधेर्ब्रह्मणो विद्यया परया प्रतीत्यास्पदतां भजमानस्य सकाशादपरया समधिगम्यमानवस्तुनोऽपि भाक्तिकताव्युदाससम्भवे प्रमाणेतरविषयीभूतबालमूर्तेर्वत गोपीशस्य स्त्रीजनपामरमानसाविलासवासनाकर्मीभूताया विशिष्टस्वार्थोपादानसमास्थानलक्षणसम्प्रदायपदवेदनीयता मन्त्रादिव्यक्तेर्वा प्राप्नोति स्वारस्यात् । न ह्यनाधेयातिशयाद्वन्द्वब्रह्मविद्यासम्प्रदाय इव वैष्णवादिसम्प्रदायो वेदानां विषयो भवत्यवान्तरतया वा । उपास्तेर्भगवतो भोगीशभोगशयनस्यास्मान्मताश्रितकशिखामणिमहेन्द्रान् परमाभ्यर्हितत्वेऽपि तन्निर्वाहाय तत्सम्प्रदायस्य तेङ्कलबडहलसातानिभेदभिन्नस्य रामानुजीयस्याञ्जनेयदेवतोपाहितस्य तथैवानन्दतीर्थस्य गोपालबालमूर्त्याद्याराधनप्रधानस्य च वल्लभस्य तद्वद्राधारमणपरिचर्यापर्युपाधिभूतनिम्बार्कस्येतरेतरविभिन्नाकारविकारप्रकाराक्रान्ततिलकादिसमुपादानजन्योपद्रवभूयस्त्वप्रत्यवसितस्य वैश्वानरज्वालामालाजटालस्यानुपदमनुगतकामक्रोधाद्युद्दीपनतया भगवत्कृपामात्रपराङ्मुखत्वेनान्तं गत्वा निरयपरम्परावगतेरप्रतीकार्हत्वात् । न हि भगवन्तं नारायणं स्वतो निर्लिङ्गं किल लिङ्गं प्रामादिकमानवमनोविकल्पविषयीभूतकुङ्कुमहरिद्रासहभाविश्वेतमृत्तिकोर्ध्वपुण्ड्रस्याङ्गारसहकारिगोपीचन्दनादिपुण्ड्रस्य कुङ्कुमगुलालपरिलालितपुण्ड्रान्तरस्य चेतरेतरविरोधालम्बनमनवस्थिततरमयुक्तियुक्तमुन्मानानिलयनञ्च सङ्गच्छेज्जातु चित् ।

यत्तु दुर्जनकरिपञ्चाननव्यामोहविद्रावणयो "एतदा प्रभृति शुभ्राणि नित्यं पुण्ड्राणि धारयेत् ॥ सर्वैः श्वेतमृदा कार्यमूर्ध्वपुण्ड्रं यथा विधि ॥ मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ॥ मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठित मि"त्यादिवचनोपदर्शनपुरःसरमूर्ध्वपुण्ड्रं मृत्तिकया परिकल्पितमालोक्यते तद्वचनादेयम् । दर्शितमत्या वेदादिबाह्यत्वाद्रामानुजमुखमर्दने निबन्धे तत्कृतपरिकरविनयस्थापापनामातिष्ठापनबद्धमानिभिः श्रीमद्भिर्माधवाचार्यैः सपरिकरमपाकृतत्वाच्च तथाविधनयोदाहृतोर्ध्वपुण्ड्रस्य । न हि पुस्तकयोरेतयोरुदाहृतगीर्निकरः श्रौतो वाऽस्ति स्मार्तो इत्यालोच्यतान्तावत् । वेदेषु तदत्यन्ताभाव एव संस्मृतिषु तु स्वीयैरुत्कल्पितासु प्रक्षिप्यमाणः सोऽयमुभयथादिसम्भवादोषपरिश्रुततरस्मृत्यर्थनि-

७१ रामानुजीयाद्यूर्ध्वपुण्ड्रमश्रौतञ्चास्मार्तमिति भस्मत्रिपुण्ड्रन्तु श्रौतं धृतादिदमेवमेव धारणीयमित्यादिप्रतिपादनम् ।

प्रतिषिद्धो विभाव्यते यतः । न चैवमादिविरोधिवचनानां श्रनित्यादिकरिरन्वनु-
द्वात्य समन्वयं समर्थयन्तो भगवत्पादप्रभृतयो वृथामनिश्चन्द्रे प्रविश्य मग्नाः । कि-
ञ्च नास्तिका म्लेच्छहूणादयश्च सर्वे श्रुतिस्मृत्यादिप्रमाणजातं कल्पितं वदन्तीति
कस्ततो भेदस्तदेकदेशस्य कल्पितत्वं वदतामित्येषा न चतुरस्रा उक्तिर्यामोद्गृति-
द्रावणक्षमः सुतराम् । निर्विशङ्कं विरोधिभिः परिकल्पितं वस्तु शतकृत्वः सम्प-
रीक्ष्य यादृशं तु तादृशतयैवाज्ञापयता तेषां भगवतां यावदीमामथ्यनहारपदवीप्र-
मुत्सादनौपयिकसमवताराणां च नारायणदेवाराध्यत्वात्त्वांप्रति वैष्णवम्मन्यानां-
यायिभ्यः प्रशास्तॄणां पुनरस्माकं विनेयमानवं खल्वासमन्तात् । न हीह "श्रान्ते
हन मे पापमि" त्यादिर्मन्त्रो मृदोर्ध्वपुण्ड्रधारणं विधत्ते । न वा तस्मिन्नर्थे न
केनचिद्विनियुज्यत आपस्तम्बबौधायनादेः प्रत्युत स्नानाख्य एव कर्मणि तदादि-
श्रौतसूत्रैर्विनिबद्धमस्य विनियोगं विजानतां तावद्व्याख्यानमनीहयेन सदूर्ध्वपुण्ड्र-
धारणप्रकारपरतां निराचष्ट इति विस्पष्टम् । न च स्नाने विनियोगवद्धारणेऽप्यू-
र्ध्वपुण्ड्रस्य कथं न स्यादस्याः श्रुतेः स इति भ्रमितव्यम् । असत्येन कल्पमाने
कल्पयिता किल विनियोगस्य साहसिकत्वादनुपादेयवचनश्च पूतिदिण्डिममाश्रय
उपसर्पेद्यस्मात् । दूषणमण्वपि मा प्रसज्जीति कल्पसूत्रानुकूलमेव भाष्यार्थमवगा-
हनकालीनाभ्यर्थनाविशेषविषय मृदधिष्ठात्र्याः खलु देवतायाः संस्मरणोपयोगिना-
विश्यव्यक्तीकार "अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरा । शिरसा धारयि-
ष्यामि रक्षस्व मां पदे पदे । भूमिर्धेनुर्धरणी लोकधारिणी उद्धृतासि वराहेण
कृष्णेन शतबाहुनेति" मन्त्रान्तर्वर्त्यश्वक्रान्तेतिविशिष्टविशेषणपदार्थैरामन्त्रणपरता-
रयन्त्येव सुमनोगणाः पदवाक्यप्रमाणपारावारपारदृश्वानः । न खलु मृदा वि-
जनिमित्तान्महीकृता निर्निमित्ते हन्तोर्ध्वपुण्ड्र उपक्रमपरामर्शोपसंहार
-करणात्मनामश्नुते मनाग्वा । तदिदं सिद्धमस्या अपि श्रुत्यर्थव्यक्तेः
दत्राह्यमेवोर्ध्वपुण्ड्रमिति । एतेन मह्लाभ्रयुयिमदापवदनन्यायतः मपष्टा
प्णवसम्प्रदायमानिनो निरस्ता एवोर्ध्वपुण्ड्रवचनावलीकल्पयिताः
स्थालीपुलाकन्यायतश्च । न च मयूखादिसङ्ग्रहकारैरनुष्ठेयतयोक्त
स्मार्तैरिह सहसा कथङ्कारं त्वयाऽपाक्रियत इति चोदितव्यम् । श्रद्धया
लोचनायां प्रचलत्सम्प्रदायमानिमानवाऽऽचारमात्रानुवादितया तेषामपि
'त्रिपुण्ड्रं भस्मना कुर्याच्चन्दनेन च सुव्रतः । प्रातः सुपश्चिमं

गन्धमिश्रितम् । सायान्हे निर्जलं भस्म एवं भस्म विलेपयेदि" ति व्याघ्रस्मृतौ गृह्यसूत्रेण च "भस्मना ललाटे ग्रीवायां दक्षिणेऽंसे हृदि च त्र्यायुषमिति प्रतिमन्त्रमिति" पारस्करीयेण वैदिकतयैककण्ठ्येन संस्तूयमानत्रिपुण्ड्रप्रच्छायाऽवलम्बिनो वंशपत्राकारपरिलालितस्यैव सङ्कीर्तकतया च तदभिप्रेतश्रुत्यादिवाक्यसाङ्केतिकोर्ध्वपुण्ड्रस्वरूपनिरूपकत्वाभावात् । न चा "प्यथाचाराल्लभते धर्ममाचाराल्लभते धनमि"त्यारम्भो "र्ध्वपुण्ड्रं धारयेदि" ति गौतमसूत्रमस्मदूर्ध्वपुण्ड्रप्रशंसापरायणं ननु नालमन्यथयितुमिति व्याहर्तव्यम् । सूत्रस्याप्यस्योदितवंशपत्राकारपुण्ड्रस्यैवावेदकत्वात् । यतोऽत्रापार्थकसम्प्रदायवञ्चनविकल्पितेतरेतरावरोर्ध्वपुण्ड्रानुकार्य्युल्लेखस्यैवात्यन्तिकोऽस्त्यभावः । न हि मदिरामत्तविलक्षणेक्षणेनावेक्षितमपि वस्तु जह्यान्निजभावं जातु चित् । न वा तस्य स्वरूपविदो जहति तत्त्वमतनुमतयः । न चैतावता वैष्णवसम्प्रदायोऽस्माकीनः स्थवीयानेव सत्त्वपरिष्ठापनेनान्यथाभावं नाप्नुयात्तावकीनेनेत्यभिनिवेष्टव्यं सुमन्दमतिभिः । निरूपितगत्या सम्प्रदायानां तावद्वैष्णवानां वेदबाह्यतासंसिद्धावद्वैतब्रह्मविद्यासम्प्रदायस्यैव कर्मोपास्त्योरपेक्षया निरतिशयवैदिकत्वे काण्डत्रयाचारप्रचारौपयिकसम्प्रदायपदाभिधेयाभ्युपगममात्रत्वे च श्रुतयस्तावद् "थाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच । अधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां ययाऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान् । तस्मै सहोवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेही"त्येवमात्मान उज्जृम्भन्ते खल्वादावेव कैवल्योपनिषदः ।

७४ यथोक्तवैष्णवयतिनामप्युपासनाया परा माताऽद्वैतब्रह्मधीरेवास्तीति ताच्चेवनादस्य विष्णुभक्त्यैकरतत्वे विनिगमनायां शिवमहिमानं महीयांसं प्रदर्श्य धियो यथोक्ताया स्थिरीकरणम् ।

एताभिरिह प्रश्नप्रतिवचनतात्पर्यपर्युपेताभिरनवच्छिन्नवस्तुयाथात्म्यमेवाभ्यस्येनोपदिश्यते निरस्तसमस्तेतरवस्तुसत्ताकञ्च सर्वकालम् । मध्ये पुनरुपनिषदो "विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः शरीर" इत्येतया किल श्रुत्यैकान्तावाससम्पादनाधीनाऽऽसनादिसाधनविभेदसन्दृब्धावान्तरप्रकरणप्रतिपादितया "ऽत्याश्रमस्थः सकलेन्द्रियाणि निरुद्ध्य भक्त्या स्वगुरुं प्रणम्य । हृत्पुण्डरीके विरजं विशुद्धमि" त्याद्यव्यवहितोत्तरगीर्भिरमसम्भिपादाश्यपाविशेषविषयीभूतसगुणध्यानसमितिकर्तव्यताकलकृत्यया पातः परं "ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् । स ब्रह्मा स शिवः स हरिः सेन्द्रः सो-

विदो नैवैवंविधदुरालापसौभगभूम्यां विमुह्येयुः । न हि समाघ्रेयसौरभसम्भारा हि घ्राणव्यक्तिरगन्धं वा दुर्गन्धमुत्सहद्ध्वोत्तरीकर्तुङ्क्वचित् । तदिदं देवासविवरणामासमुपेक्षितत्वेनापि प्रत्युक्ततरं वेदितव्यम् ॥

इति ब्रह्मणः सायुज्यम् । देवास इत्यादिवाक्यार्थयोरुपमर्दनम् ॥

अथ "निचिक्षेपप्रमुपणं मिथ्यमानमम्भ्ये बाहुमदधत्सुदर्शनम् । विष्णोरिदं भूरिदं भूरितेजः प्रधर्षति दिवानक्तं बिभ्रृयुस्तज्जनासः" ॥ १ ॥

७५ पुनरपि कल्पितवाक्योदाहरणच्छलेन तप्ताङ्कनशङ्कायां तन्निरासः ।

इत्येषा याजुषबृहदारण्यकशाखाश्रुतेः सुदर्शनोपनिपद्यपि प्रसिद्धायाः सद्भावेनानवद्यमेव नश्वकाङ्कनादिविधानम् । तन्न । अत्यन्तावद्यत्वात् । न ह्यध्वर्युशाखासु शुक्लकृष्णाभिधानभेदभिन्नासु बृहदारण्यकशाखा का चिदस्ति यतस्तद्भेदो विद्वद्भिर्मन्येत । नापि सुदर्शनोपनिषदुपनिपत्स्वस्ति काचिन्माननीया । उभयतोऽप्यमानविषयत्वात् । सर्वशोऽधीयमानबृहदारण्येऽप्यतीतवाक्यप्रकल्पयितुस्तच्छाखाभेदस्य तद्गततया च वाक्यस्यास्य कल्पनाकरणे कोन्वत्र स्यात्परिश्रमः । तत्रापि खिलश्रुतिरिति सञ्ज्ञां तस्या महतीं जनयामास । इदमपि महदेव साहसम् । परमत्र शोचयितव्यन्त्वेतावदेवात्र जगत्यामध्येतृपरम्पराकमवीरा अनुगृह्णीयुर्वा निगृह्णीयुरिति । दुरावेशास्तूभयीमपि विचारणान्न स्पृशेदेवाल्पामपीति नात्रतरत्यत्रापि विस्मयो विदुषाम् । यदीयं तत्रत्या स्यात्तदा दग्धविग्रहावयवा एव विजानीयुरितरे पुनस्तान्त्यजेयुः श्रुतिबाधमिति न शक्यते नियन्तुम् । खिलमपि वचनं वचनमेव सद्भवनीयार्थानामवचनदेशीयव्यवहारं नोपादद्यात् । अविशेषेणैव विजानानामद्भुतनं तदर्थे पुनः श्रद्धाभरमात्मीयं प्रकुर्युर्वा स्वप्रसङ्गात् । न विजानते न वा प्रकुर्वते तमेतं प्रत्युत शब्दार्थयोः श्रवणादेव त्रस्ताः सर्व एव वा प्रायशः । तादृग्रूपाः कथङ्कारममुमभिधेयं स्वयमनुतिष्ठेयुरनुप्रापयेयुर्वा नरानितरान् । उभयोरपि विचारणालवण्यरञ्जितत्वात् । अर्थोदत्र निर्विचारत्वेनसामियञ्चेष्टा शश्वच्चिरत्रीयते । सेयं विचारशालिभिश्च निश्चिनमतिभिर्व्यपोहैवापयने शतशस्तथाहि । ये खलु तत्राज्ञास्ते बाहुमूलमध्ये मतिविभ्रमाल्लोहशलाकामेव तप्तां निक्षिपन्ति तत्रैव चिन्हितं परिदृश्यते हाहेत्यादिध्वनिनाऽऽक्रन्दनपुरस्सरं तन्मध्यम् । न तु सुदर्शनेन कथञ्चन महतामपि यत्नप्रयत्नेनापियेण च विष्णोरेव दिव्यदेहसद्भवनिना । न हीदं वस्तुतस्तद्देहादाक्रामति । भगवतो नित्यायुधत्वात् । नापि देवदानवा वा मरेयुरेतन्मु-

वान्विष्णुं विददार नखैः खरैः । चर्माम्बरो महावीरो वीरभद्रो बभूव ह । स एको रुद्रो ध्येयः सर्वेषां सर्वसिद्धय" इति वाग्भ्यो ब्रह्मविष्ण्वादेर्जनयितारं पुनः सर्वशास्त्रनियन्तारं महेश्वरमेव सर्वेश्वरं प्रतिष्ठापयन्तीभ्यो "ब्रह्मैव शरमः साक्षान्मोक्षदोऽयं महामुन, इत्यन्तिमवाचा महेश्वरमूर्त्यन्तरशरभस्य ब्रह्मत्वमोक्षप्रदत्वयोः समर्पयन्त्या परिष्कृततराभ्यो व्यूहमेव वैष्णवम्मन्यानां समूलमुन्मूलयन्तीभ्योऽस्मदभ्युपेतं तावदद्वैतब्रह्मविद्यासम्प्रदायमेव निखिलोपनिषत्पराभिप्रायसन्धानात्मानमशेषयुगीयमहाजनसामान्यसमाचारगोचरमानन्दतरङ्गिणीविशेषैकजननं कुतो न आत्मनः कृतकृत्यतायै सुविभावयेः । दुरावेशमेव तथाऽविभावने निदानं मनुषे सदा तु सौभाग्यकथा ते दुर्दैवहता नूनमारण्यककुस्तुम्बुरूण्येवानुपते विदुषां समीक्षया । सकला अप्युपनिषदो भवदभ्युपेतविरूपविग्रहापन्नेन्दिरारमणस्वरूपावेदकपदकैवल्येनाप्यलम्भावमनापन्नाःसम्प्रदायमेव स्वाभिप्रायहीनं हन्त वैष्णवं न सहन्ते स्वप्नान्तेऽपीति मन्वीथाः । समासहस्रेणापीतरेतरविरुद्धोऽसौ सम्प्रदायो मन्त्रा वा नियमा वा तिलकानि वा आचारा वा न प्रसिद्ध्यन्ति ताभ्यस्तत्प्रत्यायकपदस्य वा वाक्यस्य तत्राप्रत्ययात् । प्रत्युत भवन्त्येव गर्हापदं तन्मानात् । मानान्तराणि तु मन्वादिस्मरणानि च कल्पाः सर्वथा एषां विरोधिन इत्यसकृदवादिष्म । अनुमयाऽप्यमी अर्था अपार्थतयैवाध्यवसीयन्ते तथाहि श्वेतमृत्पार्ष्णिमाहिहरिद्रातिलकञ्च सपादं तेङ्कलरामानुजीयानामपादेन हि तेन वडहलानां वैमत्याभावं नापद्यते निजरुचिमात्रहस्तग्राहगृहीतत्वादितरेतरम् । यदेवन्तदेवम् । यथा हीक्षणे त्रियामान्धदिनान्धयोः । माध्वं तिलकमङ्गारविनिवेशमञ्जिगृह्णारर्शशीविलासलास्येन वाडमेन तिलकेन न सम्प्रतिपत्तिं बिभ्राणमवगम्यतेऽन्योन्यमान्यैव मत्याऽन्योन्यस्मिन्नग्रादेयताविषयत्वात् । यन्नैवं तन्नैवम् । यथा चार्कफलसुमनसी । परिशिष्टा अपि तत्सम्प्रदायमानिनो विरूपविन्यासवत्तिलकविशेषं स्वीकुर्वाणास्तामेवामान्यसरणिमात्मीयां विनिवेदयन्तीति नैकोऽपीतरेतरसन्निधौ प्रामाण्यमभ्युपेयात्सम्प्रदायो न वा तटस्थीभूय तथ्यापार्थ्यं मार्गमाणानां सम्मुखे सम्प्रतिपत्तिं कथञ्चन प्रत्याययेत् । एवञ्च ,चक्राङ्कनोर्ध्वपुण्ड्रे तु सन्दर्शितवार्तेभ्यो हन्त वादिना शब्दार्थाभ्याम्प्रतिकूलतरेभ्यो व्यर्थे पुनरनर्थे ऽवधार्येते । दशायामेवंविधायां "देवास" इत्यादिर्योकयस्याढीकयोग्यतावतः का वा चक्राङ्कनविधानावगाहिविवरणशोभा यतो जगत्यां प्रामाण्यप्रकार-

विदो नैवैवंविधदुरालापसौभगभूम्यां विमुह्येयुः । न हि समाघ्रेयसौरभसम्भारा हि घ्राणश्यक्तिरगन्धं वा दुर्गन्धमुत्सहन्द्वोचरीकर्त्तुङ्कथञ्चित् । तदिदं देवासविवरणामासमुपेक्षितत्वेनापि प्रत्युक्ततरं वेदितव्यम् ॥

इति ब्रह्मणः सायुज्यम् । देवास इत्यादिवाक्यार्थयोरुपमर्दनम् ॥

अथ "निचिक्षेपसुपर्णं म्रियमानम्मध्ये बाहुमदधत्सुदर्शनम् । विष्णोरिदं भूरिदं भूरितेज. प्रधर्षति दिवानक्तं बिभृयुस्तज्जनासः" ॥ १ ॥

७५ पुनरपि कल्पितवाक्योदाहरणच्छलेन तप्ताङ्कनशङ्काया तन्निरास ।

इत्येषा याजुषबृहदारण्यकशाखाश्रुतेः सुदर्शनोपनिषद्यपि प्रसिद्धायाः सद्भावेनानवद्यमेव नश्चक्राङ्कनादिविधानम् । तन्न । अत्यन्तावद्यत्वात् । न ह्यध्वर्युशाखासु शुक्लकृष्णाभिधानभेदभिन्नासु बृहदारण्यकशाखा का चिदस्ति यतस्तद्भेदो विद्वद्भिर्मन्येत । नापि सुदर्शनोपनिषदुपनिषत्स्वस्ति काचिन्माननीया । उभयतोऽप्यमानविषयत्वात् । सर्वशोऽधीयमानबृहदारण्येऽप्यतीतवाक्यप्रकल्पयितुस्तच्छाखाभेदस्य तद्गततया च वाक्यस्यास्य कल्पनाकरणे कोन्वत्र स्यात्परिश्रमः । तत्रापि खिलश्रुतिरिति सञ्ज्ञां तस्या महतीं जनयामास । इदमपि महदेव साहसम् । परमत्र शोचयितव्यन्त्वेतावदेवात्र जगत्यामध्येतृपरम्पराकप्रवीरा अनुगृह्णीयुर्वा निगृह्णीयुरिति । दुरावेशास्तूभयीमपि विचारणान्न स्पृशेदेवाल्पामपीति नात्रतरत्यत्रापि विस्मयो विदुषाम् । यदीयं तत्रत्या स्यात्तदा दग्धविग्रहावयवा एव विजानीयुरितरे पुनस्तान्त्यमेयुः श्रुतिवाचमिति न शक्यते नियन्तुम् । खिलमपि वचनं वचनमेव सद्वचनीयार्थानामवचनदेशीयव्यवहारं नोपादद्यात् । अविशेषेणैव विजानानास्तद्वचनं तदर्थे पुनः श्रद्धाभरमात्मीयं प्रकुर्युर्वा स्वप्रसङ्गात् । न विजानते न वा प्रकुर्वते तमेतं प्रत्युत शब्दार्थयोः श्रवणादेव त्रस्ताः सर्वे एव वा प्रायशः । तादृग्रूपा. कथङ्कारममुमभिधेयं स्वयमनुतिष्ठेयुरनुप्रापयेयुर्वा नरानितरान् । उभयोरपि विचारणालावण्यरञ्जितत्वात् । अर्थादत्र निर्विचारचेतसामियञ्चेष्टा शश्वच्चित्रीयते । सेयं विचारशालिभिश्च निश्चितमतिभिर्व्यपोहैवापद्यते शतशस्तथाहि । ये खलु तप्ताङ्कास्ते बाहुमूलमध्ये मनिविभ्रमाल्लोहशलाकामेव तप्ता निक्षिपन्ति तथैव चिन्हितं परिदृश्यते हाहेत्यादिकूजिताऽऽक्रन्दनपुरस्सरं तन्मध्यम् । न तु सुदर्शनेन कथञ्चन महतामपि कालत्रयेनाविषयेण च विष्णोरेव दिव्यदेहसद्वसतिना । न हीदं वस्तुतस्तद्देहादपक्रामति । भगवतो नियतायुधत्वात् । नापि देवदानवा वा मरेयुरेतन्मु-

वान्विष्णुं विददार मखैः खरैः । चर्माम्बरो महावीरो वीरभद्रो बभूव ह । स एको रुद्रो ध्येयः सर्वेषां सर्वसिद्धय" इति वाग्भ्यो ब्रह्मविष्ण्वादेर्जनयितारं पुनः सर्वशास्तन्नियन्तारं महेश्वरमेव सर्वेश्वरं प्रतिष्ठापयन्तीभ्यो "ब्रह्मैव शरभः साक्षान्मोक्षदोऽयं महामुन, इत्यन्तिमवाचा महेश्वरमूर्त्यन्तरशरभस्य ब्रह्मत्वमोक्षप्रदत्वयोः समर्पयन्त्या परिष्कृततराभ्यो व्यूहमेव वैष्णवम्मन्यानां समूलमुन्मूलयन्तीभ्योऽस्मदभ्युपेतं तावदद्वैतब्रह्मविद्यासम्प्रदायमेव निखिलोपनिषत्पराभिसन्धिसन्धानात्मानमशेषयुगीयमहाजनसामान्यसमाचारगोचरमानन्दतरङ्गिणीविशेषैकननमं कुतो न आत्मनः कृतकृत्यतायै सुविभावयेः । दुरावेशमेव तथाऽविभावने निदानं मनुषे तदा तु सौभाग्यकथा ते दुर्दैवहता नूनमारण्यककुस्तुम्बुरूण्येवानुपते विदुषां समीक्षया । सकला अप्युपनिषदो भवदभ्युपेतविरूपविग्रहापन्नेन्दिरारमणस्वरूपावेदकपदकैवल्येनाप्यलब्धभावमनापन्नास्सम्प्रदायमेव स्वाभिप्रायहीनं हन्त वैष्णवं न सहन्ते स्वप्नान्तेऽपीति मन्वीथाः । समासहस्रेणापीतरेतरविरुद्धोऽसौ सम्प्रदायो मन्त्रा वा नियमा वा तिलकानि वा आचारा वा न प्रसिद्धयन्ति ताभ्यस्तत्प्रत्यायकपदस्य वा वाक्यस्य तत्राप्रत्ययात् । प्रत्युत भवन्त्येव गर्हापदं तन्मानात् । मानान्तराणि तु मन्वादिस्मरणानि च कल्पाः सर्वश एषां विरोधिन इत्यसकृदवादिष्म । अनुमयाऽप्यमी अर्था अपार्थतयैवाध्यवसीयन्ते तथाहि श्वेतमृत्पार्ष्णिग्राहिहरिद्रातिलकञ्च सपादं तेङ्गलरामानुजीयानामपादेन हि तेन वडहलानां वैमत्याभावं नापद्यते निजरुचिमात्रहस्तग्राहगृहीतत्वादितरेतरम् । यदेवन्तदेवम् । यथा हीक्षणे क्रियमाणमधदिनान्धयोः । माध्वं तिलकमङ्गारविनिवेशमञ्जिशृङ्गारशोभीविलासलास्येन वाल्लभेन तिलकेन न सम्प्रतिपत्तिं विभ्राणमवगम्यतेऽन्योन्यमान्यमैव मत्याऽन्योन्यस्मिन्ननादेयताविषयत्वात् । यन्नैवं तन्नैवम् । यथा चार्कफलसुमनसी । परिशिष्टा अपि तत्सम्प्रदायमानिनो विरूपविन्यासवत्तिलकविशेषं स्वीकुर्वाणास्तामेवामान्यसरणिमात्मीयां विनिवेदयन्तीति नैकोऽपीतरेतरसन्निधौ प्रामाण्यमभ्युपेयात्सम्प्रदायो न वा तटस्थीभूय तथात्वं मार्गमाणानां सम्मुखे संप्रतिपत्तिं कथञ्चन प्रत्याययेत् । एवञ्च ,चक्राङ्कनोर्ध्वपुण्ड्रे तु सन्दर्शितवाक्येभ्यो हन्त वादिना शब्दार्थाभ्याम्प्रतिकूलतरेभ्यो व्यर्थे पुनरनर्थे ऽवधार्येते । दशायामेवंविधायां "देवास" इत्यादेर्वाक्यस्याख्यैकयोग्यतातनः का वा चक्राङ्कनविधानावगाहिविवरणशोभा यतो जगत्यां ग्राम्यार्थप्रकार-

संदेवनावाची पविपदाभिधेयभूततयाऽत्रोपादीयत इति साम्प्रतम् । शब्दैरेतैः सुदर्शनस्यागम्यमानत्वे वाक्यादेतस्माद्वाक्यान्तरयोरतीतानन्तरयोरवश्यमेवोदाहर्त्तव्यत्वात् । अलीकवर्णावलीं प्रति त्वेनामलीकतरवाक्ययोः पूर्वापरीभूतयोरुपस्थापने खिद्यमानस्य प्रवृत्त्यभावोपपत्तिरुचितैवोपजायते । यदीदं वाक्यं सत्यं स्यात्तर्हि पूर्वापरे अपि ते ससंभ्रमं प्रदर्शिते स्याताम् । नोदाहार्य्यन्यतरदपीत्येवं मेव तन्मानसमवसीयते । "तुष्यतु,, नयेनाभ्युपेत्यापीदं वाक्यं सुदर्शनं वा तेन हि दाहो वा देहे नाभ्युपेयते । अपि त्वग्निरेव यागादौ परमेश्वरस्य प्रतीकभूतपवित्रमित्यादिविशेषणविशेषान्वितश्चाभिमन्यते । तथा हि । यथाऽवक्लृप्तप्रतिपादनबलादिह च सामानाधिकरण्यबलात्पविशब्दाग्निपदयोः प्रथितत्तुभावात्वग्निर्देवतैवा "अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातूरजसो विमानोऽजस्रो घर्मो हविरस्मिनाम" त्यृचा यथोदिताशयातिशयसम्भृतया संस्तूयते सेयं देवता "सहस्रारनेमि" पदवाच्यताविभेदं गत्वा तया तया भजमाना विराजते सकलास्वेव संस्थासु पाकयज्ञहविर्यज्ञसोमापराभिधानास्वतिवेलम् । तथैवेह नेमिपदवेद्यतामुपयातयाऽग्निदेवतया यावद्यागनिर्वर्त्तनालम्बनभूतया तप्ततनु निजतन्ववच्छेदेन तपिनोपस्थाप्यमानसम्पादितयागापूर्वमहाविभवोऽनशनादिव्रतविभेदसंस्कृतात्मा यजमानो निष्कामकर्मण एतस्य हि महिम्ना ब्रह्मण. सायुज्यसालोक्यावाप्तिप्रयोजकीभूतनेतोनैर्मल्यमात्यान्तिकमभिपद्यत इत्येवार्थस्माधीयान् । न तु तप्ततनुपदं तप्तलोहशलाकया देहावयवदाहं ब्रूते । तस्य तु पश्वादिसाधारण्यात् । साक्षात्सुदर्शनेनापि दामोदरदेहदेदीप्यमानेन ब्रह्मसायुज्यादिफलानवाप्तौ किम्पुनः प्रयोजकतमेन कार्ष्णायसेनैतेनेत्यत्रेनापि विज्ञातव्यत् । न च "चक्रश्चाक्रः पविर्नेमिः पृथक् चक्रस्य वाचका" इति माधवाचार्यवचनविरोधो मन्तव्यः । पृथक्पदप्रयोगस्तारस्याद्यचक्रस्यैव रथादिगमनप्रयोजकीभूतस्य सम्भवत्वात् । उपस्थितन्तावाधकं भौममपहायानुपस्थितस्य सुदर्शनस्य नूनमुपादाने तत्राप्यभाव एवास्ति विनिगमकस्यानुक्रमणिकायाम् । सुदर्शनस्य क्लीवत्वे "चक्रश्चाक्र" इति पुल्लिङ्गनिर्देशोऽपि न युज्यते । यदीदं वचनमेतत्प्रयोजननिर्वाहाय शरणीकरोषि तर्हि "मध्यमुतविध्वंसिनी रामानुजमुखमर्दनादौ तैरेतैः समर्थितं तप्ताङ्कनदौरात्म्यं कुतो न विभावयेः । यदीदं हास्यायाप्यभिमतमभविष्यत्त एते खण्डनमस्यादरभरैस्तत्र नान्यत्र नाकरिष्यन् । कृतान्त एव ते सन्ति तत्र तु निरस्तनीर एव मध्वाय-

हूर्त्तमात्रं महाबला । अत्यल्पबलानान्तु मानवानां तद्धारणनामश्रवणस्यैव भैरवाकारत्वे साक्षादेव धारणविधानधार्ष्ट्यं न कश्चित्कल्पान्ते वा कर्त्तुं प्रभवेत् । तस्मिन्नेव देवतात्मनि भूरितेजोवत्त्वेऽप्यभितप्तलोहशकले काकणिकामात्रमूल्यलभ्ये देहदाहैकफलप्रदातृत्वमृते जीवच्छवसमानाकारविशदमशेषशिष्टजनस्पर्शनभाषणादिशमन्यन्न किञ्चित्प्रतिपद्यन्ते फल प्रदग्धगात्राः । बाहुमूलमध्ये मन्यमानमेवंरूपं सुदर्शनं शरीरनाशे विनश्यमानं प्राग्भिरेव भस्मान्तं यातिस्तथारूपे सहास्तमयामीदिति साम्प्रतिकानां भस्मैव तस्यावतिष्ठमानं संसेव्यमापद्यते त्वदादीनाम् । उत्तरकालीनानामपि तदेव तस्याराधनाय वर्त्तिष्यत इति तद्वस्मसन्तानससेवकाः सन्तु चायुष्मन्तो युष्मादृशाः सर्वदा जगत्याम् । तत्तप्तदर्शनस्यैतादृशदुर्गतिकत्वे तदावेदकतया श्रुतितया च दग्धतनुभिः सयोनिनपदावलया "निचिक्षेपसुपर्णामि" त्येवविधाया' शब्दार्थनिर्वचनसौभाग्यं किमात्मकमित्युदासीना विभावयन्तु दोषज्ञाः । विशिष्य तन्निर्वचननिरासपरतायामस्माक कालहानिरेव केवलमिति विरम्यते ततो नीरसादित्यलमेतावता ॥

इति निचिक्षेपेति कल्पितवाग्व्यूहभस्मीकारः ॥

७६ पवित्रमित्यादिवचसा समुदितप्रामाण्यबलेनाङ्कनयोग्यताकत्वादिप्रतिपादनम् ।

अथ "पवित्रमित्याग्नि । अग्निर्वै सहस्रारः । सहस्रारो नेमिः । नेमिन तप्ततनु । ब्रह्मण सायुज्यं सलोकतामाप्नोती,, ति सामवेदीयमैत्रायणशाखाश्रुति· साक्षादेव चक्राङ्कनविधानमवबोधयन्ती छन्दार्थानेवास्मानातनुते । मैवं वादीः । तत्त्वस्यास्यान्यथाभूतस्यैवेह ग्राहयितव्यत्वाद्विचारकवरान् । तदेतत्परिहृतवाक्यजालस्वरूपसंवेदनाधीनविकृतप्रकाराकारमेव सदंशान्तरेण व्यतिरिच्यमानदूषणभावमाधत्ते । पवित्रपदवाच्यतावच्छेदकावच्छिन्नस्य नानात्व एकत्वेनावधारणस्य स्वाभिनिवेशविभेदसञ्चोदितस्यापाकरणैकपात्रत्वात् । यथोक्तं निरुक्ते "पवित्रं पुनातेर्मन्त्रः पवित्रमुच्यते येन देवाः पवित्रेणात्मानं पुनते सदेत्यपि निगमो भवति । रश्मयः पवित्रमुच्यन्ते गभस्तिपूतो नृभिरद्रिभिः सुत इत्यपि निगमो भवति । आपः पवित्रमुच्यन्ते शतपवित्राः स्वधया मदन्तीर्बहूदका । अग्निः पवित्रमुच्यते । वायुः पवित्रमुच्यते । सोमः पवित्रमुच्यते । सूर्यः पवित्रमुच्यत इन्द्रः पवित्रमुच्यत इति । अग्निः पवित्रं स मा पुनातु वायुः सोम· सूर्य इन्द्रः । पवित्रन्ते मा पुनन्त्वित्यपि निगमो भवती" ति । न च प्रकरणस्यास्य सुदर्शनविषयतयाऽग्निरेव

र्देवताराची पवित्रपदाभिधेयभूततयाऽनोपादीयत इति साम्प्रतम् । शब्दैरेतैः सुदर्शनस्यागम्यमानत्वे वाक्यादेतस्मादन्यान्तरयोरतीतानन्तरयोरवश्यमेवोदाहर्तव्यत्वात् । अलीकवर्णावलीं प्रति स्वेतामलीकतरवाक्ययोः पूर्वापरीभूतयोरुपस्थापने विद्यमानसस्य प्रवृत्त्यभावोपपत्तिरुच्चैरेवोपजायते । यदीदं वाक्यं सत्यं स्यात्तर्हि पूर्वापरे अपि ते ससंभ्रमं प्रदर्शिते स्याताम् । नोदाहार्ष्यन्यतरदपीत्येवमेव तन्मानसमवसीयते । "तुष्यतु" नयेनाभ्युपेत्यापीदं वाक्यं सुदर्शनं वा तेन हि दाहो वा देहे नाभ्युपेयते । अपि त्वग्निरेव यागादौ परमेश्वरस्य प्रतीकभूतपवित्रमित्यादिविशेषणविशेषान्विनश्चाभिमन्यते । तथा हि । यथाऽवस्तुसमतिशादनवद्यादिह च सामानाधिकरण्यबलात्पवित्राग्निपदयोः प्रथितानुभावात्वग्निदेवतैवा "अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मिनामि" त्यृचा यथोदिताशयातिशयसम्भृतया संस्तूयते सेयं देवता "सहस्रारनेमि" पदवाच्यताविभेदं गत्वा तया तया भजमाना विराजते सकलास्वेव संस्थासु पाकयज्ञहविर्यज्ञसोमापराभिधानास्वतिवेलम् । तयैवेह नेमिपदवेद्यतामुपयातयाऽग्निदेवतया यावद्यागनिर्वर्तनालम्बनभूतया तप्ततनुः निजतन्त्वनवच्छेदेन तपिनोपस्थाप्यमानसम्पादितयागापूर्वमहाविभवोऽनशनादिव्रतविभेदसंस्कृतात्मा यजमानो निष्कामकर्मण एतस्य हि महिम्ना ब्रह्मणः सायुज्यसालोक्यादावप्तिप्रयोजकीभूतनैर्मल्यमात्यन्तिकमभिपद्यन इत्येवार्थस्माधीयान् । न तु तप्ततनुपदं तप्तलोहशलाकया देहावयवदाहं ब्रूते । तस्य तु पश्वादिसाधारण्यात् । साक्षात्सुदर्शनेनापि दामोदरदेहदेदीप्यमानेन ब्रह्मसायुज्यादिफलानवाप्तौ किम्पुनरप्रयोजकत्वेन कार्ष्णायसेनेनेत्यज्ञेनापि विज्ञातव्यम् । न च "चक्रश्चाक्रः पवित्रैः पृथक् चक्रस्य धारकाः" इति माधवाचार्यवचनविरोधो मन्तव्यः । पृथक्पदप्रयोगतारस्याक्ररूपैव स्यादित्यप्रयोजकीभूतस्य सम्पत्त्यभावात् । उपस्थितत्वाच्चक्रं भौममसहायानुपस्थितस्य सुदर्शनस्य नूनमुपादाने तत्राप्यभाव एवास्ति विनिगमकस्यानुक्रमणिकायाम् । सुदर्शनस्य क्लीबत्वे "चक्रश्चाक्र" इति पुंलिङ्गनिर्देशोऽपि न युज्यते। यदीदं वचननेतत्प्रयोजननिर्वाहाय धारणीयमपि तर्हि "मध्वमुनिविदंभिनी रामानुजमुखमर्दमाद्री तैरेतैः समर्पितं तस्माद्दनदौरात्म्यं कुतो न विभाव्यते । यदीदं दार्ढ्यावाप्यभिनमच्छेप्सत एते तान्दनमत्पादरमर्षस्तत्र पात्यतं नारिष्यन् । कृतवन्त एव ते सन्ति तत्र तु निरस्तनीर एव महाराज-

मानस्य । न हि ब्रह्मपदस्य नारायणोऽर्थो युज्यत आपेक्षिक । अनापेक्षिकस्यैव तदर्थत्वादिति प्रागेव तस्य निरस्तत्वात् । न हि सायुज्यशब्द समानभोगत्वलक्षणं परम मोक्षमभिधत्ते । मोक्षेऽपि भोगव्यवहारानुवृत्तौ तत्कृतोच्चावचफलपरिणामलक्षणोपद्रवजाताद्व्यावृत्तिरेव कदाचिन्न स्यात् । भोगैर्नानाविधैर्बन्धनदशाऽनिशमुपसर्पेत् । यदपि "सुदर्शनमहाज्वाल कोटिसूर्यसमप्रभ अज्ञानान्धस्य मे देव विष्णोर्मार्गं प्रदर्शये" ति कल्पितपदसमूहं मन्त्रतया न्यवेदयत्तदप्यग्राह्यम् । कुत्रत्योय मन्त्र इति प्रश्न प्रस्तुत्य प्रतिवचने मूकीभावस्यैव पर्य्यवसानात् । न च वेदमृते विष्णोर्मार्गदर्शी कश्चिदस्ति विज्ञाता । न हि विष्णोर्हेति सुदर्शन स्वगात्रवसतिरज्ञानान्धान्मार्गं दर्शयदुपपद्यते । अपि त्वेवमादिदुराचारान्धर्मत्वेनावगाहयतान्तावत्तामसयोनीन मन्तकाले शिरच्छेदनायैवोद्यत विज्ञायते शास्त्रविद्भिरिति सन्तोष्टव्यम् । पवित्रादिपदगोचरदुरालापपरिहारस्य प्रागेव विहितत्वादद्भितै कल्पितपदसमूहमास्थायात्राधिकतरतिरस्करणमुपेक्षित वेदितव्यम् ॥

इति पवित्रमित्यग्निरित्यादिपदपङ्क्तिपरिधूननम् ।

७७ चक्रविभर्त्ती त्यतयाऽपि वाचा तत्साद्गुण्यमपि निरूपणम् ।

अथैवमपि "चक्र बिभर्ति वपुषाऽभितप्त बल देवानाममितस्य विष्णो । स एति नाक दुरिता विधूय प्रयान्ति यद्यतयो वीतरागा" इत्यृग्वेदश्रुतिशरण्याना नस्तत्सल्लाञ्छनससिद्धिरस्त्येवाप्रत्यूहेति । अत्रोच्यते निराकृतवाक्यनिकरसहोदरायमाणतरमेतदपीति । पठ्यमानेश्वशाखास्वाश्वलायनशाङ्खायनशाकलनामवाच्यास्वन्यतमायामप्यनुपलम्भादेवैतस्या वाच । वाचमेता बाष्कलशाखीयतया माध्वा हन्त प्राहयन्ति परमेषा शाखा समुत्सन्ना कथमेषा वाक्तद्गततया तैरपि वाऽधिगता बभूवेति चि त्यमेव समन्तत । माध्वास्त्वमृतस्य विष्णोरिति विशन्ति यद्यनय इति चान्यथैवाभिदधति श्रीवैष्णवम्मन्यास्तूक्तानुपूर्व्या । एवञ्च श्रुतिश्चेदियमुभाभ्यामेताभ्या द्वैरूप्य न प्राप्येतैकरूपत्वात् । प्राप्यमाणन्तु कल्पितमेवैताभ्या यथाकाममिति विदामास्ति निश्चिता मतिः सत्यप्येव दुराग्रहदूरीकरणाय स्वरूपमेतस्या विविच्यते तथाहि । अभितप्य वाऽमृतस्य विष्णोरमरादिरक्षण सुदर्शननाम चक्र बिभ्राणो ब्राह्मणादिमानवो ज्ञाननिर्धूतपापा इव परिव्राजका निरस्तसमस्तकषायः कैवल्यमेत इति वाक्यार्थे गम्यमाने तप्ताङ्कनावेशवशीभूतमानस पृष्टोऽत्र व्याचष्टा पूर्वेषामपि पूर्वेना या तत्रापश्यन्ति तदेतच्चव सुदर्शनसमाह्वयमाहोश्विद्गृणन्तगोक्रिच

क्षाणां मुखदेशादिति । अनुत्तरमेवोत्तरं वास्तवमस्ति वादिनः । दर्शनश्रवणयोरेव स्वेषां वा स्वस्य रत्नाकाररत्नावलीसुमनोहरकान्तिश्रवणसमानयोगक्षेमत्वात् । एवन्तर्हि वपुषा विष्णोश्चक्रस्य हि सुदर्शनस्य धारणं कल्पान्तेऽप्यसम्भवतरं कथमेते बिभृयुर्मलिनात्मानः । को वा बिभर्त्त्येवं वक्ता बिभ्राणं वा तमेतं कोऽत्र प्रत्येति बिभ्राणो वा परान्प्रत्याययति के वा पुनः सुस्थात्मानो धारणे बतास्मिन्सुदर्शनीयतया विश्वस्युः किन्तु कार्ष्णायसवस्तुनो मुद्रणमेव दाघादितुल्ययोग्यतावतो यावच्छरीरपातमनुभवन्ति । एतावता भगवतः सुदर्शनस्य कथा क्व वाऽन्तर्धानमयासीत् । अयोमय्या मुद्राया नन्वस्या मनोवाक्कायमालिन्यमूर्त्तिरेव प्रभवन्त्यनुभूयते । दशायामेतस्यां वीतरागैर्यतिभिर्ज्ञानविज्ञानपरिपूर्तात्मभिः समं क्व वा साम्यं स्यात् । तस्यैव स्वप्नालोकितलोकजाततुलनावत्त्वे तद्वतः कैवल्यस्य न कथञ्चिदेषामर्हता कल्पान्ते वा स्यात् प्रत्युत ज्ञानसाधनविरोधिसामग्र्यामेवमात्मिकायां निषण्णाः खल्वमी ज्ञानैकफलीभूतपरमपदप्रतिद्वन्द्विस्थिरतरनिरययात्राया एवार्हाः स्युरिति व्यतिरेकमुद्रयाऽधिगम्यते । न च गिरा किञ्चनया मन आत्मीयं व्यसनाक्रान्तं वा क्रोधाक्रान्तं विपरिणेयम् तथा सति सुदर्शनमपि क्रुध्येदेवाय शक्लैस्तापभरैरात्मनोऽवहेलाञ्जगत्यां मानवाधमाः कुर्वन्तीति तत्कोपे हि यूयं तस्य भक्तम्मन्या अनिष्टपरम्परामापत्स्यध्वे तस्मिन्दृढमता अपि । एतेन " तस्माच्चक्रं विधानेन तप्तं वै धारयेद् द्विजः । सर्वाश्रमेषु वसता स्त्रीणाञ्च श्रुतिचोदनादि"त्यादिहारीतपाञ्चरात्रादितयोदाहृतवचोनिचयो निरात्मकतामभ्यागच्छेदेवेति न किञ्चिदेतत् ।

इति चक्रं बिभर्त्तीत्येतस्या वाचस्तदर्थस्य च विडम्बनादिग्दर्शनम् ॥

७८ "एभिर्वयमित्यादि"पद प्द्रूपा वा क्ल्पितया नाङ्कन सिद्धिरिति प्रतिपादनम् ।

नन्वेवमपि "एभिर्वयमुरुक्रमस्य चिन्हैरङ्किता लोके सुभगा भवाम तद्विष्णोः परमं पदं ये गच्छन्ति हि लाञ्छिता" इत्याथर्वणिकश्रुतिर्न्यस्ताङ्कनप्रक्रिययाऽङ्कुरोत्येव यथार्हमिति चेदिदं किल प्रत्यवस्थानं पुनः प्रतिविधानमभ्युदिताभ्यां तावत्ताभ्यां नातिरिच्यत इत्याचक्ष्महे । तत्रोपन्यस्तयुक्तिपूगप्रमाणपूगाविहाप्यनुसन्धातव्यौ । अधिकं त्विदमेव हि यच्छमदमयोगज्ञानाद्यन्तरङ्गासङ्कीर्णसाधकनमनान्तरीयकत्वासंसृष्टस्यैकस्यैवाकिञ्चित्करक्रियाकोटिकवाक्ययोपादानमकार्य्यकारार्य्यकारीत्यंशं तमेतमास्थायोक्तपर्यानुयोग्यर्युत्तराविषयमध्यवसानन्यम् । वस्तुतस्त्व-

स्माद्वचनान्मुमूर्षुस्वरूपानुसन्धानमेवाकलनीयं न तु मुमुक्षोरीपद्वा । फलस्य हि दृष्टात्मन एतस्यैवोपपत्तावदृष्टात्मनो नास्त्येव प्रतिपत्तिः । मानसामान्यविप्रतिपिद्धत्वात् । भारद्वाजीयतयाऽत्रोदाहृतवादिवचस्तु वर्णितरीत्याऽभारद्वाजीयत्वेनाकार्यक्षममिति पर्य्यवसन्नम् । वचनगतबाधितप्रतिपत्तेरसद्वस्तुमात्रैकप्रमापकत्वात् । न हीदं चिन्हधारणं सर्वस्वामिनो विष्णोर्युज्यते । धारणस्य त्वस्य त्वचो विदग्धाया अयःपिण्डपिण्डिकामात्ररूपितायाः सर्वानुभवासिद्धत्वे कल्पान्तेऽपि सर्वस्वामिचिन्हधारणसंसर्गसार्पिणो वाऽत्यन्तासम्भवात् । भगवदायुधमिति तल्लाञ्छनमिति तेन पावित्र्यमिति तदेतन्मुक्तेः साधनमिति च वाक्प्रलापो बालिशतरानेवालं व्यामोहयितुम् । कुशलमतयस्तु जहसुर्हसन्ति हसिष्यन्ति त्रैकालिका इति स्थिते भरद्वाजादयश्चतुष्पात्कृत्यङ्गिमिति वा वचोभिरात्मीयैः प्रमापयेयुरिति स्थूलाक्षं निभिद्य निश्चिनुयाः समाश्रित्यैव महाभागान्विशिष्टविज्ञाननेत्रेणासमन्तात् ॥

## एभिर्वयमित्यादिकल्पितपदपदार्थपरीहारः ॥

नन्तु "प्रते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्पणीन्द्राः । मूले बाह्वोर्दधतेन्ये पुराणा लिङ्गान्यङ्गे तावकान्यर्पयन्ति,, इत्यृग्वेदीयबाष्कलशाखावाक्यस्योक्तार्थानुग्राहकस्य सत्त्वान्न नो न्यूनता समुदीरितार्थप्रतिपत्तृणामिति चेन्मैवम् । शाखायाः क्वाप्या उत्सन्नत्वे तद्गततयोदाहृतेयं वागनितराध्ययनाध्यापनानुष्ठानानुष्ठापनादिव्यवहारगोचरा श्रुतिशरणैः श्रुतितयाऽविश्वास्या यतः । न हीयं गीः प्रक्रियामिमामवतार्य कल्पसूत्रप्रणेतृभिरितरैर्वा शास्त्रधैरात्मनिबन्धेषूपनिबद्धा क्वचिदप्यालक्ष्यते । यदीदं वचः शाखागतमेवाभविष्यत्सर्वेषामेवादराविशेषेणोपादानविषयतामुपागमिष्यत् । परमेतच्छृण्वन्तः शब्दतो वाऽर्थतो नाभ्युपगच्छन्तीति किमात्मिकाऽत्र श्रुतिमत्तायाः प्रतिपत्तिः । अन्तरा तां ताद्रूप्येण ग्रहणाकारा प्रवृत्तिरपार्थिकी पर्य्युपेयते । सति चैवं तदालम्बनाधीनतप्ताङ्कनप्रक्रिया ननु निर्वर्णितवाक्याभासप्रतीतिसामान्येनाप्यपाकृता प्रमाणसर्वस्वपराहतेत्यवगच्छामः । एतावतैवार्थनत्वस्यास्य चरितार्थत्वात् । "तुष्यतु" नयेनेहापि पदपदार्थक्तिमालम्ब्यास्वारस्यनिरूपणौपयिकविचारणायामुत्तरसङ्क्लृप्तसामग्रीमपास्तसमस्तसङ्ख्याकच्छद्मसामान्यामुपादाय यथोदितदूषणपटल्येवानुसन्धातव्या तावतैवाऽम्भारस्यामर्थ्यहृत्वात् ॥

७५ "प्रते विष्णवि,, त्यादिवचनादप्यतिक्रान्तवचनसजातीयाद्दहनदुराचाराद्दूरीकरणम् ।

यत्तु रामार्चनचन्द्रिकायामानन्दवनेन रामनाममाहात्म्यनामकपुस्तकान्तरे पुनरच्युताश्रमेण निर्णयसिन्धौ भट्टकमलाकरेण चेदृशानुपूर्वीका श्रुतिरसावुदाहृता दृश्यत इत्यन्योक्तीरवलम्बमानम्मन्येनावेदितं वादिना तत्र । आनन्दवननामा रामानुजीय एवास कश्चिदेवं योजयिता यतः । यद्वा स चासौ तन्नामा तटस्थीभूय प्रसङ्गसङ्गत्या दुराचारमेतमुपन्यास्यत्पराभिमतस्यार्थस्यानुवादकतया यथायोगम् । न च शारदापीठपूर्वदेशिकान्तर्वर्त्तिनो वा बहिर्वर्त्तिन अच्युताश्रमनामानो रामनाममाहात्म्यप्रख्यापयितारो ह्युदपद्यन्त । तदभिख्यया विख्यातानान्तावत्त्रयाणामपि निर्विकल्पब्रह्मात्मैकत्वप्रतिपादकानिबन्धनिर्मातृत्या तन्नाममाहात्म्यवर्णनप्रवृत्त्युत्पत्तेरनुपपत्तेः । वस्तुतस्तु तन्नाममाहात्म्यकृदच्युताश्रमनामा स्वामीष्टसंसाधनाय परैरवक्लृप्तो भवतीत्यवगम्यते । यदपि निर्णयसिन्ध्वादौ तदादिवाक्यमुदाहारि भट्टकमलाकरसूरिणा तदपि दग्धतनुवर्त्तमानव्यवहारानुवादमात्राभिप्रायकमुन्नेयम् । न तु तावद्व्यवहारस्यास्योपादेयतानिर्ग्राहकं जातु चित् । श्रुतित्वेन कल्पितवाक्ये किलास्मिन्नर्धोरूप्रतीतिमत्तया पृथक्पदपदार्थपरीक्षणप्रयासो मनीषिणामसम्मत इति तद्दौरात्म्यं न संस्पृशामो वृथाऽऽलापपूरितत्वाद्वावल्ल्याः ।

इति " भते विष्णवि" त्यादिकृत्रिमवाक्यार्थतिरस्कारः ॥

अथैवमपि "दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ,, इत्याथर्वणिकमहोपनिषदि ब्रह्मसूक्तगता श्रुतिरेषा चक्राङ्कने नो नियोजयति भद्रङ्कर इति । बाढम् । तथापि ब्रह्मसूक्ते महोपनिषद्येतदक्षरानुपूर्वीकवाक्यस्यैवादृष्टतरतया दृष्टदुराचारनिरूपकतावच्छेदकधर्माक्रान्तत्वस्य सुतरामप्रत्ययः । यावतीरत्र प्रायशः श्रुतितया वाचो योजयामास सर्वास्ता निर्वर्णितस्वरूपानतिरिक्तस्वरूपत्व एवोदात्तहताः । यद्यपि वाचन्तान्तामनभिज्ञमानवविमोहनकृते स्वरविभेदसञ्ज्ञानादिव्यक्तीकारकृतां वर्त्तयामास तथापि सूक्ष्मतरसमीक्षावशादखिलोऽयमुद्यमो वादिनो गारुडचेष्टितफक्किकाविशेषमेवानुकरोत्यत्युच्चैः । दुरावेशसमायोगात्कचित्कश्चिदवेदितोऽप्यर्थोऽविचारविषयतां मन्यमानः पौनरुक्त्यादिदूषणप्राग्भारेण प्रतिपन्नृसमाधानाविभेदनानुरूपकृत्यात्मना ह्रीयमाणः पर्य्युपेयतेऽपाप्यपार्थविज्ञापकवचनतम स्तोमसमाकलनप्रभवप्रयासातिशयं सङ्ख्यावतां विदधानस्सल्लेषा संसर्गकषायितमतिवैचित्र्याणां वा तादृप्यमेवापादयति वैरु-

८०"दक्षिणे तु भुज,, इति, वाक्यस्य पर दग्धतनुकल्पितस्य यथावदेवतत्रार्थ निरस्करणम् ।

प्याह्वयविकृतप्रत्ययोपधानसाक्षिकं पुनः पुनः । नैकाऽपि पदपङ्क्तीरुचिरार्थमुन्मृदिताऽप्रमाविलासप्रालनाशीलं माहयत्यणुतरं वा । एतदर्थविघटनानुकूलपूतिगन्धाधिकरणभूरिभाषासमास्तरणशीलितत्वादेवासमन्तात् । "दक्षिणे तु भुजे विप्रा बिभृयायसलाञ्छनम् । शङ्खचक्रादिदुर्मेल्या कलिमालिन्यमीलिता" इत्येव विश्रुततरस्य वाक्यस्य हि बृहन्नारदीयस्यातार्थे ज्ञापयितव्यत्वाच्च । यदि स्याः स्वीयवाक्यैकपरिगाम्यावेशवासितस्वान्तस्तदा विनिगमनाविरहेण नारदीयवाक्ये तथाभूतकिन्न स्याः । विनिगमकं चेत्साक्षिध्यादिलक्षणमभिल्याहर्तुमुत्सहसे तर्हि तस्मान्यविधुरतयाऽस्ति प्रतिपादनं तावकीनमित्यवोचाम चासकृत्प्रागेव । वैलक्षण्यं चेत्केनचिद्देशेन व्याहर्तुम्पुनरीहसे तथाऽपि प्रतिपादितोपपत्तिशतात्तदपि प्रत्याख्यातं वेदितव्यम् । उत्तानार्थकमित्थमपार्थकवाक्यं हीदं कृत्रिमतरमेव । कृत्स्नप्रामाण्यविगर्हितत्वात् । नैव त्वमात्मानमास्तिकम्मानानो वा ज्ञापयमानः प्रवचनमात्रेणैव नीरसतरेण भवेरास्तिकः कल्पान्ते वा । न खल्वङ्गदाहादिकं कर्मास्तिकतायामस्ति किञ्चित्तन्त्रम् । नास्तिक्य एवासुरचर्यासमालम्बनभूते सदैवास्य तन्त्रत्वात् । पृथक्जनैककूट एव प्रचारयोगाय प्रतारकैरुपादीयमानोऽर्थो मतिमन्मानवेष्वधरपरिस्पन्दाय वा युज्यते कथञ्चित् । मत्यैव ह्यसारतरवस्तुव्रातप्रग्राहिण्या मदादेर्न्यक्कारसमारपदत्वात् । न च महेशाद्याराध्यतमदैवतादिभ्यो विमुखीभूतादच निरूढनिगमागमगम्यमानसमाचारेभ्य आस्तिकव्यपदेशभावमनुवीरसंघातो वा मानवा हन्त भवन्तः । न च पुनर्विप्रतिपत्तयो युष्मदादिविगीतसमाचारशीलिन्यः समुत्पादयितुमुदपद्यन्त इत्यद्भुतं नाम नामत आत्मवताम् । यथाऽवस्थितवस्तुव्यवस्थित्यै प्रवृत्तेस्तासां कृतकृत्यत्वात् । तस्मादङ्कनादिव्यवहारः पशुधर्मो न वेत्याकारां परित्यज्य विप्रतिपत्तिं तप्तचक्राङ्कनादिधर्मो वैदिको न वेत्येवंरूपामपि वा कश्चिदास्तिकात्मा प्रयुञ्ज्यात्परिहारकथासु वा । न कोऽपि कदाचिदेवं कुर्यादिति कृतमेतावता ॥

इति "दक्षिणे तु भुज" इत्यर्वाचीनवचननिराकरणम् ॥

अथ पाञ्चरात्रमहाकल्पमहीरुहं तावच्छरणमुपयातानां नो यथोदिताङ्कनावश्यानुष्ठानतत्प्रभवफलसमृद्धेरल्पमतया भद्रमेव सद्भूतानामिति । अत्रैवं पर्यनुयुज्यते किमिदं पाञ्चरात्रमृगादिवेदप्रामाण्योपनीतपदार्थप्रत्यायनविशिष्टयोग्यताकृतयाऽभिमन्यत उत

८१ पाञ्चरात्रस्याप्रामाण्यप्रसाधनपुरस्सरं तत्साह्वनद्धाचारतिरस्कार ।

तदङ्गपुरोगमप्रत्यर्पितवस्तुसन्तानसन्धायकतयाऽऽहोस्वित्स्वातन्त्र्येण स्वार्थसमुद्योतनसत्त्वादिति । नाद्यः । यथाऽवक्लृऽप्तोपन्यासघोरणीभिरनवशेषविशेषप्रसाधिनीभिः स्वप्रतिपाद्यनानार्थप्रतिपत्तेर्विनिपूदितत्वात् । नो खलु मानन्यक्तिविधाविभेदेषु "स्मृतिः प्रत्यक्षमैतिह्यं अनुमानश्चतुष्टयमि" ति मन्त्रप्रकीर्तितेषु पुनस्तज्जातीयवचोविशेषप्रत्यरसितेषु पाञ्चरात्रस्याऽसङ्ख्यानात् । न च "प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागमम् । त्रयं सुविदितङ्कार्यन्धर्मशुद्धिमभीप्सता । आर्षन्धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर" इति स्मरणान्मनोर्विविधागमपदोपबृंहितात्पाञ्चरात्रस्यावगतिः सम्प्रतिपन्नेति साम्प्रतम् । विविधागमपदेनेह वा पाञ्चरात्रपरिग्रहस्यावास्तवत्वात् । अत्र हि शास्त्रपदं वेदस्यैव भवति वक्तृ पुरुषहितविशेषशासनात् । तदिदं मन्त्रार्थवादेतिहासपुराणादिना विविधागमपदविभेदबोध्येन प्रतीत्यालम्बनमित्येवोचितं नापरथा । लौकिकागमनामितरेतरमतिमात्रपरिकल्पितानामन्योन्यविरोधावभासभासितानाञ्चानुपादेयैकदेशीयत्वात् । यथाहु "रतीन्द्रियार्थविज्ञाने प्रमाणं श्रुतिरेव हि । श्रुत्युक्ताचारतो ग्राह्या ह्यागमानां प्रसज्यते" इति । अभ्युक्तरीत्या श्रुत्युक्ताचारसामान्यविरुद्धत्वादाचाराणाञ्च पाञ्चरात्राणां स्मृतिरेषा पञ्चरात्राणि नाभिमन्यत एवेति फलितम् ॥

नन्वितिहासरत्ने पञ्चरात्रमहिम्नः सङ्कीर्तिततया कथं तदपमानो विधीयतामिति । नैष दोषः । नारदादिपञ्चरात्रातिरिक्तपञ्चरात्रपदवेदनीयमन्धरायोरन्याहशस्यैव ततो निगम्यमानत्वात्तेन च ब्रह्मात्मना समापादितैक्यातिशयानां तावद्देवतानामभेदप्रतिपत्तिप्रयोजकोपास्तेर्भित्सादिदूषणसमापत्त्याङ्कनादिचेष्टाविशेषविधुराया आदिष्टत्वात् । अंशेनैकतमेन यथाकथञ्चित्सम्प्रतिपत्तावप्यंशैर्भूयोभिर्विमतिपत्तीनामेव प्रख्यातप्रमाणप्रत्ययातिशयशालिनीनां निष्कृष्टत्वात् । न हि तावत्तीर्थकारा गौतमजैमिन्यादयो मेनिरे हन्त पञ्चरात्राणि न्याय्यानि न वा निजनिबन्धेष्वंशतो वा निबध्नन्युस्ते तानि कुत्र चित् । प्रत्युत तया तया वाचोयुक्त्या तानीमानि न्यक्कुर्वाणाः सन्दृश्यन्ते सहैव वार्त्तिककारैः । नापि कृष्णद्वैपायनाचार्यः प्रत्युतैतान्येते "एतेन शिष्टापरिग्रहा अपि व्याख्याता" इति ब्रह्मसूत्रेण निराचक्षते स्म । न चेदं मेयमेव पीत्वादिलक्षणं निराचष्टे सूत्रमिति सन्तोष्टव्यम् । मेयापनोदनविनोदस्य मानावधूननफलपर्यवसायित्वे तदुपदेशादिहापि पञ्चरा-

न्प्रत्याख्यानस्यार्म्याहिततरत्वात् । न च पञ्चरात्रे तवाप्यभिपूज्यस्य विष्णो-र्भगवतः संस्तूयमानतया वैदिकतरतया च तत्तत्वप्रतिपादकग्रन्थराशेरस्य कथं स्यादप्रामाण्यमित्याशङ्कितव्यम् । तत्वस्य हि विष्णोरनापेक्षिकस्य संवननीयत्वे ऽपि तन्निभेण विकृतालापप्रलापमयस्य तु पञ्चरात्रस्याप्रामाणिककृतिविशेषको-टिप्रविष्टस्यापाकियामात्रपात्रत्वात् । अभिधानमात्रप्रत्ययमृते विष्णोरभिधेयविधेयधी-र्षी तत्कैङ्कर्योपायप्रयोगशैली नाऽऽङ्क्षिलार्थापूर्वोत्पादनप्रयुक्ताय कर्हि चित् । एवञ्च सम्प्रुत्सादितवचनसजातीयवचनजातविग्रहावयवं नूनमिदं पञ्चरात्राह्वयं व-स्तु नान्यादृशतिरस्कारप्रयासविस्मयायावकल्पते । न हि चार्वितचर्वणपरिमाणमृ-ते किमप्यपूर्वमस्यां वा पश्यामः पदपङ्क्तौ । न हि पुन“र्दग्धस्य दहनं नास्ती” ति न्यायं पैङ्गलानां परामृशन्तो निरसनकर्मण्यस्य प्रवर्त्तामहे प्रायशः समाश्रिता-वयवान्वावयात्मनो नाम तन्निष्ठान् । तथाऽप्यपभाषणविशेषमाप्रहरणार्हन्तु वृत्तं तावत्तत्र तत्रापाकरिष्यते । तथा हि “तपस्तपाँसि तीर्थानि पुण्ड्रो नाम नम-स्क्रिया । आम्नायाः सकला मन्त्राः क्रतवः पूजनं हरेरि” ति पुरस्कृत्य कृत्रिम-वाक्यं तापसंस्कारस्य सर्वतपस्समुदायसमानस्कन्धत्वं पुण्ड्रसंस्कारस्य सर्वपुण्यती-र्थस्नानसमानस्कन्धत्वं नामसंस्कारस्य सर्वकालकृतभगवन्नमस्कारसमानस्कन्धत्वं म-न्त्रसंस्कारस्य सर्ववेदाध्ययनसमानस्कन्धत्वमित्यादिकं प्रलपन् तन्निन्द्यम् । यथो-क्तदिशा भारद्वाजीयतदोद्धृतसंहितायाः एवाप्रामाण्ये प्रसाधिते तद्वाक्यावयव-स्यास्य सुतरामेव तथात्वाधिगमे तदेतदास्थाय कृतश्च विकृतालापः समं तपःस-मुदायसर्वपुण्यतीर्थस्नानभगवन्नमस्कारसर्ववेदाध्ययनैर्देहदाहलक्षणतापसंस्कारपुण्ड्रसं-स्कारनामसंस्कारमन्त्रसंस्काराणां पारिभाषिकाणामपि परमुपवर्णितगत्या प्रत्याख्या-तानां प्रतिष्ठापनसरणिसामान्यसौष्ठवविहीनानां सम्बन्धसामान्यबन्धनासम्भवात् । तापनक्रियायाः पशुधर्मतया परिकीर्त्तितायाः यावत्प्रमाणबाह्यतरत्वे नामग्रहणमात्रा-दपि किञ्चिपाधायकत्वे पुनस्तपश्चारणयोग्यतापरिमार्जकत्वे च कथं सर्वतपःस-मुदायसमानस्कन्धता । पुण्ड्रकर्मणोऽप्यकिञ्चित्करत्वे च विफलप्रयासविषयत्वे सर्वपुण्यतीर्थस्नानसमानस्कन्धता वा किमात्मिकेति मतिं मतिमतामाराधनयोपादाय यथावद्विभावयेः । दाम्भिकनामसंस्कारस्यापप्रथाविभेदद्रूषितस्य ते निरर्थस्य श्रव-णादेव तामसप्रत्ययसमुत्पादनैकयोगयोग्यत्वे श्रोतॄणां कथं नु सर्वकालकृतभगव-न्नमस्कारसमानस्कन्धत्वम् । मन्त्रसंस्कारस्य तु प्रायेणावैदिकस्य पुनः परमदि-

गादिदेवताविक्षेपरूपितस्य सर्ववेदाध्ययनसमानस्कन्धत्वं ननु "मुखमस्तीति वक्तव्यं दशहस्ता हरीतकीति" न्यायमुपसेवत एव । यागसंस्कारस्य वा यथाऽवस्थितयावद्यागवस्तुव्यवस्थापराभूतस्य च शिष्टापरिग्राह्यस्य सर्वक्रतुसमानस्कन्धत्वकथनं पृथग्जनैकसंमोहनार्थमालं न तु जात्वपिगतशास्त्रीयविचारसरणीनां पुरोऽवभानायाकल्पते । न हि "यत्ते पवित्रमर्चिष्यग्ने विततमन्तरे" त्यादिका श्रुतिरीपद्वा व्यवहारानमून् संस्कारतयाऽभिवक्ते प्रत्युत तात्पर्यमर्यादयैतेषामपार्थवर्गीयतामेवाभिद्योतयत्युचितगत्या । न चेह पावित्र्यपदं कुत्सितार्थे त्वदभिप्रेतं तप्ताङ्कनादिलक्षणं भनयति किं तर्ह्यभिगतं हविःप्रदानादिना सन्तर्पयन्तं यष्टारं भूरिमभावोपलक्षितपावित्र्यमात्मकामनाप्रपूरणाय प्रब्रूते । इतरथा सूक्तस्योपक्रमपरामर्शोपसंहाराणां प्रतिपत्तिर्हि सन्नियता प्रतिबध्येत । न हीदमवरोधनं सहन्ते कल्पसूत्राणि लेशतो वा नापि तेषां विगर्हाविषयः प्रचारलेशाय वाऽलं मतिमतामितिस्थिते उत्किर्हन्त तावकीना निरात्मिकेति विजानते हि वेदविदः । न च पवमानसूक्तमुदितार्थश्रवणमस्त्युपन्यस्तरूपोपपन्नत्वात् । पराकृता अपि दुर्युक्तयो नेह पुनः पराकरणमर्हन्ति । सकृत्प्रयुक्ताया एवं हि पराकृतेः सर्वत्र कृतकृत्यत्वात्पौनरुक्त्यप्रसङ्गासम्भवाच्च ॥

८२ पाद्मसंहितावचनानां बृहन्नारदीयादिविपक्षवचनैर्निराकरणप्रदर्शनम् ।

यत्तु पाद्मसंहितां पुरस्कृत्य "पद्माक्षमालां ग्रीवायां लम्बयेत् साधकः शुचिः । हारे हेममयं चक्रं सर्वविघ्नोपशान्तये । जपकाले तथा चक्रशङ्खाकृति यथा तथा । शार्ङ्गखड्गगदाकारं लाञ्छनं लाञ्छयेत्सुधीः । शिरस्यवयवे बाह्वोर्वक्षोभृवि चतुर्मुख । चक्रादिपञ्चाभिधानलक्षिताङ्कपरिष्कृतम् । पुरुषं दूरतो दृष्ट्वा भूताद्या भयविह्वलाः । विद्रवन्ति तथा घोराः पापा वीक्षणमात्रतः । विनश्यन्ति तथा पुण्यपुञ्जानि प्रविशन्ति च । प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथा । अकृत्यमपि कुर्वाणो भुञ्जानो वा यतस्ततः । पापैर्न लिप्यते देही चक्राद्यायुधलाञ्छितः । हव्यं कव्यं च दातव्यं तस्मै दातव्यमक्षरमि" ति वचोजातं प्रक्षिप्ततरमुपन्यस्तं तदेतद्यथोपपादितप्रमाणवचोभिः पुनः प्रत्यर्थिप्रमाणराशिभिः "पतितं तप्तलिङ्गाढ्यं चक्राङ्कितमथाऽपि वा । वाङ्मात्रेणापि नार्चेत" त्याद्याभिः प्रत्याख्यातं वेदितव्यम् । न चेह वाक्ययोः पाक्षिकयोरनयोर्बलाबलविचारणया बलवत्ता स्योदन्दर्हतानामस्तीति वा गुरूमोदयितुम् । प्रमाणकात्स्न्योपरोधेऽपि "पतितं" त्याद्युत्तरपर्यायपद्यानामेव

मत्त्वस्त्वात् । सत्येकस्मिन् वा बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वाच्च । विपर्ययेणातो यावन्मानवचनोपर्द्रुततया 'शार्ङ्गशङ्खगदाकार, मित्यादीनां दौर्बल्यस्याथ निग्राह्यतायाः सम्प्रत्ययात् । तप्ताङ्कनादिचेष्टाविशेषकर्तॄणां घोरतरतामसाकारतया पुनः पाप्मप्रमत्तविरूपविन्यासतयाऽऽस्मदर्शनमात्रत एव विद्रवन्तीति युक्तमेवोक्तम् । ततोऽप्यमीषां विलक्षणभूतादिजन्मधारित्वात् । विनश्यन्तीति तु न युक्तम् । भूतजन्मोपमर्दकसंस्कारप्रादुर्भूतेरप्रस्तुतत्वात् । सति चैवं पुण्यपुञ्जप्रवेशनमुपपद्यते दूरापास्तम् । दर्शनकर्मीभूतानाममीषां पुण्यसरण्या एव दवीयस्त्वात् । "प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथे" ति पदविन्यासं परित्यज्य "प्रकुप्यन्ति नराः सर्वे नार्यो वा बाल्यभाविता" इत्येव न्याय्यः प्रतिपत्तव्यः । पापप्रचारा ह्यमी अङ्कितगात्रा न लिप्यन्ते पापैरित्युक्तिः पुर एव पार्ष्णिताम्‌ प्रवर्ततां हव्यकव्यदानविषया वा सा कदाचिदित्यलमलीकवस्तुकीर्तनेन॥

यदपि विष्णुमन्दिरसंहितावचनतया "प्रतिष्ठादिवसञ्ज्ञात्वा ऋत्विग्भिर्द्विजसत्तमैः । एकान्तिमुनिमुख्यैस्तु कृतचक्रादिलक्षणैः । यजमानः प्रकुर्वीत वेधादिस्थापनं पुर" इति विनिवेदितं तदप्येतदाधिगतातीतविषयावतारितखण्डनयुक्त्यादिसदनमेवावसीयताम् । अभिकन्तु भेदवादोऽयमर्थस्तत्साङ्कनर्त्विग्भिर्नामा ऋत्विग्द्विजसत्तममुनिमुख्ययजमानवेधादिसञ्चारेभ्यो नियुतयोजनविप्रकृष्टो न तैरेतैः सन्निकृष्यते कल्पान्तेऽपीति वेदितव्यम् ॥

८३ पुनरप्यङ्कनशीलं प्रति-सङ्गतप्रलापनिराकरणम्।

यदप्येतदुच्यते । "एवं सदीया विप्राश्च क्षत्रिया वैश्यजातयः । मौद्गल्याद्यास्तथाऽन्ये च न तच्चिह्नविवर्जिताः । भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदाम्बुभिः । लौहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः । पूर्णैराधर्धगन्धाद्यैराङ्कितव्याः क्षणेन तु । प्रत्यन्तज्ञानसम्पन्ना [illegible]मिताः । विप्राद्यास्ते च शूद्राश्च यदेवं कृतलक्षणाः । तदा तु [illegible]श्रवणादिषु । शास्त्रोदितासु सर्वासु सामग्रीषु महामते । या[illegible]न्यपि । संलाञ्छ्यानि यथायोगं शङ्खचक्रादिलक्षणैः । [illegible] पर्वाणि यत्नतः । स्वात्मोपकरणं सर्वथा[illegible] [illegible] सौमुष्णीपपूर्वकम् । चक्रादिलाञ्छितं कु[illegible] [illegible]यादीया भूरुहादयः । लाञ्छित-

८४ अत्रार्थे त-च्छास्त्रीयवाक्य-तत्परिहासौ च-[illegible]।

न्या यथायोगं शङ्खचक्रादिलक्षणैः । आधारकाद्याः कर्मण्या एवं चक्रादिलाञ्छिताः । देवतान्तरचिन्हैस्तु अकर्मण्यास्तु लाञ्छिता,, इति पारमेश्वरसंहितावाक्यतया तत्प्रत्युच्यते । अर्थे हन्तास्मिन्दुराग्रहग्रहग्रस्तमानवापसदैरारचितोऽयं वाङ्निकरो नार्षो वाऽस्ति न वा तदनुयाय्युपकल्पितः । अपि तु वालिशसमाचारशैलीसमाश्रयो विभाव्यते किञ्चाकिञ्चित्करवस्तुवर्णनाभासमलिनीभवन्मानसत्वादेवैवमादिनिरूपकाणाम् । उदिगयावद्वस्त्वेकाशैकदेशावच्छेदेनाङ्कनमपेक्ष्य यावद्देशावच्छेदेनैव चेदभिप्रेयेत तदा दाहमत्ययगयाहिरदीभूतवस्तुमर्त्वलमनुभूयमानमाकृतिभेव भस्मनो ज्ञापयनीति सेवका एवासमन्तात्तस्य पर्य्यवस्येयुर्मेवादृशाः सर्वे एव हीति वैमनस्यमेव तस्मिन्नुज्झित्वैव वर्तितव्यमापद्यते यथावत् । एवञ्चेमां प्रक्रियामङ्कनस्योपाददानैरुत्सादयितव्यैव श्मशानभूमिरात्मव्यापारप्रत्यनीकभावभागित्वादासमन्तात् । वस्तुतस्तु न हि वाक्यनिकरविनिवेदनमुपादानायालं साहसमात्रेण समासादितवस्तुवृत्तानाम् । उपादानयोग्यतापरिष्कृतवाक्यव्यक्तेरेव भूयश्चानुवादसम्पत्सम्पन्नाया विचारवन्मतिपथसमारोहार्हत्वात् । न चार्वाचीनचैनोविभ्रमसञ्जननमात्रेणैवात्मानं कृतकृत्यम्मन्येथाः । विचारकशार्दूलानां समीक्षाबलात्तदादिदौरात्म्यव्यक्तीकारस्यैवाराद्युपस्थिततरत्वात् । नो रात्वत्यासन्नविघटनाविशेषसम्भारानननुसन्धाय स्वामीहृदनानुकारिणीं चेष्टां कश्चन निश्चिनुयात्मुत्पात्मेति स्थितौ वस्तुतत्त्वसदाहनकर्मणो विफलप्रवृत्त्यात्मनो बीभत्सानिर्व्यकिल्बिषविशेषभुजो विरम्यतां तावत् । समाचारिततद्दुःसमाचारसञ्जातदेनसो विनिवृत्त्यर्थमुपपन्नप्रायश्चित्तप्रक्रियामवलम्बस्व यथाशास्त्रम् । तेन चात्मानं पावयस्व यथोद्देशं यथैव गत्या पातकवन्तः सार्वकालिकास्तेभ्योऽपावृत्तप्रायाः प्रतिपद्यन्ते लोकनदशायनश्च ॥

यत्पुनरुच्यते "एवं विज्ञापिताः शिष्याश्चक्राद्यङ्कसमन्विताः । देवा एव भवन्त्येते नान्येषां कर्मकारकाः । इति तेनाप्यनुज्ञानदत्तकलिङ्गधरो भवेत् । संस्कारो व्यञ्जितात्मानः पतिचिह्नेन लाञ्छिताः । देवाभिधानवन्तश्च त्यक्तासद्परिग्रहाः । तमेव सर्वभावेन संप्रपन्नास्तु महामुने । चक्रादिधारणं पुंसां परसम्बन्धवेदनम् । पतिव्रतानिमित्तं हि वलयादिविभूषणमि,, त्यमापि वाक्यसमूहो निम्नुनत्वपदवीप इति सोऽपि पगोत्पस्तगाययमहोदरागमाणो पयोधरशिनरूपगणप्रगो वर्तते एव विस्तरतः । विशेषस्तु निनपकाङ्कनं निस्सहायं माभूदिति सहायीकृतमत्र चि:

९६ पुनरेषाम् दुरवाक्यानामन्याख्यानामुपमर्दनम् ।

बलवत्त्वात् । सत्येकस्मिन् वा बाधके साधकसहस्रस्याप्यकिञ्चित्करत्वाच्च । विपर्ययेणातो यावन्मानवचनोपर्द्धुततया 'शार्ङ्गशङ्खगदाकार, मित्यादीनां दौर्बल्यस्याश्च निग्राह्यतायाः सम्प्रत्ययात् । तप्ताङ्कनादिचेष्टाविशेषकर्तॄणां घोरतरतामसाकारतया पुनः पाप्मप्रमत्तविरूपविन्यासतयाऽऽत्मदर्शनमात्रत एव विद्रवन्तीति युक्तमेवोक्तम् । ततोऽप्यमीषां विलक्षणभूतादिजन्मधारित्वात् । विनश्यन्तीति तु न युक्तम् । भूतजन्मोपमर्दकसंस्कारप्रादुर्भूतेरप्रस्तुतत्वात् । सति चैवं पुण्यपुञ्जप्रवेशनमुपपद्यते दूरापास्तम् । दर्शनकर्मीभूतानाममीषां पुण्यसरण्या एव दवीयस्त्वात् । "प्रणमन्ति तथा देवा देवर्षिप्रवरास्तथे" ति पदविन्यासं परित्यज्य "प्रकुप्यन्ति नराः सर्वे नार्यो वा बाल्यभाविता" इत्येव न्याय्यः प्रतिपत्तव्यः । पापप्रचारा ह्यमी अङ्कितगात्रा न लिप्यन्ते पापैरित्युक्तिः पुर एव पार्श्ववर्तामा प्रवर्तता हव्यकव्यदानविषया वा सा कदाचिदित्यलमलीकवस्तुकीर्त्तनेन॥

८३ पुनरप्यङ्कनकर्मणि कलिवत्वाक्यनिराकृतिः ।

यदपि विष्णुमन्दिरसंहितावचनतया "प्रतिष्ठादिवसञ्ज्ञात्वा ऋत्विग्भिर्द्विजसत्तमैः । एकान्तिमुनिमुख्यैस्तु कृतचक्रादिलक्षणैः । यजमानः प्रकुर्वीत वेधादिस्थापनं पुर" इति विनिवेदितं तदप्येतदधिगतातीतविषयावतारितखण्डनयुक्त्यादिसदनमेवावसीयताम् । अधिकन्तु वेदबाह्योऽयमर्थस्तप्ताङ्कनतुर्नामा ऋत्विग्द्विजसत्तममुनिमुख्ययजमानवेधादिसम्भारेभ्यो नियुतयोजनविप्रकृष्टो न तैरेतैः सन्निकृष्यते कल्पान्तेऽपीति वेदितव्यम् ॥

८४ अत्रार्थे तज्जातीयवाक्यान्तरनिराकृती प्रकारान्तरेण ।

यदप्येतदुच्यते । "एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः । मौद्गल्याद्यास्तथाऽन्ये च न तच्चिह्नविवर्जिताः । भवेयुस्सर्वदा तस्माच्छङ्खचक्रगदाम्बुजैः । सौहैरनलसन्तप्तैस्तत्तन्मन्त्राधिवासितैः । पूजितैरर्घ्यगन्धाद्यैराङ्कितव्याः क्षणेन तु । अत्यन्तज्ञानसम्पन्ना यथोक्ताचारनिष्ठिताः । विप्राद्यास्ते च शूद्राश्च यदेवं कृतलक्षणाः । तदा तु योग्या विज्ञेयास्समयश्रवणादिषु । शास्त्रोदितासु सर्वासु सामग्रीषु महामते । यागोपकरणान्येवमर्घ्यपाद्यादिकान्यपि । संलाञ्छ्यानि यथायोगं शङ्खचक्रादिलक्षणैः । तथा यानासनादीनि विमोरसर्वाणि यत्नतः । स्वात्मोपकरणं सर्वमासनादिविवर्जितम् । अङ्गुलीयकपर्यन्तं सर्वमुष्णीषपूर्वकम् । चक्रादिलाञ्छितं कुर्यात्तदीयाश्च गदादयः । विप्रादिपरलाञ्छितव्यास्तदीया मूलादयः । लाञ्छित-

न्या यथायोगं शङ्खचक्रादिलक्षणैः । आधारकाद्याः कर्मण्या एवं चक्रादिलाञ्छिताः । देवतान्तरचिन्हैस्तु त्वकर्मण्यास्तु लाञ्छिता,, इति पारमेश्वरसंहितावाक्यतया तत्प्रत्युच्यते । अर्थे हन्तास्मिन्दुराग्रहग्रहग्रस्तमानवापसदैरारचितोऽयं वाङ्निकरो नार्थो वाऽस्ति न वा तदनुयाय्युपकल्पिनः । अपि तु बालिशसमाचारशैलीसमाश्रयो विभाव्यते किञ्चाकिञ्चित्करवस्तुवर्णनाभासमलिनीभवन्मानसत्वादेवैवमादिनिरूपकाणाम् । उदिनयावद्वस्त्वेकाशेकदेशावच्छेदेनाङ्कनमपेक्ष्य यावद्देशावच्छेदेनैव चेदभिप्रेयेत तदा दाहप्रत्ययपर्यायीभूतवस्तुसर्वस्वमनुभूयमानमाकृतिमेव भस्मनो ज्ञापयतीति सेवका एवासमन्तात्तस्य पर्यवसेयुर्मैवादृशाः सर्व एव हीति वैमनस्यमेव तस्मिन्नुज्झित्वैव वर्तितव्यमापद्यते यथावत् । एवञ्चेमां प्रक्रियामङ्कनस्योपाददानैरुत्सादयितव्यैव स्मशानभूमिरात्मव्यापारप्रत्यनीकभावभावित्वादासमन्तात् । वस्तुतस्तु न हि वाक्यनिकरविनिवेदनमुपादानायालं साहसमात्रेण समासादितवस्तुवृत्तानाम् । उपादानयोग्यतापरिष्कृतवाक्यव्यक्तेरेव भूयर्थानुवादसम्पत्सम्पन्नाया विचारवन्मतिपथसमारोहार्हत्वात् । न चार्वाचीनचेतोविभ्रमसञ्जननमात्रेणैवात्मानं कृतकृत्यम्मन्येथाः । विचारकशार्दूलानां समीक्षाबलात्तदादिदौरात्म्यव्यक्तीकारस्यैवाराद्युपस्थिततरत्वात् । नो खल्वत्यासन्नविघटनाविशेषसम्भारानननुसन्धाय स्वाभीष्टघटनानुकारिणीं चेष्टां कश्चन निश्चिनुयात्सुस्थात्मेति स्थितौ वस्तुसर्वस्वदाहनकर्मणो विफलप्रवृत्त्यात्मनो बीभत्सानिष्ठ्यकिल्बिषविशेषभुवो विरम्यतां तावत् । समाचारितदुःसमाचारसम्न्नातादेनसो विनिवृत्त्यर्थमुपपन्नप्रायश्चित्तप्रक्रियामवलम्बस्व यथाशास्त्रम् । तेन चात्मानं पावयस्व यथोद्देशं ययैव गत्या पातकवन्तः सार्वकालिकास्तेभ्योऽपावृत्तप्रायाः प्रतिपद्यन्ते लोकतश्शास्त्रतश्च ॥

८५ पुनरेवात्र दुष्टवाक्यानामन्यादृशानामुपमर्दनम् ।

यत्पुनरुच्यते "एवं विज्ञापिताः शिष्याश्चक्रालिङ्गसमन्विताः । देवा एव भवन्त्वेते नान्येषां कर्मकारकाः । इति तेनाभ्यनुज्ञातश्चक्रलिङ्गधरो भवेत् । संस्कारो व्यञ्जितात्मानः पतिचिह्नेन लाञ्छिताः । देवाभिधानवन्तश्च त्यक्तास्पदपरिग्रहाः । तमेव सर्वभावेन संप्रयान्तु महामुने । चक्रादिधारणं पुंसां परसम्बन्धवेदनम् । पतिवृत्तानिमित्तं हि वलयादिविभूषणमि,, त्यसावपि वाक्यसमूहो विष्णुतत्त्वपठ्यीय इति सोऽपि यथोपन्यस्तवाक्यसहोदरायमाणो यथोपदर्शितदूषणगणग्रस्तो वर्त्तत एव विस्तरशः । विशेषस्तु निजचक्राङ्कनं निस्सहायं माभूदिति सहायीकृतमत्र त्रि-

ङ्गाङ्कम योजकजनेन समानयोग्यतावत् । न हि लोके वलयादिभूषणमनन्यपति-
काया एव पत्न्या उपपद्यते । अनेकपतिकास्वपि वाराङ्गनास्वनवरतमेव तद्दर्शना
त्प्रत्युत तदेतद्विन्यासविशेषबाहुल्यैः । किमभिप्रेत्येदमुदाहरणप्रदर्शनमिति चेत्प्र-
चलद्व्यवहारसरण्याऽप्यपरिज्ञानप्रयोज्यमेवैतदिति विजानीया । न च निरभिप्राय-
प्रसाधनेन देवव्यपदेशपुरस्सरमभिकल्पितविकृताभिधानेनासम्पृक्तसमस्तेतरसत्साम
ग्री।परम्परार्केण देवावाप्तिर्युक्तग्रहा । तदवाप्तिप्रयोजकनियतव्यक्तीनामामिधान
स्यैतादृशस्यान्यथासिद्धत्वात् । न चापि त्यक्तास्पदपरिग्रहताऽस्त्यङ्गदाहवताम् ।
परिग्रहपिशाचीप्रेताभिरूपसन्धारणस्य त्वस्याशेषानर्थकार्मणस्य तैरेतै परिगृहीत
त्वात् । न चेह तप्ताङ्का भगवद्दास्यवन्तो वा तदाज्ञानुवर्त्तिनो भवेयुस्तदनन्यया
जिनो जातु चित् । दास्योर्दरमीषा तप्तलोहशलाकामात्रगोचरत्वात् । एवंविधाना
ञ्चेद्देवसञ्ज्ञाव्यपदेश्यत्वं तदा देवा हन्त किमाश्रयेयु वैदिकधर्मानुष्ठातारो निख
ध्यनिजाचारशीलिनः कं वोपसर्पेयु । एवं तर्हि वायसगणा मराळभावमृच्छेयु म
राळा पुनर्हीनपदभाजो भवेयुरित्यनिष्टमेवासमन्तादिति स्थिते तत्वं वस्तुनो द
ग्धतनूना विभावयन्तु सुधीवराः ॥

नन्वेवमपि "यज्ञेन यज्ञमयजन्त देवा" इत्यस्याः श्रुतेरङ्कितगात्राणामु
दीरितयोग्यतावत्त्वमव्याहतम् । मास्मैवं मतिं कुर्याः । शिश
रुदितगान्धर्वगानयो स्वरूपसौरम्यसमानयोगक्षेमत्वापत्तेरपरिहा-
र्यत्वात् । क वा जम्बुकालापविलापवत्प्रापरमा दग्धाङ्गदुर्वा-

८६ "यज्ञेने"ति श्रुतिं देहदाहक्रियायां योजितवतो दुरारमनो धिकारविभेद ।

द । क वा पुनर्दिव्यानन्दसन्दोहदायिश्रुतिभगवतीतात्पर्यलक्ष्मीविलासः । न
स्वस्त्रियं दग्धतनूना कर्माण्यभिवत्ते श्रुतिव्यक्ति । किं तर्हि यज्ञमेव कल्पादिक
रूपपादपाविनिबद्धमनार्यजनदुर्वासना ऽसहा विराजते । न हि श्रुतौ "यज्ञो वै
विष्णुरि" त्येतस्या विष्णुपदं तदभिप्रेतविकृताकारतया तमेतमावेदयति । अपि तु
तदसम्पृक्तप्रत्ययविभेदसमास्पदीभूतप्रमेयस्वरूपप्रतिष्ठं निर्ब्रूते । तस्यैव तत्तात्पर्य
विशेषविषयत्वात् । अस्तु वा "तुष्यतु" नयेन तदभिधाप्यसौ यथाकथञ्चित्तया-
पि तदभीष्टं विरुध्यत्येवाङ्कनकृत्यमनन्यसहमानं सत्समुदितमानावलीसन्निवेशप्रश
यदमत्यादरात् । यथा च व्याकारि "यज्ञेन यज्ञमयजन्त देवा अग्निनाऽग्नि
मयजन्त देवाः । अग्निः पशुरासीत्तमाऽलभन्त तेनायजन्तेति च ब्राह्मणमिति" पर-
मार्पिणा यास्केन । नापि देवशब्दस्तदम्यूहितगाम्छितनूनिर्दिशति तस्य प्रला

पतिप्राणरूपाणां मयनदादिरूपाणामवबोधनात् । " यत्रर्षयः प्रथमजा ये पुराणा" इत्यपि श्रुतिवचः प्रकरणान्तरपठितत्वान्नेहोदाहरणमर्हति । उदाहरणेऽपि "यज्ञेने" ति मन्त्रवर्णवदुदीरितार्थसमन्वयभाग्युन्नीयते । अस्यैव वैशम्पायनधानञ्जय्यादिभाष्योन्नीतत्वादर्थरत्नस्येति जानीहि ।

८७ काष्ठमालाविषयकविचारप्रसक्तौ बहुतरोपपात्तिबलान्मानवाध्यत्वं तद्धारणाप्रामाण्यप्रतिपादनम् ।

न च "ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिन्हितशङ्खचक्राः । ये वा ललाटफलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्ती"ति वचनं मन्तव्यं निराबाधम् । "ते वैष्णवा भुवनमाशु विनाशयन्ती " ति स्कान्दवचसा तथ्यांशं प्रकटीकुर्वता पराहतत्वात् । तुलसीदलमात्रसंसेवनस्यैव युक्तत्वे न तु तत्काष्ठकणिकाविनिर्मितमालाया धारणं सफलं वा महाजनमान्यं वा श्रुतिस्मृतिप्रमाणसन्दृब्धं वोपपद्यते । त्रिभिरप्येतैः प्रमाणवर्त्मभिरस्पृष्टत्वादशेषजनसमाराध्यैः । न हि नलिनाक्षाणामपूर्वोत्पादकगुणवत्ताऽस्ति । गर्भस्थैषामुदितार्थप्रयोजकाविकारभावगृहीतत्वादतोऽन्यस्या अपि योग्यताया मृग्यत्वाच्च । न च " सुवर्णमणिमुक्तास्फाटिकपद्मपत्रबीजाक्षाणामन्यतमेनाक्षमालां कुर्याद्धचायन्वामहस्तोपरि व्यागणयेदि " ति शङ्खस्मृत्या विहिता खलु नलिनाक्षमाला मनोहरा कथङ्कारं त्वयाऽपह्नूयत इत्याशङ्कनीयम् । भूरिपुस्तकपाठेभ्यः स्फाटिकाक्षाणामन्यतमेनाक्षमालां कुर्यादित्यस्यैव पाठस्य पद्मपत्रबीजपदांशवर्जं ननु सम्प्रत्ययात् । अन्ते त्वक्षमालां कुर्यादित्यबाधितासन्दिग्धपदविशेषसमायोगाच्च । न च काष्ठस्यापि तुलस्याः समुपादेयता मालाकारव्यापारे सुमहा । बिल्वकाष्ठस्यापि तथात्वमहस्य दुर्निवारत्वापत्तेः । बिल्वानां पञ्चानां सामान्येन तस्मिन्नितरेषु वा त्रिष्वपि परिशिष्टेषु तथात्वाभावेन युज्यन एवातथात्वाभावस्तुलसीकाष्ठेऽपि स्वन्यायात् । न चापि जम्बीरामलकबिल्वादीनां मालागारपरिणामयोग्यताविरहवत्त्वेऽप्यस्यैव तद्वत्ता तत्साधारण्याभावेन काष्ठे खलु तुलस्या इति साम्प्रतम् । बिल्वत्वावच्छिन्नत्वस्य च मूलस्कन्धशाखापलाशत्वाद्यवच्छिन्नत्वस्य सामयिकतया प्रतिपद्यमानस्याविरूपत्वे मालाकारयोग्यतापरिणामाभावत्वस्याप्यविरूपात् । नो चलेन स्वाध्यगतविलक्षण्यविशेषाभिधायि वचनं किञ्चित्पश्यामः श्रुतीनां वा स्मृतीनामापूर्वेद्रम्यानगानां वा कुत्रचित् । कण्ठगतविकृतिविशेषनिर्माणकतया धारणमस्य मन्यमाने मानीषे तदवयवान्तरावच्छेदेन बिल्वान्तरविकारविशेषोपयोगप्रकारस्या-

रोग्यविभेदजननस्य ताभ्य एवावगम्यमानस्य प्रक्रियाविभेदमापद्यमानस्य च समानयोगक्षेमत्वापत्तेः । न चेष्टापत्तिस्तस्य तस्य तस्मिंस्तस्मिंश्चार्थे इति वाच्यम् । तादृग्रूपप्रतिपत्तेस्तया तया प्रत्यासत्या युक्तत्वेऽपि प्रकृतया किलाधिकारिकप्रक्रियया समन्वयासम्भवात् । यदि वाचो नानारूपाः प्रदर्शयत्यत्रार्थे तदा तासां विपक्षायितास्ताः कुतो न प्रतिसन्दध्याः । न च प्रत्यनुसन्धानमृते सन्धानगोचरसमावेशो नाप्यङ्कित तत्त्वं किञ्चिन्निर्धारयितुम् । यथाहुः "उपायं चिन्तयित्वा तु अपायमपि चिन्तयेदि" ति तीर्थकाराः । इत्थञ्च स्वगतसामञ्जस्याऽनभ्युपगन्तृवाक्यकदम्बापनायकनिराभासवाक्यविभेदगरिमाणमननुविद्यात्मगतमेव गरिमाणं श्रद्धध्यास्तावता भागे भवन्नभागभाविनि भागवतो हन्त भागादवश्याश्रयणीयात्प्रच्यवमानो न प्रभवस्याधातुमीपद्मा वस्तुनस्तत्त्वम् । न चेदं युज्यते विमृश्यैवाहमेवं गृहीतवानस्मीति । धियं तावन्निर्विचारणामाश्रितवतो व्यापारस्योदितात्मनस्ते निरर्थकत्वात् । यदि चेत्साहसमात्रेण सार्थकमेव मन्यसे तर्हि विमृश्यैव भूयो भूयः पर्यायेण प्रतिपत्स्यसे निरात्मकं पुनर्निरर्थकं तदेतत् । विमर्श एव विपक्षपक्षावलम्बी नेष्यते म इति चेदविमृश्यकारीत्वमकर्मण्यमूर्द्धन्य एवेति धिक्त्वां दग्धाङ्गाजलं तत्वकृत्साम्निध्यादित्यभिभवभूमिरास्व त्वमासमन्तात् । अथ चेच्छास्तॄणां नो निर्व्याजकारुण्यमेव दुर्दैवं तावकीनमपनुदेत्तदा विचारणामर्हसि हि प्रमाणभगवतीपर्यादृतां यथायोगं तथा हि । अत्रैवं विचार्यते श्रुत्या किलेयं माला काष्ठस्याभ्यनुज्ञायते उत स्मृत्या प्रतीतिमापन्नयाऽऽहोस्विदितिहासादिवाचाऽथवा शिष्टसमाचारेणेति । नान्त्यः *शिष्टेषु धारणस्यास्य श्रौतस्मार्त्तधर्मानुष्ठायिषु चाधिगताशेषप्रस्तत्स्वेष्वत्यन्तानुपलम्भात्प्रत्युत विगर्हाविषयत्वाच्च परम्परां पूर्वपूर्वामारभ्यैतेषामथावधि । न च तथाविधा एवास्मासु मालामिमां बिभ्राणा आलक्ष्यत इति वाच्यम् । धारणे किलास्या अतद्योग्यतावत्तायातद्योग्यतावत्तायां पुनरतद्धारणस्यासंशयं तज्जातीयेषु वा प्रतीतिविषयत्वात् । एतावता प्रयोजकवत्ताया एवाभावो गम्यमानः कथङ्कारं सत्तां तां प्रतियोगिनो निरूपयेदिति कल्पना किल कृतधियां कार्पण्यं नाधत्ते । न तृतीयः । इतिहासादिवाचां तावत्तद्धारणनिषेधिनीनां भूयसीनामेव तद्विषयिणीभ्यो विशिष्याभिगम्यमानत्वात् । न च तासामाक्रोशो विचालनायाळं केन चिद्दुरावेशवता । वस्तुवृत्तवर्त्तिनावरामर्शिनोऽस्यानपाक्रियायोग्यत्वात् । नापि द्वितीयः । स्मृतिषु तु प्रतीतास्वेतद-

म्यनुज्ञानस्पर्शनासम्प्रत्ययात् । नो खलु मोक्षस्मृतिष्वस्यानुज्ञेत्यवगतिर्वा वास्तवी व्यपगतयावन्मानसौभगानाम् । वस्तुतस्तासां बन्धनस्मृत्यभिख्याया एवान्वर्थकत्वात् । तादृशार्थप्रख्यापनैकमूर्तिमत्यस्तास्तद्भावान्नमुच्यन्ते कथञ्चिद्वा । न च मोक्षस्मृतय इत्युक्तिमात्रत एव भवेयुस्ता मोक्षग्राहिण्यः । बद्धार्थानामेव निन्दितमत्या तथाभिधानादमङ्गले किल वासरे मङ्गलवासरत्वाभिधानवत् । न ह्यभिधानान्यभिधेयार्थवत्त्वाज्ञापनबद्धसन्धान्येवेति नियन्तुं शक्यन्ते । न हि कस्तूरिकोपाभिधानाः खलु कुटुम्बिनस्तत्सौरभभास्वराः समीक्ष्यन्ते । मेचकदौर्गन्ध्यस्यैव निवेशनेषु तेषामनुपलमनुभूयमानत्वात् । तदिदमेतासां वस्तुस्थित्या बन्धनस्मृतिमत्त्वं युक्तमुत्पश्यामः । न वा आदिमः । श्रुतेरेव धारणेऽस्य मृग्यत्वात् ।

धारणे तु रुद्राक्षस्य प्रसिद्धचन्ति श्रुतयः । यथा चाम्नायते " अथ भगवन्तं सनत्कुमारं कात्यायनः पप्रच्छ । अधीहि भगवन् रुद्राक्षोत्पत्तिं धारणविधिं समन्त्रमधिकारिभेदात् । सोऽब्रवीच्छृयतां कात्यायनोत्पत्तिं यां श्रुत्वा परमाप्नोति । कदाचिद्देवा रुद्रमस्तुवन् परस्त्वं परापरस्त्वमाकाशस्त्वं मरुत्त्वमसि त्वमापः क्षितिस्त्वं यज्जातं जायमानं तत्त्वमसि । त्वं पाहि लोकान् सगणान्त्रिशालाँल्लोकस्य पालान् भुवनानि विश्वा । जहीहि दैत्यं त्रिपुरं महान्तं यस्माच्च लोके त्रिपुरान्तकोऽसि । श्रुतेरतो देवतानां प्रतीतान्यस्त्राणि चैव सकलं तत्पिनाकम् । चक्राणि वेदाः परिधिः प्रजापतिर्विष्णुश्शरश्च त्रिपुरस्यान्तकश्च । तदाऽप दृष्ट्वा त्रिपुरामन्तरूपं तेमोराशिं मीलिताक्षः शिवोऽभूत् । दिव्यं गतं वर्षसाहस्रमात्रमुद्धाटनादश्रुबिन्दुः पपात । जातास्तु रुद्राक्षवरस्य वृक्षाः शुभाननाः सर्वकालं फलन्ति । तान्सिद्धभावान्सुकृती समीक्ष्य नरो जायते सर्वपापैर्विमुक्तः । रुदन्ति पापानि विलोकनेन द्वावसानिकर्पोदशुभं प्रयान्ति । शान्त्यादियोगे परमार्थभूषणं रुद्राक्षमेतन्मुनयो वदन्ति । तेषां हि वक्त्राणि चतुर्दशानि वक्त्रे वक्त्रे फलमुग्रं हवेहि । एकं वक्त्रं शिवरूपं प्रशान्तं परात्परं परतत्त्वस्वरूपम् । तद्धारणाद् ब्रह्महत्यां व्यपोह्य परे तत्त्वे प्रैति धीरः शिखायाम् । द्विवक्त्रमेनाच्छिरसि प्रयुक्तं तद्धारणादर्धनारीश्वरत्वम् । व्यपोह्य पापानि परावराणि प्रैति प्रेमाणमर्द्धनारीश्वरोऽपि । त्रिविक्रमः परितः कीर्तितः स्यात्रिमुखानां वा धारणाच्छीलमावान् । तद्धारणान्मस्तके सत्यशीलस आत्मानं शङ्करं साम्यमेति । प्राजापत्यं धारितं मध्यमा-

९८ श्रौतत्वादेव तु देवादिमानवान्तानां रुद्राक्षधारणविधानव्यवस्थापनम् ।

लादेशे धीरैर्गुरुहत्यां व्यपोह्य । शिवं साम्बं शान्तरूपं समन्ताच्चतुर्वक्त्रं ब्रह्मभावं प्रयाति । पञ्चास्यकं पञ्चमुखस्वरूपं सर्वैर्यद्धारितं ब्रह्म विद्धि । पञ्चात्मकं सर्वपापं व्यपोह्य परे तत्त्वे शान्तरूपत्वमेति । षड्वक्त्रमेतन्मुनिभिः प्रयुक्तं गौरीपुत्रं दक्षबाहौ धृतं यत् । लोकान्विश्वान्ब्रह्मरुद्रेन्द्रमुख्यान्प्रीत्या धीरं सर्वपापापहारि । यत्सप्तवक्त्रं सप्तमात्राधिदैवमारोग्यदं कामविवर्धनञ्च । ऋणत्रयं मुनिभिर्गीयमानं ददात्यस्मै कामितार्थान्विचित्रान् । अष्टौ वक्त्राण्यष्टमूर्तेः स्वरूपाण्यष्टौ बन्धान् नाशयेयुः क्रमेण । मन्दाकिन्या धारणाद्देवसूनोः कण्ठधृते शान्ततामेति सत्यम् । नवात्मकं नवशक्त्याधिदैवं वामे हस्ते धारितं यष्टिकोष्ठे । भुक्तिर्मुक्तिर्यत्प्रसादात्सुलभ्या धृत्वा चान्ते शाङ्करं रूपमेति । विश्वात्मकं दोषहरं परं यत् भूतापहं दशवक्त्रं विभाति । धृत्वामुमुक्षुः सततं सत्यवादी परात्परं चित्तशुद्ध्या समेति । एकादशास्यं शिवबीजं परं यद्धृतं शिखायां सततं शान्तिदं स्यात् । फलं लब्ध्वा सर्वयज्ञाग्निजातं रुद्राधिदैवं परमं रूपमेति । गोमेधयज्ञायुतपुण्यदं स्याच्छिरोधृतं द्वादशास्यं महात्मन् । प्रभाकरो लोकपतिः सुरेशः प्रीतात्मा यद्धारकस्य प्रशान्तः । त्रयोदशास्यं परमं पवित्रं स्यात्कामदं सिद्धिविवर्धनञ्च । बाह्वोर्धृतं मानवानां प्रशस्तं भूतापहं कामदेवप्रियं स्यात् । चतुर्दशास्यं शिवनेत्रजातमारोग्यदं शान्तिकरं नराणाम् । सन्दर्शनात्तारयते दिदृक्षून् धृत्वा स्वयं लोकपूतः प्रतिष्ठः । एतेषां नामोच्चारणेन गोप्रदानफलं भवति । दर्शनस्पर्शनाभ्यां तद्द्विगुणं त्रिगुणञ्च स्नानविधिना । स्नात्वा शुचिराग्नेयस्नानं त्रिपुण्ड्रधारणं ब्राह्मं ■ ब्रह्मतेजोविधानं कृत्वैकवक्त्रादिचतुर्दशवक्त्रान्तं शिरसि । ईशानेति कण्ठे । तत्पुरुषेण हृदये । बाह्वोश्चाघोरेण पञ्चभिर्ब्रह्ममन्त्रैर्महामालां धारयेत् । पदे पदे सोऽश्वमेधफलं प्राप्नोति । तानि ह वा एतानि त्रयो वेदा धारयन्ति । तयो विधारयन्नाच्छँसितष्ठन् स्वादन्वदन्स्वसान्मिषन्निमिषन्वसन्सर्वेभ्यः पापेभ्यो विमुक्तो भवति सिद्धोपासनो भूत्वाऽऽत्मनः कृतकृत्यतामश्नुत आत्मनः कृतकृत्यतामश्नुत इत्युपनिषदि,,ति सामवेदे रुद्राक्षोपनिषदो वचोजातम् । ऋजुरक्षरार्थः । वचनैरेतद्गतैरतिविशदमाहात्म्यप्रकाशनैरुद्राक्षाणां धारणमभ्यनुज्ञायते । एतदुपबृंहणरूपा वाचो देवीभागवतस्यैकादशस्कन्धे सदाचारवर्णने तृतीयाध्याये परिगणिताः " स्नानादतर्पणं कृत्वा देवार्षिपितृनो-

८८ एवं रुद्राक्षोपनिषदा तद्धारणफलमहाफलमुपनिषदुपबृंहणभूतदेवीभागवतवाग्भ्यो दर्शयितं सविस्तरम् ।

पक्रम् । शुद्धे वस्त्रे परीधाय जलाद्बहिरुपागतः । विभूतिधारणं कार्यं रुद्राक्षाणाञ्च धारणम् । क्रमयोगेन कर्त्तव्यं सर्वदा जपसाधकैरि"ति । एताभ्यो हि स्नानतर्पणवस्त्रपरीधानविभूतिधारणमिव रुद्राक्षधारणमपि श्रोत्रियाणां कीर्त्तितं भवत्यादरात् । न चेदं धारणविधानं शैवानेवोद्दिश्य संवृत्तं न नो वैष्णवानन्यादृशसमाचारानिति भावितव्यमुपपत्त्याभासवद्भिर्जातु चित् । शैववैष्णवादिसम्प्रदायिगोचरश्रुत्यादिप्रमाणाभाव एव प्रागत्रावधारितो यतो यतो वा ब्राह्मण्याद्यवच्छेदेनैव शैववैष्णवाद्युपद्रवसंस्पर्शाभाववता ऽवगाहनतर्पणादिक्रियाविशेषप्रवाहान्तःपातितया परिकीर्त्तनं धारणस्य रुद्राक्षाणा यथावत् । न चापि शिवविष्ण्वादिदेवतोपासनपरतैव शैववैष्णवादिव्यवहारव्यपदेश्यतायां तन्त्रमिति मन्तव्यम् । एव तर्ह्यग्न्याराधकानामाग्नेयपदव्यपदेश्यताप्रवृत्त्यापत्तिः । नो खल्वग्निहोत्रं सायंप्रातर्जुह्वतो निर्वृत्ताशेषसोमसंस्थाका वाऽऽग्नेया इति साङ्केतिकप्रत्ययभाजोऽजायन्त वा जायन्ते । तत्रैव निर्भरभरा अपि श्रौतक्रियासु ब्राह्मणत्वात्मनो न भिद्यन्ते विशिष्टव्यवहारात्क्वचिदपि वा यतः । एवञ्च शिवविष्ण्वादिदेवताराधनवतामशेषाणामेव ब्रह्मक्षत्रादीनां रुद्राक्षधारणस्य सकलमाङ्गल्यसम्पादकतायां सिद्धावाराधकदेहे तद्धारणदेशास्तज्जन्यं पावित्र्यं तत्कृतमहिमा तदधारणकृतदौर्गत्यमित्यादयो विशेषास्तदुत्तरश्लोकेभ्यो विज्ञातयन्त इत्येवं यावदध्यायपरिसमाप्ति "रुद्राक्षान्कण्ठदेशे दशनपरिमितान्मस्तके विंशतिद्वे षट् षट् कर्णप्रदेशे करयुगलकृते द्वादश द्वादशैव । बाह्वोरिन्दोः कलाभिर्नयनयुगकृते त्वेकमेकं शिखायाम् वक्षस्यष्टादशं यः कलयति शतकं स स्वयं नीलकण्ठ ॥बध्वा स्वर्णेन रुद्राक्षं रजतेनाथ वा मुने । शिखायां धारयेन्नित्यं कर्णयोर्वा समाहितः । यज्ञोपवीते हस्ते वा कण्ठे तुन्देऽथ वा नरः । श्रीमत्पञ्चाक्षरेणैव प्रणवेन तथाऽपि वा । निर्व्याजभक्त्या मेधावी रुद्राक्षं धारयेन्मुदा । रुद्राक्षधारणं साक्षाच्छिवज्ञानस्य साधनम् । रुद्राक्षं यच्छिखायां तत्तारतत्त्वमिति स्मरेत् । कर्णयोरुभयोर्ब्रह्मन् देवं देवीञ्च भावयेत् । यज्ञोपवीते वेदांश्च तथा हस्ते दिशः स्मरेत् । कण्ठे सरस्वतीं देवीं पावकं चापि भावयेत् । सर्वाश्रमाणां वर्णानां रुद्राक्षाणाञ्च धारणम् । कर्त्तव्यं मन्त्रत. प्रोक्तं द्विजानां नान्यवर्णिनाम् । रुद्राक्षधारणाद्रुद्रो भवत्येव न संशयः । पश्यन्नपि निषिद्धांश्च तथा शृण्वन्नपि स्मरन् । जिघ्रन्नपि तथा चाश्नन्प्रलपन्नपि संततम् । कुर्वन्नपि सदागच्छन्विसृजन्नपि मानवः । रुद्राक्षधारणादेव सर्वपापै-

नै लिप्यते । अनेन भुक्तं देवैर्न भुक्तं यत्तु तथा भवेत् । पीतं रुद्रेण तत्पीतं घ्रातं घ्रातं शिवेन तत् । रुद्राक्षधारणे लज्जा येषामस्ति महामुने । तेषान्नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः । रुद्राक्षधारणं दृष्ट्वा परिवादं करोति यः । उत्पत्ती तस्य साङ्कर्यमस्त्येवेति सुनिश्चयः । रुद्राक्षधारणादेव रुद्रो रुद्रत्वमाप्नुयात् । मुनयः सत्यसङ्कल्पा ब्रह्मा ब्रह्मत्वमागतः । रुद्राक्षधारणाच्छ्रेष्ठं न किञ्चिदपि विद्यते । रुद्राक्षधारिणे भक्त्या वस्त्रं धान्यं ददाति यः । सर्वपापविनिर्मुक्तः शिवलोकं स गच्छति । रुद्राक्षधारिणं श्राद्धे भोजयेत विमोदतः । पितृलोकमवाप्नोति नात्र कार्या विचारणा । रुद्राक्षधारिणः पादौ प्रक्षाल्याद्भिः पिबेन्नरः । सर्वपापविनिर्मुक्तः शिवलोके महीयते । हारं वा कटकं वाऽपि सुवर्णं वा द्विजोत्तमः । रुद्राक्षसहितं भक्त्या धारयन्रुद्रतामियात् । रुद्राक्षं केवलं वापि यत्र कुत्र महामते । समन्त्रकं वा मन्त्रेण रहितं भाववर्जितम् । यो वा को वा नरो भक्त्या धारयेल्लज्जयाऽपि वा । सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् । अहो रुद्राक्षमाहात्म्यं मया वक्तुं न शक्यते । तस्मात्सर्वप्रयत्नेन कुर्याद्रुद्राक्षधारणम् "।

१० तत्र रुद्राक्षपूज्यतायां कारणकथनपूर्वकं तेषामद्भुतमाहात्म्यवर्णनम् ।

पुनरपि रुद्राक्षाणां पूज्यातिपूज्यतायां निदानगोचरनारदजिज्ञासया तत्कीर्तनपुरःसरमीश्वरवदनारविन्दात्तदुत्पत्तितद्भिदतद्धारणफलादिरोपादिनिरूपिकाः खल्वनुशासनवाचो विनिर्याता, नारद उवाच " एवंभूतानुभावोऽयं रुद्राक्षो भवताऽनघ । वर्णितो महतां पूज्यः कारणं तत्र किं वद । नारायण उवाच । एवमेव पुरा पृष्टो भगवान्गिरिशः प्रभुः । षण्मुखेन च रुद्रस्तं यदुवाच शृणुष्व तत् । ईश्वर उवाच । शृणु षण्मुख तत्त्वेन कथयामि समासतः । त्रिपुरो नाम दैत्यस्तु पुराऽऽसीत्सर्वदुर्जयः । हतास्तेन सुराः सर्वे ब्रह्मविष्ण्वादिदेवताः । सर्वैस्तु कथिते तस्मिंस्तदाऽहं त्रिपुरं प्रति । अचिन्तयं महाशस्त्रमघोराख्यं मनोहरम् । सर्वदेवमयं दिव्यं ज्वलन्तं घोररूपि यत् । त्रिपुरस्य वधार्थाय देवानां तारणाय च । सर्वविघ्नोपशमनमघोरास्त्रमचिन्तयम् । दिव्यवर्षसहस्रन्तु चक्षुरुन्मीलितं मया । पश्चान्ममाकुलाक्षिभ्यः पतिता जलबिन्दवः । तत्राश्रुबिन्दुतो जाता महारुद्राक्षवृक्षकाः । ममाज्ञया महासेन सर्वेषां हितकाम्यया । बभूवुस्ते च रुद्राक्षा अष्टत्रिंशत्प्रभेदतः । सूर्यनेत्रसमुद्भूताः कपिला द्वादश स्मृताः । सोमनेत्रोत्थिताः श्वेतास्ते षोडशविधाः

क्रमात् । वह्निनेत्रोद्भवाः कृष्णा दशभेदा भवन्ति हि । श्वेतवर्णश्च रुद्राक्षो जातितो ब्राह्म उच्यते । क्षात्रो रक्तस्तथा मिश्रो वैश्यः कृष्णस्तु शूद्रकः । एकवक्त्रः शिवः साक्षाद् ब्रह्महत्यां व्यपोहति । द्विवक्त्रो देवदेव्यौ स्याद् द्विविधं नाशयेदघम् । त्रिवक्त्रस्त्वनलः साक्षात्स्त्रीहत्यां दहति क्षणात् । चतुर्वक्त्रः स्वयं ब्रह्मा नरहत्यां व्यपोहति । पञ्चवक्त्रः स्वयं रुद्रः कालाग्निर्नाम नामतः । अभक्ष्यभक्षणोद्भूतैरगम्यागमनोद्भवैः । मुच्यते सर्वपापैस्तु पञ्चवक्त्रस्य धारणात् । षड्वक्त्रः कार्त्तिकेयस्तु स धार्यो दक्षिणे करे । ब्रह्महत्यादिभिः पापैर्मुच्यते नात्र संशयः । सप्तवक्त्रो महाभागो ह्यनङ्गो नाम नामतः । तद्धारणान्मुच्यते हि स्वर्णस्तेयादिपातकैः । अष्टवक्त्रो महासेनः साक्षाद्देवो विनायकः । अन्नकूटं तूलकूटं स्वर्णकूटं तथैव च । दुष्टान्वयस्त्रियं वाऽथ संस्पृशंश्च गुरुस्त्रियम् । एवमादीनि पापानि हन्ति सर्वाणि धारणात् । विघ्नास्तस्य प्रणश्यन्ति याति चान्ते परं पदम् । भवन्त्येते गुणाः सर्वे ह्यष्टवक्त्रस्य धारणात् । नववक्त्रो भैरवस्तु धारयेद्वामबाहुके । भुक्तिमुक्तिप्रदः प्रोक्तो मम तुल्यबलो भवेत् । भ्रूणहत्यासहस्राणि ब्रह्महत्याशतानि च । सद्यः प्रलयमायान्ति नववक्त्रस्य धारणात् । दशवक्त्रस्तु देवेशः साक्षाद्देवो जनार्दनः । ग्रहाश्चैव पिशाचाश्च वेताला ब्रह्मराक्षसाः । पन्नगाश्चोपशाम्यन्ति दशवक्त्रस्य धारणात् । वक्त्रैकादशरुद्राक्षो रुद्रैकादशकं स्मृतम् । शिखायां धारयेद्यो वै तस्य पुण्यफलं शृणु । अश्वमेधसहस्रस्य वाजपेयशतस्य च । गवां शतसहस्रस्य सम्यग्दत्तस्य यत्फलम् । तत्फलं लभते शीघ्रं वक्त्रैकादशधारणात् । द्वादशास्यस्य रुद्राक्षस्यैव कर्णे तु धारणात् । आदित्यास्तोषिता नित्यं द्वादशास्ये व्यवस्थिताः । गोमेधे चाश्वमेधे च यत्फलं तदवाप्नुयात् । शृङ्गिणां शस्त्रिणां चैव व्याघ्रादीनां भयं न हि । न च व्याधिभयं तस्य नैव चाधिः प्रकीर्त्तितः । न च किञ्चिद्भयं तस्य न च व्याधिः प्रवर्त्तते । न कुतश्चिद्भयं तस्य सुखी चैवेश्वरो भवेत् । हस्त्यश्वमृगमार्जारसर्पमूषकदर्दुरान् । खरांश्च श्वशृगालांश्च हत्वा बहुविधानपि । मुच्यते नात्र सन्देहो वक्त्रद्वादशधारणात् । वक्त्रत्रयोदशो वत्स रुद्राक्षो यदि लभ्यते । कार्त्तिकेयसमो ज्ञेयः सर्वकामार्थसिद्धिदः । रसो रसायनञ्चैव तस्य सर्वं प्रसिद्ध्यति । तस्यैव सर्वयोग्यानि नात्र कार्या विचारणा । मातरं पितरं चैव भ्रातरं वा निहन्ति यः । मुच्यते सर्वपापेभ्यो धारणात्तस्य षण्मुख । चतुर्दशास्यो रुद्राक्षो यदि लभ्येत पुत्रक । धारयेत्सततं मूर्ध्नि तस्य पिण्डः शिवस्य तु । किं मुने बहुनोक्तेन

वर्णनेन पुनः पुनः । पूज्यते सततं देवैः प्राप्यते च परा गतिः । रुद्राक्ष एकः शिरसा धार्यो भक्त्या द्विजोत्तमैः । षड्विंशद्भिः शिरोमाला पञ्चाशद्धृदयेन तु । कक्षाक्षैर्बाहुवलये अर्काक्षैर्मणिबन्धनम् । अष्टोत्तरशतेनापि पञ्चाशद्भिः षडानन । अथ वा सप्तविंशत्या कृत्वा रुद्राक्षमालिकाम् । धारणाद्वा जपाद्वाऽपि ह्यनन्तं फलमश्नुते । अष्टोत्तरशतैर्माला रुद्राक्षैर्धार्यते यदि । क्षणे क्षणेऽश्वमेधस्य फलं प्राप्नोति षण्मुख । त्रिसप्तकुलमुद्धृत्य शिवलोके महीयत,, इत्यधिगम्यन्ते ॥

९१ ,पुनरप्येषां माहात्म्यधारणफलयोर्निरूपणम् ।

अथापि रूपान्तरेण रुद्राक्षधारणमाहात्म्यं ब्रह्माविष्णिवन्द्राद्या देवता ऋषयो मुनयश्चाशेषा एव भवन्ति रुद्राक्षाणां धारिणो धारणपुण्यातिशयान्मानवा वा देवताभावं सम्भनेरन्नित्येवमादयो विषयविशेषाः "विष्णुः पुच्छं भवेच्चैव भोगमोक्षफलप्रदम् । पञ्चविंशतिभिश्चाक्षैः पञ्चवक्त्रैः सकण्टकैः । रक्तवर्णैः सितैर्मिश्रैः कृतरन्ध्रविदर्भितैः । अक्षसूत्रं प्रकर्तव्यं गोपुच्छवलयाकृति । वक्त्रं वक्त्रेण संयोज्य पुच्छं पुच्छेन योजयेत् । मेरुमूर्ध्वमुखं कुर्यात्तदूर्ध्वं नागपाशकम् । एवं सद्ग्रथितां मालां मन्त्रसिद्धिप्रदायिनीम् । प्रक्षाल्य गन्धतोयेन पञ्चगव्येन चोपरि । ततः शिवाम्भसाऽऽक्षाल्य ततो मन्त्रगणान्न्यसेत् । स्पृष्ट्वा शिवास्त्रमन्त्रेण कवचेनावगुण्ठयेत् । मूलमन्त्रं न्यसेत्पश्चात्पूर्ववत्कारयेत्तथा । सद्योजातादिभिः प्रोक्ष्य यावदष्टोत्तरं शतम् । मूलमन्त्रं समुच्चार्य सिद्धभूमौ निधाय च । तस्योपरि न्यसेत्साम्बं शिवं परमकारणम् । प्रतिष्ठिता भवेन्माला सर्वकामफलप्रदा । यस्य देवस्य यो मन्त्रस्तां तेनैवाभिपूजयेत् । मूर्ध्नि कण्ठेऽथवा कर्णे न्यसेद्वा जपमालिकाम् । रुद्राक्षमालया चैवं जप्तव्यं नियतात्मनः । कण्ठे मूर्ध्नि हृदि प्रान्ते कर्णे बाहुयुगेऽथवा । रुद्राक्षधारणं नित्यं भक्त्या परमया युतः । किमत्र बहुनोक्तेन वर्णनेन पुनः पुनः । रुद्राक्षधारणं नित्यं तस्मादेतत्प्रशस्यते । स्नाने दाने जपे होमे वैश्वदेवे सुरार्चने । प्रायश्चित्ते तथा श्राद्धे दीक्षाकाले विशेषतः । अरुद्राक्षधरो भूत्वा यत्किञ्चित्कर्म वैदिकम् । कुर्वन्विप्रस्तु मोहेन नरके पतति ध्रुवम् । रुद्राक्षं धारयेन्मूर्ध्नि कण्ठे सूत्रे करेऽथवा । सुवर्णमणिसंभिन्नं शुद्धं नान्यैर्धृतं शिवम् । नाशुचिर्धारयेदक्षं सदा भक्त्यैव धारयेत् । रुद्राक्षतरुसम्भूतवातोद्धूततृणान्यपि । पुण्यलोकं गमिष्यन्ति पुनरावृत्तिदुर्लभम् । रुद्राक्षं धारयन्पापं कुर्वन्नपि [illegible] मानवः । सर्वं तरति पाप्मानं जाबालश्रुतिराह हि । पशवो हि च रुद्राक्षधारणाद्यान्ति रुद्रताम् । किमु ये धारयन्ति

स्म नरा रुद्राक्षमालिकाम् । रुद्राक्षः शिरसा ह्येको धार्यो रुद्रपरैः सदा । ध्वंसनं सर्वदुःखानां सर्वपापविमोचनम् । व्याहरन्ति च नामानि ये शम्भोः परमात्मनः । रुद्राक्षालङ्कृता ये च ते वै भागवतोत्तमाः । रुद्राक्षधारणं कार्य्यं सर्वश्रेयोऽभिभिर्नृभिः । कर्णपाशे शिखायाञ्च कण्ठे हस्ते तथोदरे । महादेवश्च विष्णुश्च ब्रह्मा तेषां विभूतयः । देवाश्चान्ये तथा भक्त्या खलु रुद्राक्षधारिणः । गोत्रर्षयश्च सर्वेषां कूटस्था मूलरूपिणः । तेषां वंशप्रसूताश्च मुनयः सकला अपि । श्रौतधर्मपराः शुद्धाः खलु रुद्राक्षधारिण. । श्रद्धा न जायते साक्षाद्वेदशुद्धे विमुक्तिदे । बहूनां जन्मनामन्ते महादेवप्रसादतः । रुद्राक्षधारणे वाञ्छा स्वभावादेव जायते । रुद्राक्षस्य च माहात्म्यं जाबालैरादरेण तु । पठ्यते मुनिभिः सर्वैर्मया पुत्र तथैव च । रुद्राक्षस्य फलं चैव त्रिषु लोकेषु विश्रुतम् । फलस्य दर्शने पुण्यं स्पर्शात्कोटिगुणं भवेत् । शतकोटिगुणं पुण्यं धारणाल्लभते नरः । लक्षकोटिसहस्राणि लक्षकोटिशतानि च । जपाच्च लभते नित्यं नात्र कार्या विचारणा । हस्ते चोरसि कण्ठे च कर्णयोर्मस्तके तथा । रुद्राक्षं धारयेयस्तु स रुद्रो नात्र संशयः । अवध्यः सर्वभूतानां रुद्रवाद्धि चरेद्भुवि । सुराणामसुराणाञ्च वन्दनीयो यथा शिवः । रुद्राक्षधारी सततं वन्दनीयस्तथा नरैः । उच्छिष्टो वा विकर्मस्थो युक्तो वा सर्वपातकैः । मुच्यते सर्वपापेभ्यो रुद्राक्षस्य तु धारणात् । कण्ठे रुद्राक्षमाबध्य श्वापि वा म्रियते यदि । सोऽपि मुक्तिमवाप्नोति किं पुनर्मानुषोऽपि सः । जपध्यानविहीनोऽपि रुद्राक्षं यदि धारयेत् । सर्वपापविनिर्मुक्तः स याति परमां गतिम् । एकं वाऽपि हि रुद्राक्षं कृत्वा यत्नेन धारयेत् । कुलैकविंशतिमुद्धृत्य रुद्रलोके महीयते" इत्यन्तैः किल पद्यैस्तदुत्तराध्याये निरूपिता भवन्ति ॥

पुनरपि तद्धारणेनालौकिकमहिमाऽवबोधकाः प्रश्नोत्तरपुरस्सरम् । ईश्वर[५१] उवाच । "महासेन कुशग्रन्थिपुत्रा जीवादयः परे । रुद्राक्षस्य तु नैकोऽपि कलां नार्हति षोडशीम् । पुरुषाणां यथा विष्णुर्ग्रहाणाञ्च यथा रविः । नदीनान्तु यथा गङ्गा मुनीनां कश्यपो यथा । उच्चैःश्रवा यथाऽश्वानां देवानामीश्वरो यथा । देवीनान्तु यथा गौरी तद्वच्छ्रेष्ठमिदं भवेत् । नातः परतरं स्तोत्रं नातः परतरं व्रतम् । अक्षय्येषु च दानेषु रुद्राक्षन्तु विशिष्यते । शिवभक्ताय शान्ताय दद्याद्रुद्राक्षमुत्तमम् । तस्य पुण्यफलस्यान्तं न चाहं वक्तुमुत्सहे । पुनः रुद्राक्षकण्ठाय यस्त्वन्नं सम्प्रयच्छति । त्रिःसप्तकुलमुद्धृत्य रुद्रलोकं स गच्छति ।

[५१] पुनरप्येतदेव ।

यस्य भाले विभूतिर्न नाङ्गे रुद्राक्षधारणम् । न शम्भोर्भवने पूजा स विप्र श्वपचाधमः । खादन्मांसं पिबन्मद्यं सङ्गच्छन्नन्त्यजानपि । पातकेभ्यो विमुच्येत रुद्राक्षे शिरसि स्थिते । सर्वयज्ञतपोदानवेदाभ्यासैश्च यत्फलम् । तत्फलं लभते सद्यो रुद्राक्षस्य तु धारणात् । वेदैश्चतुर्भिर्यत्पुण्यं पुराणपठनेन च । यत्तीर्थसेवनेनैव सर्वविद्यादिभिस्तथा । तत्पुण्यं लभते सद्यो रुद्राक्षस्य तु धारणात् । प्रयाणकाले रुद्राक्षं बन्धयित्वा म्रियेद्यदि । स रुद्रत्वमवाप्नोति पुनर्जन्म न विद्यते । रुद्राक्षं धारयेत्कण्ठे बाह्वोर्वा म्रियते यदि । कुलैकविंशमुत्तार्य रुद्रलोके वसेन्नरः । ब्राह्मणो वाऽपि चाण्डालो निर्गुणः सगुणोऽपि च । भस्मरुद्राक्षधारी यः स देवत्वं शिवं व्रजेत् । शुचिर्वाऽप्यशुचिर्वाऽपि तथाऽभक्ष्यस्य भक्षक । म्लेच्छो वाऽप्यथ चाण्डालो युतो वा सर्वपातकैः । रुद्राक्षधारणादेव स रुद्रो नात्र संशय । शिरसा धारिते कोटिः कर्णयोर्दशकोटय । शतकोटिर्गले बद्धो मूर्ध्नि कोटिसहस्रकम् । अयुतं चोपवीते तु लक्षकोटिर्भुजे स्थिते । मणिबन्धे तु रुद्राक्षो मोक्षसाधनकः परः । रुद्राक्षधारको भूत्वा यत्किञ्चित्कर्म वैदिकम् । कुर्वन्विप्रः सदा भक्त्या महदाप्नोति तत्फलम् । रुद्राक्षमालिका कण्ठे धारयेद्भक्तिवर्जितः । पापकर्मा तु यो नित्यं स मुक्तः सर्वबन्धनात् । रुद्राक्षार्पितचेता यो रुद्राक्षस्तेन वैधृतः । असौ माहेश्वरो लोके नमस्य स तु लिङ्गवदि''त्येवमादयो वाक्यनिकरास्तदुत्तरताध्याये विद्योतन्ते । एवजानीयान्युपबृंहणवचनान्युपलभ्यन्ते सहस्रश कूर्मपाद्मशैववैष्णवादिपुराणपरदैवतेषु चेतिहासभारतादिषु । न तावदेतेषां वचनानीवाम्नायार्थसम्भराणि वचांसि तु काष्ठमालाधारणार्थानि क्वचिदप्यभिमतानि भवन्ति कृष्णद्वैपायनाचार्याणाम् । काष्ठेतरसामान्यात्काष्ठस्यापि तुलस्या बिल्वानि वा फलानि तेषां गृह्यमाणान्यपि परिह्रियन्त एव काष्ठानि तेषाम् । उपादीयमानान्यपि कमलकुसुमादीनि न तन्मालिका उपादीयन्ते । समेव्यमानान्यपि शमीपत्राणि न तत्काष्ठचय परिसेव्यते । न च

१२ एतत्प्रसङ्गात्काष्ठमालाया अनावश्यकत्वाप्रयोजकत्वयोर्व्यवस्थापनम् ।

शमीसमिद्भिराहुतयो दीयमाना गम्यन्त इति वक्तव्यम् । समिधामधिकारे परिपठितानां तावत्तासां मालाधारणाधिकारे निर्मानत्वात् । न वा मालामधिकरोति तुलस्याः श्रुतेर्गीर्वा स्मृतेरिति पराहतं प्रागेव । अमी हि सम्प्रदायिनो मौनमेव मालामिमामास्मसेवकानाम विद्याविचारहीनवाणिज्यादिजीवनान्सस्त्रीकान्भावयमाना अविभ्राणान्तामेतान् वेदवेदाङ्गादिविद्याविशारदानपि ब्रह्मण्यानपवित्रतया ग्राहयन्तो

वैरं पुनः पुनरं नेत्थः प्रयोजयन्तः कृतकृत्यतामिन्द्रियारामा आत्मनो मन्य-
न्ते । परेतेन स्वपथेनैव जीवन्तो भवितारो निरयवर्त्मानः । दुर्मार्गोपदेशपूर्वहत्वा-
दनभिज्ञमानत्वात् । यत्र हि पवित्राणामधिकारे काष्ठमाला न व्याहृता तामेतां कथ-
ङ्कारं बिभृयुर्नेता नः शुद्धिकामाः । पवित्राणि तु "जपस्तपो होम उपवासो दान-
मुपनिषदो वेदान्ताः सर्वच्छन्दःसु संहिता मधून्यघमर्षणमथर्वशिरो रुद्राः पुरुषसूक्तं
राजनरौहिणे सामनी बृहद्रथन्तरे पुरुषगतिर्महानाम्न्यो महावैराजं महादिवाकीर्त्यं
ज्येष्ठसाम्नामन्यतमद्बहिष्पवमानं कूष्माण्डानि पावमान्यः सावित्री चेति पावनानि ।
पवित्रं वा आपः । पवित्रं वै दर्भा" इति श्रुतिस्मृतयो ज्ञापयन्ति । नेह वाऽन्यत्र
पवित्राधिकारे काष्ठस्यास्त्यनुप्रवेशः । दाहकर्मण्येव तेषां नियतोपयोगित्वात् ।
नह्युदितवाक्येऽनुदाहृतमपि यज्ञोपवीतं ध्रियमाणमानुभविकं भवतीत्युपपद्यते ।
"यज्ञोपवीत्येवाधीयीत । निवीतं मनुष्याणां प्राचीनावीतं संवीतमि" त्यादिश्रुतिभि-
रेव गीयमानत्वाद्यज्ञोपवीतस्य । स्मृतिकल्पसूत्राणि तु सन्त्येव स्वप्रकरण इति
केन्वनेन सम्बन्धो यज्ञोपवीतेन च श्रौततरेण काष्ठधारणस्य जघन्यतमजातीयसे-
व्यमानस्य पुनरकिञ्चित्करस्येत्यर्थोऽपि विज्ञायते । न चैवं सति रुद्राक्षधारणम-
प्युदिताऽऽग्रह्यमित्याशङ्कनीयम् । सर्वविवादैर्मालात्वमात्यतायाः संस्थापिताया
अप्रसर्तव्यत्वात् । काष्ठाकारव्याकीर्णतया व्याहृतमपि तत्र तत्र मूलाभावाद्दूरावेद्य-
चेतश्चान्वत्यक्तनद्दुःसाहसं हन्त क्षेत्रकृतनमावानिभावाच्छासनगोचरमेवादिशन्ति
सन्तः सर्वे एव सार्वदिकाः । एतेन सर्व एव काष्ठमालावरा वैष्णवसम्प्रदायमानिनो
निर्मूला वेदितव्याः । कण्ठप्रदेशकर्तृकीकरणप्रयोजनातिरिक्तप्रयोजनाभाव आनुभ-
विको मन्दात्मनामपि विचारेणावधार्यमेव ॥

न्धस्य बादरायणसम्बन्धागितत्वात् । एवञ्च शब्दतो वाऽर्थत ऋगेषा पांसुलाभिमामर्थव्यक्तिमस्पृशन्ती स्तवमेव वृत्रघ्नो विधत्ते तथाहि " तिग्ममायुधं मरुतामनीकं कस्त इन्द्र प्रति वज्रं दधर्ष । अनायुधासो असुरा अदेवाश्चक्रेण ता अपवप ऋजीषिन् । हे इन्द्र ते तव स्वभूतं तिग्मं तीक्ष्णमायुधम् । आयुध्यतेऽनेनेत्यायुधं धनुः । तत्र मरुतां त्रयः षष्टिसंख्यानां त्वत्सहायानामनीकं सङ्घन्ते त्वदीयं वज्रञ्च कः को वा देवो मनुष्यो वा प्रतिदधर्ष प्रतिकूलमभिभवति । अभिभावुको नास्तीत्यर्थः । धृष प्रसहने । आधृषाद्वा । धा. पा. २४ इति विभाषित णिच् । तदभावे लिटि रूपम् । अत एवानायुधासो धनुराद्यायुधवर्जिता अदेवा देववर्जिता देवद्विषो येऽसुराः सन्ति हे ऋजीषिन् । अपार्जितोऽभिषुत्यः सोम ऋजीषी तद्वन्निन्द्रं तानसुरांश्चक्रेण चक्रसमानवीर्येण चक्ररूपेण वज्रेण वापवप । अपगताम्कुरु अपनुदेत्यर्थ. ॥

९५ अपार्थदर्शिनो वादिनो दुर्गतिविशेषोपदर्शनं यथावत् ।

एवञ्च विष्णोरेवात्र प्रसक्त्यभावे तदायुधानां प्रसङ्गानवकाशात्तद्ध्यानेन तप्तायसपिण्डिकाकृताङ्कदाहप्रयुक्तात्महत्यायाः सुतरामनवसर एवेति तत्त्वम् । न च देहदाहलक्षणे कर्माणि प्रवृत्तास्ततो विनिवृत्ता यथाक्रमं भगवदाज्ञानुवर्त्तिनो देवास्तदाज्ञाऽतिलङ्घिनश्चासुरा भवन्तीति दुर्वचनं वादिनः फलायावकल्पते । दग्धतनुरयं दहनक्रियाया एव दासो भवन्प्रेतात्मा न जन्मनां सहस्रैर्वा भगवदाज्ञास्वरूपस्य ज्ञातोपपत्स्यते । तदाज्ञास्वरूपाज्ञानतमोवर्धनानुकूलायसपिण्डिकाकैङ्कर्यस्यैवानेन परं स्वीकृतत्वात् । देवासुरपदाभ्यां प्रकृते प्रेतात्मनः श्रुतिघटकाभ्यामावेशवशंवदकुत्सितार्थस्यानवकाश एवादावासमन्तात् । नो खलु दग्धाङ्गा देवपदव्यपदेश्या भवेयुर्न वा तदङ्कनहीना असुरपदव्यपदेश्याः कथञ्चित् । तत्त्वतस्तत्पदाभ्यामधिगम्यमानयोर्देवासुरयोरिन्द्रादिवृत्राद्योर्विख्यातत्वेऽन्यथा नयनमुन्मादसन्तानमेव वक्तुर्व्यक्तीकरोत्यत्युच्चैः । न ह्यनन्तताक्ष्यविष्वक्सेनादीनामङ्कितगात्रता स्वप्नेऽपि सम्भाव्यते । ज्ञानातिशयपर्य्यङ्कितात्मप्रभावाणां तावत्तेषा प्रेतस्वरूपापादकतप्ताङ्कनक्रियागन्धस्य क्वचिदप्यवस्थायामात्मनःकुहरसमारोहानर्हत्वात् । न हि पुन "देवपथ" इति पदं दग्धगात्राभ्यूहितदेवानां भागवताग्रेसराणां पन्थानमभिधत्ते । दग्धतनूनां हन्त तेषां प्रेताग्रेसराणाञ्चात्महननफलभागिनां पिशाचपथस्यैव स्वरूपानुरूपत्वात् । यद्येतादृशोपैशाचिकयोनीनेवोत्तेनयेयुर्भगवन्तोऽपि भाष्यभागे तदा प्रेताग्रयायिन एतस्मै

त एत उपादेयव्याख्याना उपजायेरन्कथञ्चित् । व्याख्याने तु तस्मिन्नुत्तमवर्गीयतया दिवि देवाधिकृताधिकाराः सन्तः कुतस्ते तत्सकाशात्प्रत्येक्षात्मनस्तद्व्याख्यापरामृतमहास्वादः सम्प्रतिपन्नस्वरूपसत्तावानुपतिष्ठेत् । गरलरसास्वादवासनापरिवासितानां तु गरलधारापारम्पर्या एवात्मानुगुण्येनाभिनन्दनभूमित्वादिति तावतैव मोदितव्यम् । प्राग्वदेव नीरसचर्चा पुनः पौनरुक्त्यादिदूषणगणग्रस्ता लेखनबाहुल्यभियाऽत्राप्युपेक्ष्यते । पूतिगन्धमुपर्य्युपर्युपाददानस्यापि निहीनगतिमत्तया परिलक्ष्यमाणत्वात् । यद्यप्येवं तथापि व्यलीकोदाहरणैर्भूयोभिर्देवपितृपदे श्रुतिवर्त्तिनी वैष्णवम्मन्यदग्धाङ्गपरतया नेतुं प्रयतते कृतायासातिशयोऽयं दग्धतनुस्तथाऽपि "तपः श्रुतञ्च योनिश्चे" त्यादिमहाभाष्यवचांस्युदाहरणभावायाकृष्टतराणि नोदाहरणाभासभावायापि प्रभवेयुः । नापि "ये वै के चास्माल्लोकात्प्रयन्ती" त्यादीनि प्रत्युदाहरणभावाय प्रकल्प्यन्ते न वा "वसुरुद्रादितिसुता" इत्यादीनि प्रकृतार्थपरिकराभासमंशीलनाय चाऽलं कथञ्चिन् । द्वयोरप्येतयोः पयोरसमदभ्युदितकल्पसूत्रोन्नीतामलाम्नायार्थानुष्ठायिनामेव देहदाहादिपांसुलव्यापारविदूरगानामधिकाराधिकृततया प्रेतात्मनाममीषामनुव्यवहारं थूत्कारकारित्वात्समन्ततः । अमीषान्तु पयोदितपदद्वयीनिरधिकारतया पदङ्कित तृतीयमेवावलक्षं प्रतिपद्यते । तथा चाम्नायते । "अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्त्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानमि" ति । ननु "कर्मणा पितृलोको विद्यया देवलोक" इति बृहदारण्यकश्रुत्या कर्मविद्याविभूतियोगानां नो न तृतीयस्थानमात्रत्वमिति नैष दोषः । तप्ताङ्कनादितामससम्भारसम्भृतात्मनां वो विद्याकर्मणोर्वा तामसमहामहीरुहफलविभेदमवतया तामसान्तस्थावरभावस्यास्वरूपाननुरूपत्वात् । न ह्यूर्ध्वगत्यां हि यस्येच्छा तस्योर्ध्वं पुण्ड्रमुच्यते । ऊर्ध्वं गत्वा तु

९६ अङ्कितानां देवत्वादिप्राप्तिरित्यादिदुरालापपरीहारपुरस्सरं वादिनः सर्वार्थहानिरेवेति सपरिकरं निरूपणम्।

देवत्वं प्राप्नोतीह न संशय" इतिनारदपुराणवचनतयोदाहृतं वचोऽङ्कनकर्मवतां परमपदप्राप्तिं वा देवत्वप्राप्तिं वाऽऽख्यातुं क्षमते । एतदर्थमत्याख्यानबद्धप्रतिज्ञस्य स्वाश्वलायनवचसो "देवलोके रिरंसूनां गायत्री तप उत्तममि" त्यादिकस्य जागरूकत्वात् । न च तपोऽप्येतदस्मास्वस्त्येवेति वाच्यम् । दग्धतनूनां तावद्युष्माकं गायत्र्याद्यनुष्ठानयोग्यताविलोपबाहुल्यमेवाद्यावध्यस्माभिर्निरटङ्कि प्रमाणपटलीमियेनः ।, "तिरोमुडी" "तमल" प्रबन्ध एव वो जघन्यजातीयचाञ्चल्यशालिनि धर्मानुष्ठानयो-

ग्यताया: पर्याप्तत्वात्। न चैकत्र पर्याप्तमन्यत्र सङ्क्रमणायार्हति वस्तु वस्तुवृत्त्या। नियतानियतप्रवृत्त्योरितरेतरस्वरूपसंस्थानपरिबाधात्। एवञ्च देवत्वं तत्र तप्तायसपिण्डिकास्वेव निवसत्यजस्रं प्रेतधर्मसञ्चोदनाधीनसमयातिशयामुना। न हि "अहो ह्येकान्तिनः सर्वान्प्रीणाति भगवान्हरिः। विधिप्रयुक्तान्पूजां च गृह्णाति भगवान्स्वयमि" त्यारभ्य "एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदमि" त्यादयो वाक्यसङ्घाः शान्तिपर्वस्था देहतापं नावबोधयन्ति। तद्ग्राहकपदाभावात्। न च पदोपस्थितिमृते पदार्थप्रतिपत्तिः कुहचिद्वास्तवी। तदवश्यम्भाविताक्षणवाचकतानियमस्यैवोत्सादनात्। "अर्थगत्यर्थः शब्द" इति महाभाष्यवचनव्याकोपापत्तेश्च। तस्यैवेहात्यन्ताऽनृततया "येन देवाः पवित्रेणे" ति श्रुतेरुपबृंहणवचनानां कोऽवाऽवकाशोऽस्त्यलीकभावव्याविद्धानाम्। न ह्यस्या उपवर्णितनिरुक्तनिर्वचनविरोधिव्याख्यानमुपबृंहणैः शक्यते विधातुम्। विनिवेद्यमानं वा तदेतत्प्रागेव निरुक्तनिर्वचनसमालोचनादापातरमणीयम्। तत्त्वतस्त्वयमपार्थः "पवित्रन्त" इति वेदार्थनिरूपणप्रस्ताव एव समूलमुन्मूलितोऽस्त्यत्रैवेति भूयो रोदनं वादिनो नासकृद्विनिवारणमर्हत्यग्रे प्रतिपन्नधियाम्। न हि "चक्रलिङ्गधराः सर्वे समयवृतनिष्ठिताः। चक्रलिङ्गधरो विप्रः प्रतिष्ठां कर्तुमर्हति। तेन प्रतिष्ठितस्तत्र सन्निधत्ते सदा हरिः। गृहस्थः श्रोत्रियो विप्रो नित्यकर्मरतः शुचिः। शान्तश्चक्रधरो दान्तः सद्भक्तो दोषवर्जितः। शास्त्रज्ञः कर्मदक्षश्च प्रतिष्ठां कर्तुमर्हति। सर्वपापविनाशार्हं रथाङ्गस्य तु धारणम्। सर्वकल्याणदमिह पश्चात्संसारनाशनम्। चक्रं शङ्खं समाराध्य गन्धपुष्पादिभिः शुभैः। सुदर्शन नमस्तेऽस्तु पाञ्चजन्य नमोऽस्तु ते। इति मन्त्रं समुच्चार्य नमस्कुर्यात्पुनः पुनः। चक्रञ्च पाञ्चजन्यञ्च तस्मिन्नग्नौ विनिक्षिपेत्। य एतेन विधानेन शङ्खं चक्रं च धारयेत्। त्रिषु लोकेष्वसंदिग्धं मद्भक्त इति गीयत" इति विष्णुतत्त्वसंहितापराशरसंहितानारदीयपद्धतिविहगेन्द्रसंहितादिवचनतयोपदर्शितवचनकूटं नालङ्किल लेशतो वाऽङ्कनकर्म किञ्चित्करतयाऽपि भावयितुं अपित्वकिञ्चित्करतयैव। वर्णितविधया मानसामान्यपरिदूषितमिदं वचोजालं दग्धाङ्किरातारातिमिरेखावकल्पितं यतो यतश्च कल्पान्तेऽपि कार्ष्णायसविकारकृतमेव दहनं बाह्वादौ त्वचञ्च किञ्चिपविशेषवाशिनीं प्रेतधूमदुःसहदुर्गन्धिनीं चाऽऽनिधनं बिभ्राणः शिष्टसमूहे-

१७ शङ्खचक्रादिनिर्वेणाऽऽयसशकलैरेवात्मदेहदाहयतो पुन. प्रेताधारमतामापन्नानां दौरात्म्यस्वरूपोपवर्णनम्।

स्तिरस्क्रियमाणपिशाचाकारतां धारयमाणो जीवन्निरयदशां भुञ्जानश्चावधार्यते
इत्यर्थम् । न खल्वत्र शार्ङ्गं वा चक्रं किञ्चिदस्ति वस्तुसत् न वा वर्तिष्यते ।
अपि तु कार्ष्णायसशकला एव सन्तापितास्तत्र तन्त्रम् । त एवैते एतैः स्वसे-
वकैर्वैष्णवंमानिभिः शङ्खतया च चक्रतया सेव्यमानाः स्वस्वरूपानुरूपमेव फलं भू-
तप्रेतादिजननार्हं प्रयच्छेयुः । शकलाः किलैते स्वकाले दर्व्यादिभावमापन्नाः पा-
कादिकरणतामनुभवन्त परोपकारितया परिगीयन्ते । दग्धाः पुनरेतैस्तु प्रेतात्म-
तया विप्रियमेवाचरन्ति प्रतिभत्स्यन्त्येषां सेवका इति सेव्यसेवकयोराकारवैरूप्ये-
ऽपि वर्तनवैरूप्यमप्यप्रतिपन्नमेव प्रतिपद्यते । शङ्खचक्रादीनि हि भगवदायुधान्येव
सन्त्यनन्यलभ्यान्यासुरमानववंशमुखेक्षणागोचराण्यात्यन्तिकविडम्बनाभूमयो न भ-
वेयुर्वा कल्पकल्पान्ते । प्रत्युत विडम्बनाकारिभ्यो हन्तैवंविधेभ्यः कोपायमाना
अमाङ्गल्यकालकालानलमेवैतेभ्यः प्रतिपादयेयुरित्यर्थम् । मा त्वं शार्ङ्गं वा तेजस्त्वा-
क्रमापन्नशकलेष्वाविर्भवेन्मन्त्रसामर्थ्यादिति ब्रूयाः । तत्तेजःप्रादुर्भावप्रत्यायकम-
न्त्राणाममीषाममत्वात् । न च "सुदर्शन महाज्वाल कोटिसूर्यसमप्रभ" इत्यादयो
मन्त्रा एवेति सन्तोष्टव्यम् । प्रागेवैवमादीनां मन्त्रतायाः प्रतारकमानवभावितायाः
पराभूतत्वात् । तदेतत्त्वया सर्वत्रैवाप्रसमर्थ्यमायुष्मता । न ह्याविर्भावयितुर्दौरा-
त्म्योपनीतोत्कण्ठाकुलमाविर्भावमात्मीयं सहन्ते सुदर्शनादयो वस्तुषु तेषु स्वान्य-
थाविर्भावाभावादेव स्वाधिष्ठाने स्वेषां भगवद्देहेऽप्रतिहतवास्तव्यत्वात् । न चापि
शङ्खादीनां छाया वा शकलेषु तेषूपपद्यते । शकलानान्त्वायसानां भगवद्दिव्यदेह-
च्छायाया अपानतमस्त्वे तानेतानधिष्ठाय शङ्खादिच्छायाया अवभासे वा नीचतमस-
माश्रयदूषणगणभागित्वात् । अस्त्येवैवं दुर्दशासहस्रसञ्चरणे त्वचि पुनस्त्रिधा-
तुमालिन्यसमावृतायां ननु मानवानां तयोश्छायाया वा पुनरनुप्रवेशो निरात्मैव
कैमुत्येनोपजायते । वस्तुतस्तु अङ्कनमेतन्मूले प्रतारकजनावकल्पितं संदेहदाह-
लक्षणस्फुटतरचिह्नेन कस्मिंश्चिदप्यङ्गे विन्यासविभेदैरन्यादृशं पन्थानं निरतिशयम-
पि न शक्नुयुः प्रवेष्टुं नोत्सहेरन्ननुष्ठातुं धर्मान्वाऽन्यादृशान् । प्रत्युताङ्कनसा-
मर्थ्यात्प्ररूढदुरवेशवासनाविहङ्गमा महाभागेभ्योऽपि सम्प्रदायवैधर्म्याद् द्रागित्येव
स्पर्धेरन्नयमेवाभ्युपायोऽस्मत्सम्प्रदायस्याभिवृद्धय इत्यादिदुर्भावनाशतेनायं तप्ता-
ङ्कनमार्गः परिचोदितो विषशाखीवावर्द्धते दिने दिने तथाऽपि भ्रमतीनामेवास्मि-
न्प्रवेशो न तु तावन्मतिमतामात्मवत्तया । प्रवृत्तप्रज्ञास्तु जघन्यजातीया अपि

तप्ततनूनमत्या शश्वत्पशुमायानेव जानानाः स्थित्या पुनः शृगालप्रेतात्मतया निश्चिन्वानाः प्रसङ्गतस्तिरस्कुर्वाणाश्च राजन्ते साटोपमित्यसावर्थः श्रेयस्कामानां चेतोमञ्चात्नावरोहमभ्यागच्छतु कदाचिद्वा । यदपि बृहद्ब्रह्मसंहितागततया "ऽनायुधासो असुरा" इत्यारभ्य "आसुरो विद्यते भावो यावदेषां द्विजन्मनां, न तावदधिकारोऽस्ति ममाराधनकर्मणी" ति मध्ये पुनः परामृश्यान्ते "श्रद्धया धारयिष्यन्ति मम चक्रं सुदर्शनम् । ज्ञात्वा सर्वपदार्थेषु शुद्धिस्तेषां पदे पदे । शालायां भाजने वस्त्रे ग्रहोपकरणेषु च । चमसोलूखले पीठे पक्वान्ने चक्रमुछिखेदि" त्यादिकं वचनजालमपाङ्क्तेयजनविशेषसञ्जल्पितं तदपि "पतितं चक्रलिङ्गाद्यं चक्राङ्कितमथापि वा । वाङ्मात्रेणापि नार्चेत पाखण्डाचारतत्परमि" त्याद्युपदार्शितसिद्धार्थवचोराशिनाऽनुपदं पराहतं वेदितव्यम् । विशेषतस्तु जिह्वोपस्थयोः समस्तमानवादिभ्यो दुस्तरखेदप्रदायितया भगवत्प्राप्तिहेतुभूतयमादिरमानिर्माणैकतया चामन्दप्रमादसन्तानसमाधहत्वेन शतकृत्वस्तयोस्तप्ताङ्कने सर्वानर्थनिवृत्त्या सान्निध्यं भगवतो नारायणस्याञ्जसा प्राप्नुयादेव दग्धाङ्गभक्तः स्वच्छन्दम् । बाह्वोस्त्वल्पतरापराधपात्रत्वेन न तयोर्निगृह्य दहनं कार्यकार्यालक्ष्यते शोषिणी तावपेक्ष्य जिह्वोपस्थौ शेषयोः पुनरेतयोर्नहि दशाविशेषजुषोः । नापि देहाद्बहिर्भाविनां तावच्छालाभाजनवस्त्रगृहोपकरणचमसोलूखलपीठपक्वान्नानामङ्कनेनानापन्नचेतनानां प्रियं किञ्चिदुपजायते । प्रत्युत विप्रियमेव यथावस्थितभोग्यभावसमन्वितानामङ्कनविकारादवगतं सत् भोक्तारो विकृतफलपर्यवसानाः सङ्गम्यन्ते । किञ्चैयमविस्तराविडम्बना वस्तूनामदोषोपहतानां धर्मोपदेशेन दग्धतनुवचसाऽवसीयते ॥

मद्यपयो यन्नाम्ना वाचो विकीर्तितास्त एतेऽत्र दग्धतनवः । किन्तावन्नाम्ना तेषां वचनप्रकल्पयितारोऽर्वाचीना एव वैष्णवम्मन्या निगम्यन्ते । न हि पाञ्चरात्रमभ्युपेयते श्रीमन्नारायणमुखाविर्भूततया कथञ्चिद्वा शास्त्रस्थैः । तत्र खलु भादानां वेदवादपराहतानां हन्त प्रायेणातत्त्वविज्जनमनोव्यामोहापस्मारसम्भाराणां प्रतिप्रकरणमध्यवसीयमानत्वात् । यदि नारायण एवास्य स्यात्प्रणेता तर्हि प्रणयनमेतन्मन्वादीनामिवाप्रतिपन्नप्रमेयग्रामसम्भरमेवासम्भवं स्यात् । आद्रियेत चार्षैरेवाविशेषेण शिष्टगणैः सार्वे

८८ पाञ्चरात्रादिप्रणेता नासीदेव नारायणः अपि त्वाधुनिक एव य' कश्चिदिति स्थिते तस्मिन्वेणाप्यङ्कनसिद्धिविरह इति पर्य्यवधानम् ।

दिकैः । न ते सुतरामुपाददते तदिति किमात्मिकाऽस्य पाञ्चरात्रस्य नारायणकर्तृकता । स्यादेतत्केनचिद्योगेन नारायणनामा कश्चिदाधुनिको दग्धतनुर्वस्तुगत्या तद्वक्तेति । ननु न च ब्रह्मविद्याभागनिरूपणैदम्पर्य्यप्रवृत्तपाञ्चरात्रे हन्तासौ दुःसम्भावना युज्यते । नेत्युच्यते । सम्भावनायाः किलास्या मानदेवतासत्तासामान्यविशेषसत्कारपुरस्कृताया वस्तुसत्या अतथात्वात् । तदिदमुदितानां तत्त्वं वचनानां वेदितव्यम् । एवञ्च यावद्देहदाहादिदुराचारानुवर्तनं यावच्च हरिहरयोरितरेतरभावानुरोधिसमाराधनसम्प्रत्ययो यावदेव यथोदाहृतकल्पितवाक्यानुसरणं तावदेव प्रत्याशा काचिदभ्युदयपारम्पर्या उपादीयते वेदैर्वा वेदविद्भिः । इतरथा तु विष्णोरपि करुणार्णवस्य कारुण्यवैमनस्यातिशयपुरःसरं निरययातनावशवर्त्तितैवाभ्युक्ताङ्कनादिदुर्वर्त्मनामप्रत्यूहेति स्थिते पाञ्चरात्रादितोऽपि तप्ताङ्कनादिकर्माणि दुष्कर्माण्येवेति कृतमेतावता ॥

इति पाञ्चरात्राद्युपकल्पितस्यापि तप्ताङ्कनदुराचारस्य तद्वदेव तिरस्कारः ॥

ननु एवमपि साक्षात्परब्रह्मभूतनारायणोपासनलक्षणमोक्षकारणवेदभागनिरूपणैदम्पर्यप्रवृत्तानां तावद्विशिष्टधर्मशास्त्राणां प्रायस्तप्ताङ्कनकर्मणः प्रतिपादकताऽस्त्येवेति । मैवम् । मोक्षस्तूपासनालक्षणो नास्तीति नापि तया स सेत्स्यतीति ज्ञानैकतन्त्र इति च श्रीमाप्यदुरालापनिराकरणपुरःसरमतिविशदसिद्धान्तमहाधाम्नः

८८ विशिष्टधर्मशास्त्रीयवचनव्याजेनोपस्थापिताया अप्याशङ्कायास्तदप्रामाण्यप्रतिपादनमहिम्ना परीहारः ।

प्रागेवेह प्रतिपादनात् । न हि मन्वत्रिमैत्रावरुणियाज्ञवल्क्यगौतमादिस्मृतिभ्यः स्मृतयो विशिष्टाः कुहस्वित्प्रथन्ते । प्रथमानाः खल्वमूस्तद्भावं बाधमाना एवान्यगनं महीयन्ते । तेन च तथाविधप्रथावतीरेव ताः प्रभवन्त्यमूः संस्थापयितुम् । न हि धर्मशास्त्रस्य सामान्यविशेषभेदाभिन्नता कुतश्चित्प्रमीयते । प्रसङ्गवशवर्तिनस्तत्रत्यास्सर्व एव विषया. सामयिकतया तमेतमसहमानाश्च भेदं स्वकाले स्ववृत्यौत्सुक्यमहिम्ना विशेषतयैवाभिप्रेयन्ते यत. । सामान्यं वा विशेषं ब्रुवाणेन भेदिका तत्सामग्री प्रदर्शनीया स्यात् । समान एव विषये सामान्यविशेषभावो नियतनिरूपणो न विषमे विषये । अत्रापि किमपेक्ष्य सामान्यं किं वाऽपेक्ष्य विशेष इति साहजिका जिज्ञासा । अपेक्षागोचरवस्तुन खल्वभावं किलात्यन्तिकमवसाय ओमिति चेत्तदा स्मृतिविषयसामान्यविशेषोपारूढो दुरावेशो जगामास्तमत्यासन्नतयेत्यत्रापि च्युततरवाद एवासि त्वं साहसिन्नुदिताङ्कोऽपि दग्धाङ्गः ।

मा च कुर्वेवं वचनचेष्टां हरिकिशोर इवास्थाने । जानीहि मनोर्माहात्म्यं विनिवेदयन्तीं श्रुतिं च स्मृतिं "यद्वै किञ्च मनुरवदत्तद्भेषजम् । यः कश्चित्कस्यचिद्धर्मो मनुना परिकीर्तितः । स सर्वोऽभिहितो वेदे सर्वज्ञानमयो मनुरि" ति यथावद्वृद्धसेवया । मनोः सार्वज्ञे च सकलवेदार्थप्रवक्तृत्वे तदत्यन्तासङ्कीर्तिताङ्कनकर्मणस्तदन्वन्यादिस्मृतिकारासंस्पृष्टस्य वेदाद्यैरनभिहिततरस्य शिष्टैर्वा शिष्टाशिक्षावद्भिस्तिरस्क्रियमाणस्य धिक्कार एवोचितो वर्त्तते प्रतिप्रसवम् । न च मनुगौतमादिस्मृतयस्तत्तद्देवतोपासनाविशेषं न निगदन्तीति वास्तवम् । तत्र हि हरिहराद्युपासनानिर्वाहकवाक्यकदम्बस्य "देवार्चनं प्रवक्ष्यामि यदुक्तमृषिभिः पुरा । वैदिकैरेव तन्मन्त्रैर्यस्य एतस्य तैरि" ति । "अर्चयेद्वैदिकैर्मन्त्रैर्नानुग्राहमुपेक्षते । वैदिकोऽनुग्रहस्तस्य वेदश्चित्करणेन तु । ब्रह्माणं वैधसैर्मन्त्रैर्विष्णुं स्वैः शङ्करं स्वकैः । अन्यानपि तथा देवानर्चयेत्स्वीयमन्त्रकैः । मन्त्रन्यासं पुरा कृत्वा स्वदेहे देवतासु च । गायत्र्योङ्कारन्यस्ताङ्गः पूजयेदीशमव्ययम् । न्यस्त्वा तु व्याहृतीः सर्वाः प्रोक्तस्थानक्रमेण तु । ब्रह्मीभूतः शुचिः शान्तो देवयागमुपक्रमेदि" त्येवमाद्यस्य पराशरयाज्ञवल्क्यगौतमाद्युपनिबद्धस्य स्मृतिष्वेव स्वासु विस्पष्टोपलम्भात् । यावता विधानेन श्रौतेन विष्ण्वादिदेवतोपासनानिर्वर्त्तनमभिप्रेतं तदेतत्स्मृतिभिरेताभिरेव गतार्थम् । नातः परतरं स्मृतिव्यपदेशभागाश्रयणीयम् । तदाश्रयस्तु पाखण्डिनामात्मेच्छानुरूपेणापप्रक्रियासंयोजनायैव केवलं क्रियते न तु वस्तुवृत्तसमाश्रयाय । वस्तु तु वेदवचनैरेव प्रयोगनिबन्धपरिष्कृतैरन्यूनानतिरिक्तव्यवस्थाकैश्चकास्ति हि स्तिमिततरम् । तदेवेदमुपाश्रितव्यं निश्चलधर्ममार्गानुरागिभिरिति स्थिते स्मृतिष्वेतासु तप्ताङ्कनकर्मणो निहीनचतुष्पाद्वृत्तस्याभावाच्छब्दतो वाऽर्थतस्तद्विषयविषयिणी दुराशा दूरापास्तैव सहजगत्या तथाऽपि दुर्हृदयाभ्यूहितार्थविभेदस्तद्धामी निराक्रियते वस्तुतत्त्वपरिशुद्धये तथाहि यदस "एताश्चान्याश्च सेवेत दीक्षा विप्रो वने वसन् । विविधाश्चौपनिषदीरात्मसंशुद्धये श्रुतीः । ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः । विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धय" इति श्लोकद्वयीं मनोः षष्ठाध्यायगतामुदाहृत्य "दीक्षा विविधा औपनिषदीः श्रुतीश्चात्मसंसिद्धये

१०० मनुयाज्ञवल्क्यादिधर्मशास्त्रं भवति हि निःशेषधर्मनिर्भासक निखिलदेवतोपासनाप्रमापकं चेति निरूपणेन दग्धाङ्काभ्युपेतकल्पितविशेषशास्त्रवचनतिरस्कारः ।

१०१ वादिना कृतस्य मनुवचनानामर्थस्यापार्थताप्रतिपादनेन तस्यार्थनिरूपणेन च समस्ताभ्युपगतरूक्षोपमर्दनम् ।

सेवेतेति पदपारम्पर्यां सङ्क्षेपतस्तापादिपञ्चसंस्कारादिलक्षणमोक्षान्तरङ्गसाधनपररविद्याङ्गभूतभगवद्धर्मदीक्षास्तदाह्निका उपनिषत्पठिताः श्रीमदष्टाक्षरादिमन्त्रलक्षणापरविद्याश्च मोक्षार्थं ग्राह्यतया विधीयन्त इति महता यत्नेन व्याकारि त्वया तत्तुच्छम् । तापादिद्रुमसंस्काराभिप्रापकशब्दस्यैकतमस्य वा श्लोकयोरमुयोरत्यन्तानुपलम्भात् । नर्ते पदप्रतीतिमर्थप्रत्यय उत्पत्तिमापद्यते शब्दस्थाने पापाभिनिवेशं विनिवेश्य प्रतीतिमापादितोऽर्थः पापात्मैवानुजायते न तु जातु पुण्यात्मा । तस्य तु शुचिशब्दसमवायसञ्जननाधीनत्वात् । प्रकृते तु स्मृत्योरमुयोरयमेवार्थो महर्षिमेधातिथिमारभ्य कुल्लूकभट्टान्तैर्व्याख्यातो "वानप्रस्थ एता दीक्षा एतान्नियमानन्यांश्च वानप्रस्थशास्त्रोक्तानभ्यसेत् । औपनिषदीश्च श्रुतीः उपनिषत्पठितानि ब्रह्मप्रतिपादकवाक्यानि विविधान्यस्यात्मनो ब्रह्मसिद्धये ग्रन्थतोऽर्थतश्चाभ्यसेत् । यस्मादुक्तमृषिभिर्ब्रह्मदर्शिभिः परिव्राजकैर्गृहस्थैश्च वानप्रस्थैर्ब्रह्माद्वैतज्ञानधर्मयोर्वृद्ध्यर्थमुपनिषच्छ्रुतयः सेविता. तस्मादेताः सेवेतेति पूर्वस्यानुवाद,, इति । सकलेतरश्रुतिस्मृतीतिहासपुराणशिष्टाचारसम्मतो नित्यानिरवद्यो ऽध्यवसीयते । स्मृत्योर्ऋषिविप्रब्राह्मणशब्दाः प्रयुक्ताः । त एते ब्राह्मणा ब्रह्मतत्त्वसाक्षात्कारवन्तः परमहंसपरिव्राजकाः प्रसिद्ध्यन्ति । त्वदीया हि त्रिदण्डिनो विष्णोः सेवकास्त्वमिव शिवादिविद्वेषिणो नार्हन्ति ब्रह्मणः प्रसादाय कल्पान्तेऽपि भिन्नमतिकर्दमाः । नापि यूयं वैष्णवम्मन्या ऋषिविप्रब्राह्मणशब्दैः प्रयोगमर्हथ । त्रयाणामप्यमीषा शब्दाना त्वदुक्तरीत्या सामान्यधर्मशास्त्रविषयाब्दतया त्वदादीनामवाचित्वात् । त्वदादेस्तु त्वत्कथनानुगुण्येनैव कल्पितविशेषवैष्णवधर्मशास्त्रानुयायितया स्मृतिभ्यस्तावदेताभ्यो बहिष्कृता व्यर्थात्मानः पर्य्यवस्यथ । तत्त्वतस्तु यत्र कुत्रापि स्मृत्यर्थं वा न व्यज्ञासीर्यदेवं प्रत्यपत्थाः । यद्वा जिह्मगतिर्विपरीतार्थवादितया शिक्षयितव्यस्त्वं यथापराधम् । यदवोचस्त्वमुपनिषत्पठिताः श्रीमदष्टाक्षरादिमन्त्रलक्षणाः परविद्याश्च मोक्षार्थं ग्राह्यतया विधीयन्त इति । तदसत् । नह्यष्टाक्षरमन्त्रः परविद्या । न वा निःश्रेयसाय सन्नियतः । विष्णुदेवताकतया तस्य तावन्मात्रफलदत्वे ज्ञानैकनिगम्यमानकैवल्याफलकत्वात् । न हि देवतागोचरा मन्त्रा. परविद्यायां प्रवेष्टुमीशते । निर्विशेषब्रह्मात्मैकत्वप्रतिपत्तिलक्षणाखण्डार्थधीरेवाञ्चितमहिमावभासिनी यतः । अन्यथा पञ्चाक्षरीपुरोगमा मन्त्रार्थवादेतिहासकल्पसूत्रादिप्रमाणनिचयैर्महीकृताः

"किं जप्येनैवामृतत्वमश्नुते ब्रूही" ति प्रश्नं ब्रह्मविदां प्रस्तुत्य "स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति एतानि ह वा अमृतस्य नामधेयानि भवन्ति । एतैर्ह वाऽमृतो भवती" त्युत्तरवचनं याज्ञवल्क्यवक्त्राम्बुजाताग्निर्यातं जाबालोपनिषद्याम्नातं सत्कैवल्यान्तरङ्गहेतुभूतनिर्विशेषधीजननास्तावच्छतरुद्रीयाश्च मन्त्रा व्याकुप्येयुः। न चैते शिवदेवताकास्तथा विधातुं नालमिति शक्योप्याख्यातुम् । विष्णुदेवताकानां तेषामष्टाक्षरादीनामपि तथात्वापत्तेरप्रत्यूहात् । एवमन्यासामपि देवतानां समापादितैवंविधापादना एव सन्तो मन्त्रास्त्वदभिप्रेतं निर्भिन्दन्तीति भव त्वं तूष्णीमासमन्तात् । वस्तुतस्तूदितोपनिषद्वचनाभिसन्धिरनपायो निरपायं स्वार्थं सफलीकरोत्येवेति सन्तुष्येः । मा स्मगमः स्ववैमनस्यं सिद्धेऽर्थे जातु चित् । सति चैवं पशुप्रायसमाचाराहाणि कर्माण्यङ्कनादीनि वैदिकविज्ञानकर्मसन्निधाने साद्गुण्यगन्धमप्यविजानन्ति वैगुण्यदुर्गन्धधारामेव सर्वेषां खलु क्रियायामापादयन्तीत्यसकृदुपवर्णितवचनानिचयैर्विजानन्तु विद्वांसः । यदपि "शुचित्वं नियतं तस्य यो बिभर्त्यायुधानि मे । सुदर्शनाग्निना तप्त्वा शरीरं यद्विशोध्यत,, इति भारद्वाजीयादिग्योदाहृतं वचनं तदपि तन्नाम्ना स्थापितमात्रं न तु तदीयम् । किन्त्वङ्कितमननाश्पितमेवेति पराहतं प्रागिहाप्यवधेयम् ॥

यत्तु "ततो धर्माणि धारयन् विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पश,, इत्यर्धर्चमुदाहरता 'धर्माणी' ति पदं पुनर्दिव्यायुधलाञ्छनादिरूपाणीति विवृण्वताऽऽत्मच्छलनं निरदेशि तदेतदस्त्येव ताडनविशेषभाजनं यथावत् । कृत्स्नप्रमाणधिक्क्रियागोचरत्वादायुधलाञ्छनरूपस्यार्थस्यास्य सर्वशः । इह हि 'धर्माणि' पदमग्निहोत्रादीनेव धर्मानभिधत्ते । एवमेव कल्पसूत्रप्रणेतृनिर्धारितत्वात् । प्रकरणमप्यन्यान्यविषयं नास्त्येव 'यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्,, त्यत्र "धर्माणि,, पदमेवमर्थनया "चोदना" सूत्रे विवृतत्वाच्चाप्यकृद्भिः । यद्यप्यनुष्ठेयसामान्यविषयोऽवगम्यते धर्मशब्दस्तथाऽपि प्रकृतेऽनुष्ठेयविशेषविषयोऽयं "धर्माणि,, शब्दः प्रकरणगतवाक्यपौर्वापर्यपर्यालोचनया वस्त्वन्तरं न ब्रूते कथमपि वा । ऋच्येतस्यां वा पूर्वार्धे "त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्य,, इत्येतद्विविक्रमावतारधारिणो भुवनत्रयीपादसङ्क्रमणमव्याहतमभिदधत्याम्येनालौकिकावदरूपधरत्वादिनि

१०२ "ततो धर्माणी" ति मन्त्रवर्णव्याजेन तप्ताङ्कन प्रमापयतो वादिनोऽपार्थतरमन्ताडनेन सदर्थप्रत्यवभासनेन च तत्राङ्कनान्यथाकारप्रदर्शनम् ।

कर्माण्युत्तरार्द्धेनाभिधीयन्ते यथायोगं न तु स्तुतिपूजादीनि । एतैस्तु नानुमोद्यते विष्णुः स्वयमन्येषामेवाराधकाना कृत्यत्वात् । न हि सेवककृत्यं सेव्ये स्वीयतयाऽन्वेति । कृत्यं हि स्वं स्वं तयोः स्वात्मानमेव गोचरीकरोति यतः । न च तप्तलाञ्छनधरा ननु मानवाः प्रेतात्मानो यथोक्तान्यन्यानि च जगत्पालनादीनि कर्माणि विष्णोः साक्षात्कर्तुमनुष्ठातुं वा शक्नुयुः । न हि विष्णौ विराजतां तावद्धर्माणामपरिमितानामेकतमं वाऽनुपादित्सता सर्वथैवाप्रसक्तमविद्यमानं तप्तलाञ्छनमधर्मभूतं तत्सम्बन्धितया धारितुं शक्यते मानवयोनिना । न हि लोके धर्मशब्दं शृण्वन्व्युत्पन्नस्तप्तलाञ्छनमवगच्छेदभ्रान्तो वा ऽनभिज्ञः । "धर्मिष्ठमानय । धर्मिष्ठं पृच्छस्व । धर्मिष्ठं सेवस्वे" ति वाक्यश्रवणसमनन्तरमनधिगतार्थगोचरा मतिरुत्पद्यमाना इष्टापूर्तादिमन्तं पुनरुपासितसत्यादिवृतमेव पुरुषपुङ्गवं गोचरीकरोत्यान्जस्येन । तदुत्तरं तथाविधमेवानयन्ति च पृच्छन्त्यसंशयं सेवन्ते प्रेक्षावन्तः । न मनागपि तप्ततनुमानयेयुः पृच्छेयुरुपसेवेरन् भ्रान्ततरा वा प्रतिपत्तारः । उपस्थितेरेवास्या लोकप्रत्ययाविषयत्वात्खपुष्पगोचरवदप्रामाणिकत्वाच्च । अत एव "धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति । धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ती" ति श्रुतिस्तैत्तिरीययाज्ञिकोपानिषद्गता इष्टापूर्तसत्याद्यात्मानमेव धर्मपदाभिधेयतया ख्यापयन्ती तद्वन्तमेव धर्मिष्ठतया प्रत्याययति न तु जातु पापजन्मानमायसशकलविदग्धदेहावयवं भगवती । एतेन न कथञ्चिदप्यधर्मात्प्रयापितया तिरस्क्रियमाणस्तप्ततनुर्धर्मादिपदाभिधेयव्यवहारार्हस्स्वप्ने वा युज्यत इतिस्थिते देहदाहलक्षणपशुधर्मासंस्पर्शी हि प्रकरणभेदोऽयं भगवद्वामनापरनामात्रिविक्रममहिमानमवबोधयन् "वामनो ह विष्णुरास" इत्यादिशतपथाम्नानानुगृहीतो वरीवर्तीति यास्कव्याख्याना "इदं विष्णुर्विचक्रम" इतिपूर्वर्गोचरादवेगम्यते । तथाहि । "यदिदं किञ्च तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधा भावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूढमस्य पांसुरेऽप्यायनेऽन्तरिक्षे पदं न दृश्यत इति पांसवः पादैः सूयन्त इति वा पन्नाः शेरत इति वा पंसनीया भवन्तीति वे" ति । अत्र "पृथिव्यामन्तरिक्षेदिवी," ति पदत्रयी हि भूर्भुवःस्वर्लोकानामाक्रमणमात्मदेहेनावगमयति त्रिविक्रमस्य । तत्प्रतिकृतिपदतुल्यतया "समारोहणे विष्णुपदे गयशिरसी,, ति पदत्रयं गयादिस्थ-

लीत्रितयं निग्राह्यस्यवतारानुगतप्रतीतिकृते जगत्यामुत्तरोत्तरम् । तद्व्याख्यान-बललभ्योऽयमर्थः समाश्रीयतां ,यतस्तप्तायसचिह्नानां कोन्वत्रावसरः पैशाचिकयोनीनाम् । प्रागेव शाण्डिल्यवचनतयोपदर्शितानां विशिष्टधर्मशास्त्रीयतया सङ्केतितानाञ्च पराकरणा ."स्वशुपुत्रादिकं सर्वं गृहोपकरणानि ;च । मुद्रयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् । कारयित्वा सुवर्णेन पञ्चायुधगणं हरेः । बध्नीयात्स्कण्ठदेशे तु बालानां सूतिकागृह" इत्यादीन्यपि कुटिलवचांसि पराकृतानि वेदितव्यानि ॥

ननु "विना यज्ञोपवीतेन विना चक्रस्य धारणम् । विना द्रव्येण वै विप्रश्चाण्डालत्वमवाप्नुयात् । विधिना शङ्खचक्रादिधारणं चोर्ध्वपुण्ड्रकम् । उपवीतं शिखाबन्धं विप्रस्य सततं स्मृतम् । चक्रलाञ्छनहीनस्य द्विजत्वं निष्फलं भवेत् । अचक्रधारिणं विप्रं यः श्राद्धे भोजयेन्नरः । रेतोमूत्रपुरीषादीन्स पितृभ्यः प्रयच्छती" त्यादिवचननिचयं पराशरविशिष्टधर्मशास्त्रीयमुपसेवमाना भवामो वयमेव पूतात्मानो महात्मानश्च । नैवम् । स्मृतौ पाराशर्य्यां प्राचीनार्वाचीनानेकवृत्तिपरिशोभितायामुक्तानाममूषामघटकत्वात् । उचितं चैतत्स्मृत्यन्तरासङ्गृहीततदर्थानभिधायिवाक्याघटकत्वमस्यामपि तद्वर्गान्तर्वर्त्तितया स्मृतौ सर्वशः । इतरथा विकृताकारव्यक्तीकारव्यापारमिदं वचनमातमर्यविभेदमत्यासत्या निगृहीतं स्यात् । निगृहीतं चातितरां प्रसन्नसत्या वृत्तिकृद्भिस्तत्र तत्र । न च स्मृतेरेतस्या विशिष्टधर्मशास्त्रमवशिष्यते किञ्चिद्वा । विद्वत्प्रतीत्यविषयत्वात् । न हि बालिशप्रतीत्यास्पदं वस्तु कार्याय प्रभवेत्कस्मै चित् । अकार्यकारित्वादेवासमन्तात् । कार्यकारितावैपरीत्यन्तु दुष्कृतविभेदाधायकचेष्टितशरीरतयाऽध्यवसीयते । "आयसाङ्कनयोगेन तापयेत्त्रिजगात्रकम् । मतिहीनो मनुष्येषु पैशाचीं योनिमाप्नुयात् । आयसाङ्कनयुक्तस्य मनुजत्वे तु निष्फले । द्विजत्वं स कथं विन्देज्जन्मजन्मान्तरेऽपि वा । यस्तं श्राद्धे नियुञ्जानो दैवे वा कर्मणि क्वचित् । श्राद्धादिकन्तु तस्यैतदासुरञ्च भवेद्ध्रुवम् । ते शापित्वा पितृगणाः पातयेयुरसंशयम् । गुणान्तरयुतं वाऽपि तसाङ्कं न स्पृशेच्चरम् । शवादपि निहीनोऽयमसंभाष्यो द्विजन्मनामि" ति कात्यायनवचनान्यप्रावगम्यन्तान्तावत् । एवधाम्नैव तु सन्ततं चक्रमादाय वै द्विजः । उपवीती शिखी विप्रश्चक्रलाञ्छनसंयुतः । उपवीतादिवद्धार्यः श-

१०२ पुनरपि तप्ताङ्कनपरदुर्वाक्यतिरस्कारः ।

चक्रगदादयः । ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं धारयते नरः । द्विजातिरेकनां निश्च विभयादग्निसंयुतम् । चक्रञ्च पाञ्चजन्यञ्च विभयादग्निसंयुतमि”त्यादिवृद्धपराशरयमशङ्खवृद्धमनुविष्णुव्यासादिवचनतयोद्दिष्टताः कृत्रिमवाचस्सहैवैताभिरपाकृता वेदितव्याः । वस्तुत एषां स्मृतिषु तास्वत्यन्ताभावाद्वचनानामनुपादेयतमार्थावगाहित्वाच्च । सनकवचांस्यप्यतद्भावाभावीन्येव तिरस्कारगोचराण्यापतन्ते । ब्रह्मात्मैकत्वपरितुन्दिलत्रैकालिकप्रज्ञाभराणामेव तेषां हेयाकारदेहावभासकृतोपद्रवदातादनिशमपरामृष्टस्वरूपाणां मन्त्रार्थवादेतिहासादौ सङ्कीर्त्यमानत्वात् । तत्त्वतस्तु धारणं यज्ञोपवीतस्य ब्रह्मचारिणमारभ्य हंसपर्यन्तानामेव विहितं भवत्याश्रमिणाम् । न तु ब्रह्मात्मैकत्वविदां महाभागानाञ्च श्रीमत्परमहंसपरिव्राजकानाम् । तेषान्तु कृत्स्नाया अप्याश्रमप्रक्रियाया ज्ञानात्मतया तस्मिन्नेव कृतकृत्यत्वात् । “ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते । अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा । स शिखीत्युच्यते विद्वान् नेतरे केशधारिण” इत्याथर्वणिकाम्नायसर्वस्वं खलु गम्यते यतः । इदमत्र विस्तरशो निरूपितं पुरुषार्थसञ्जीविन्यां च यथासम्भवम् । चक्रधारणं स्वायसतप्ताङ्कनापरपर्य्यायं जघन्यजस्यापि मनुजस्याननुष्ठेयमश्रेयोवहमपुरुषार्थप्रदमिति स्थिते तयोरावेदनं वाक्यावष्टम्भेन वादिनस्तदादिधारणवशवर्त्तिनः कर्मचाण्डालत्वादिदुरुद्धरपरिणामोन्नायकमधिगम्यते । शुचीन्खलु विप्रान्निमन्त्रणामन्त्रणादिभ्यः प्रच्यावयितुं तदौपयिकशङ्काविभेदोपस्थापनेनात्मप्रक्रियासम्मुखीकरणस्य च कृते दुष्कृतिवचनोपन्यसनं प्रकृतमदसीयमवसीयतान्तावत् । इत्यञ्च केनापि स्मृतिवचसा कयाचिदपि वृत्त्या तप्ताङ्कनस्यासिद्धौ तदर्थौ पुनर्योजनां वादिनो निराकुर्वाणाः सघुक्तीरुपदर्शिताः प्रमाणसहभाविनीर्विभावयन्तु सुधीवराः ।

नन्वितिहासवचनानि “ भवतां भ्रमतामत्र विष्णुमंश्रयमुद्रया । विनाशानङ्कृतैव भविष्यति नरः क्वचिदि” त्येवमादीनि विष्णुधर्मवर्त्तिन्यात्मकिङ्करान्प्रति यमोक्तानि चक्राङ्कनं नो निरूपयन्तीति चेत्तत्र । अस्यापि च वचनस्य यथोपन्यस्तदुरितात्मनः कुक्षिम्भरत्वाधापादकतयैव गतार्थत्वात् । अतिपातकमहापातकोपपातकादिवशवर्त्तिनामेव यमाद्याहरणे तेषु स्वाङ्कनस्यासद्रूपानारकर्मविपाकेऽप्यस्याकथनाद्युक्तिरेषाऽपार्थिका पर्यवस्यति । अर्थोऽयमग्राथेनर इत्येतावता भूयो निरूपणेन पराकृतः । किञ्च “द्विजः क्वचिदप्यङ्क

१०४ इतिहास तज्जातीयवचननिराकरणम् ।

क्रमेणैकेन केवलमि"त्यादिना भरद्वाजीयवचनतया सङ्कीर्तनमत्र प्रतिज्ञातेतिहासप्रमाणोपन्यसनाननुवर्त्तनप्रयुक्तव्याघातपराहतं प्रसिध्यति । नेहास्त्यपूर्वता शब्दतो वाऽर्थत इति पराकरणमप्युपावृत्तजातीयमेवानुसन्दध्याः ।

यत्तु "मच्चक्राङ्कितदेहो यो मद्भक्तो भुवि दुर्लभः । नैवाप्नोति यशं भूयोऽप्याज्ञामङ्गकुलेश्वरः । नान्यं देवं नमस्कुर्यान्नान्यं देवं निरीक्षेत । नान्यप्रसादमारोहेन्नान्यदायतनं विशेत् । चक्राङ्कितः सदा तिष्ठेन्मद्भक्तः पाण्डुनन्दने" ति मात्स्यीयतया च यमकृष्णार्जुनसंवादात्मकतया विनिवेदितं तदसाधु । आनुशासनिकपर्वान्तर्गततण्ड्युपदिष्टशिवसाहस्रीपर्युपासनावद्धादरस्य हि यदुनन्दनस्यैवंविधवचनप्रवक्तृताऽनुपपत्तेः । न हि तावच्छिवगाराधितवतो देशधर्मजातिधर्मकुलधर्माश्चाम्नायैरविरुद्धानादरमरैराश्रितवतो यथोदितपदपद्धती समुपपद्यते । दुर्वाससो महर्षेः शिष्याग्रयायिनो भूतिरुद्राक्षधारिणश्च हि भगवतो वासुदेवस्य तप्ताङ्कनानुज्ञानाशिवादिदेवतान्तराराधननिरीक्षणायतनप्रवेशनापाकरणलक्षणोच्छास्त्रप्रवृत्तिरयुक्तियुक्ता । अन्यथा ऋषिप्रेषितरासु च प्रजास्वनाद्यविच्छिन्नहरिहरादिदेवताराधनवद्धश्रद्धासूपादेयवचनैतैवासंवादं तस्य सद्यः समुच्छेत । एवञ्च महेशादिदेवतान्तरबहिर्मुखानां पुनर्निमप्रत्ययानामन्याहङ्कयेवासौ कुटिलगतिर्दोषाहानां प्रतिपद्यते । एतेन "चक्रादिधारणं पुंसां परसम्बन्धवेदनम् । पतिव्रतानिमित्तं हि वलयादिविभूषणमि"त्यादिविष्णुतत्त्वसंहितागततयोदाहृताः कुटिला वाचो निरपेक्षवैष्णवजनमहिमावगाहिन्यः पराभूता वेदितव्याः । यमयातनाविदूरवर्त्तितायां करणग्रथशुद्धचतिशयसम्पादितायां कायिकशुद्ध्युपायिकतया मानदानसदाहारादेरेव सन्निधिततया प्रेतरूपापादकतप्ताङ्कनकथायाः पशुप्रायजनस्तोमव्यामोहमात्रजननत्वस्यानुभविकत्वात् । वस्तुतस्तु न तावत्तप्ततनवो मानवा भवन्ति भगवद्भक्ता न वा वैष्णवा न वा सात्विका अपि तु तेभ्य एवैतेभ्यो धर्मेभ्योऽसच्छद्धतरा अनीश्वरकरास्तामसतरा अशुद्धतरा दुर्गतिपरा आसुरकराः वैनाविकमया आपद्यन्ते । नातः परतरं किमप्यस्त्येषा महेशादिदेवताविद्वेषवतां विभूतिबहिर्भूतानां मतमात्सर्यदावताण्डवविडम्बनानां पुनर्विष्णौ वा रूपान्तरेण समर्पितशून्यमात्रसम्मीलितनयनानां सकलास्तिकप्रथाविधाविधानाभ्युदयविहीनानां परिणामसौभग्यं मनागप्याऽप्रतीक्ष्यम् । तदावेदकमानवचनानां ननु सोपपत्तीनां प्रत्यर्थनाप्रदर्शितत्वात् । यदपि भीष्मेण " ब्राह्मणैः क्षत्रियैर्वैश्यैरि " त्यादिना तप्ताङ्कनमभ्यधा-

१०५ इतोऽपि तथाविधोक्तीनामुपमर्दनम् ।

यीति तदप्यनुपपन्नम् । विष्णोर्महिम्न एवात्रभवता तेन प्रतिपादनादङ्कनावगाहित्वस्यैव तत्रात्यन्ताऽनुपलम्भाच्च । यत्पुनरुक्तं " कृतादिषु नरा राजन्कलाविच्छन्ति सम्भवम् । कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित्क्वचिन्महाराज द्राविडेषु च भूरिश " इत्याद्येकादशस्कन्धस्थवचनजातमङ्कनं निर्मोहयतीति तदपि दुरुक्तम् । अङ्कनावेदकवचस एवाभावे तथाविधभावनाया मृषाप्रतीतिविषयत्वात् । यद्यप्यत्र " नारायणपरायणा " इति पदमवगत्य तत्परायणताऽवगतिरुदिताङ्कनानुवर्तनरूपाऽभिप्रेयेत तथाऽपि नारायणगोचरभक्तिध्यानप्रणिधानाद्यनुष्ठानात्मिकैव परायणता साऽवगन्तव्या । न मनागप्यङ्कनावगमः । तदावेदकवर्णावल्या एव पद्येषु तेष्वभावात् । न ह्यात्महत्यासहोदरायमाणदेहदाहप्रक्रियया नारायणो निर्धूतदेहेन्द्रियाद्युपाधिः परितुष्येत् । तोषणं त्वहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाविकृतमेव प्रतिपत्तव्यं प्रमाणतो युक्तितश्चेति स्थिते बालिशजनार्थोऽसावङ्कैरविनिमाद्य उपजायते ।

यत्तु तप्तचक्राद्यङ्कनादिलक्षणाऽस्ति वैष्णवदीक्षेति तस्या आवश्यकत्वमिति च तत्तु समूलमेवानुपपन्नम् । भावनाप्रकर्षवशादुपादीयमानविष्णुदेवताकमन्त्राराधनादेरेवोपासनादशायां विवक्षितत्वात् । न हि विष्णुदीक्षेत्युच्यमाने तप्तकाञ्चनसहभाविनी साऽधिगम्यते । न हि गायस्वेत्यादेशे तत्करणभूतवीणादण्डेन तन्त्र्या वा तुम्बीफलेन गातुर्देहे मुद्रणपुरःसरं गानं कश्चिद्विजानीयात् । न वा तैरेतैर्गाता स्वयमात्मानं मुद्रयेत् । अकार्य्यकारित्वाद्विफलप्रवृत्तिपर्य्यवसायित्वात्प्रत्युत पामरप्रत्यनुसन्धानस्थिरीभावाच्च । इदमेवमङ्कैरपि विज्ञायते । भारद्वाजीयतयोदाहृतवचनानां प्रागेव पराकृतत्वा"ज्जनमेजयेन तच्छ्रुत्वा कृतं सम्यग्यथाविधि । यूयं हि तप्ततनवः सर्वे च चरितव्रताः । शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः । यमध्वं सुहुतैर्यज्ञैः शाश्वतं परमेश्वरमि" त्यादिकमपि तद्गततयोदाहृतं कृत्रिमवाक्यजातमनादेयमासमन्तात् । पैशाचिकव्यवहारस्यास्य जनमेजयादिभी राजर्षिभिर्द्विजोत्तमैश्चादृतत्वकथनस्य प्रमाणकात्स्न्र्यपराहतत्वादत्यर्थम् । संस्काराधिकारे तप्ताङ्कनस्य श्रुतिस्मृतिकल्पसूत्रेतिहासपुराणादावत्यन्तासंदृष्टत्वव्यवस्थापनस्य प्रागेव वृत्तत्वात् । इत्यञ्च नारायणीयोपाख्यानमाख्याति केवलमात्मनो महिमानम् । न मनागपि तप्ताङ्कनायामुरुपेदितं कथञ्चिद्वा । " न चक्राङ्का न वज्राङ्का न पद्माङ्का यतः प्रजा । लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजे" त्यादिना तप्ता-

ङ्कनाद्यासुराचिह्नानां पुनः प्रेतभावपारम्परीसमापादकानां महाभारतेऽप्यतितरामुन्मथितत्वात् । महाभारतस्य मान्यत्वेऽपि पाञ्चरात्रादीनां तावत्तप्ततनुपरम्पराप्रज्ञप्तिपतानां प्रतिष्ठापितमप्रामाण्यं प्रागेव यतो न काश्चिदपि वार्त्तां तत्रत्यां गृह्णाति शिष्टगणो जगत्याम् । तद्गृहीतारो हन्त मानवाः शिष्टविगर्हितपाषण्डाचारचारिण एवेत्यवधेयम् । तथा च " केचिच्चक्राङ्कितास्तत्र प्राणिनः पुण्यदर्शना " इत्यादिकं वचः पुण्डरीकाख्यानगमपि ताद्रूप्येण निरस्तं वेदितव्यम् ।

इति इतिहासेभ्योऽपि तप्ताङ्कनदृष्क्रियातिरस्कारः ।

अथैवम् "ग्निहोत्रं यथानित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तचक्राङ्कधारणमि,, त्यादिपाद्मादिपुराणवाचो नोऽग्निहोत्रवेदाध्ययने इव तप्तचक्राङ्कनमत्यासन्नतया विदधत इति । तन्न । न हि तावदग्निहोत्रवेदाध्ययनाद्यवश्यानुष्ठेयवस्तुव्यवस्थापकमन्त्रब्राह्मणकल्पसूत्रादावङ्कनमेतत्सहपठितम् । यदि ताभ्यामस्य तुल्ययोगिता स्यात्तदधिकारेऽधिकृतमिदमवश्यं स्यात्तप्ताङ्कनविचारणम् । तथा सत्यग्निहोत्रवेदाध्ययनसम्पादयितारस्तत्समानप्रत्यासत्त्याऽत्यादरेणैव तनुमप्यात्मनः प्रदाहयेयुः । नो खल्विदं तत्र सहपठितं न चाऽग्निहोत्रस्य होतारोऽध्येतारो वा वेदानामादिमध्यमान्तावस्थासु वयस्स्वेषामनुतिष्ठन्ति । न वा तानेतान्पितृपाध्यायाऽदयोऽनुग्राहयन्ति । नापि तत्कथां प्रवर्त्तयन्ति । न वा वस्त्वेतदनुभवन्ति भावयन्ति स्मारयन्ति च । प्रत्युत तत्कर्मानुप्रविष्टाननुसन्धाय संस्मर्त्तुमानवान्वित दुष्कृताचारचारितया विगर्हन्ते कृपावन्तोऽपि श्रोत्रियोत्तंसा अथ पुनस्तदेतत्साहसमात्रेण विदधानानात्मश्रेण्या बहिष्कुर्वाणाः संश्रूयन्ते च परिहरन्ते समन्ततः । शूद्रा अप्यात्मनातेरेवंरूपान्दुर्मार्गितया निष्कासयन्तो विनिन्दन्त्याधिगम्यन्ते । सति चैवमलीकार्थप्रणेतृताप्रयुक्तधाष्ट्र्यातिशयः किंमूल इति विचारणायां निर्मूल एवेति वदामो यथावत् । न चोदाहृतपुराणान्तर्हृदयमेतद्वचोजातममूलं यथोपन्यस्तं'पवित्रन्त, इत्यादिमन्त्राणामेव तन्मूलत्वादिति मन्तव्यम् । मन्त्राणाममीषामेतदर्थसंस्पर्शगन्धस्याप्यभावः प्रपञ्चेन भूयसा प्रागेव प्रतिष्ठापितो यतः । एवञ्च पुराणान्तर्हृदयवचननिचयतयोदाह्रियमाणपदपङ्क्तेर्मन्त्रार्थवादेतिहासपुराणराशेरविप्रतिपन्नप्रत्ययार्थीनाम्युपगमभावाभ्युपेतादङ्कनकर्मसुदूरपराहतमध्यवस्यामो स्वयम्भावितवन्तश्च प्रतिप्रकरणमध्यारोपितविकृतवाक्यकदम्बमविप्रतिपन्नप्रमाणगौरवपरिलसहमानविभिरद्वन्द्वम् । यथान्येनात्तैव निष्कृष्टार्थप्रत्ययोरस्तिराञ्जसी

१०६ अविताथें बहुतरदर्शाक्याऽनामुपमर्दनम् ।

तत्त्वविभेदानभिज्ञानां तथाप्यङ्कनदुराग्रहदूषितहृदयेनेतरेतरविजातीयवाक्यनिकरमुपद-र्शितमापातप्रतीत्याऽपि न प्रतिपद्येरन्समीक्षका इति स्थालीपुलाकन्यायेन तान्यपि वाक्यानि निर्वारयिष्यामो यथार्हं, तथा हि । न तावत्पाद्मपुराणोत्तरखण्डे वसिष्ठ-दिलीपसंवादे नारायणब्रह्मनारदसंवादरूपे " सुदर्शनं पाञ्चजन्यं सुवर्णेन प्रकारये-त् । रौप्येण वाऽपि ताम्रेण कांस्येनापि प्रकारयेत् । तस्मिन्नग्नौ क्षिपेच्चक्रं शङ्खं च द्विजसत्तमः । षडक्षरेण जुहुयादाज्यं विंशतिसंख्यया । प्रतप्तं चक्रमादाय मन्त्रेणैवाङ्कयेद् गुरुः । शङ्खेनैवाङ्कनं कुर्याद्बाह्वोर्दक्षिणसव्ययोः । एवमुक्त्वा विधा-तारं देवदेवो हरिः पिता । स्वचक्रेणाङ्कयित्वा तं तस्य मन्त्रं ददौ स्वयम् । सर्व-लोकेश्वरो देवो ब्रह्मा मम पिता प्रभुः । ममापि विधिवन्मन्त्रं प्रददौ मुनिसत्तमाः । तस्माद्यूयं मुनिश्रेष्ठा धारयित्वा सुदर्शनम् । नारायणपदद्वन्द्वं गच्छध्वं शरणं द्वि-जाः । इत्युक्ता मुनयः सर्वे नारदेन सुरर्षिणा । द्वयाधिकारिणो भूत्वा याता वि-ष्णोः परं पदम् । तस्मात्त्वमपि राजर्षे विष्णुसायुज्यमिच्छसि । दीक्षामार्गविधानेन धारयित्वा सुदर्शनम् । नारायणपदद्वन्द्वं तदेकं शरणं व्रज । सर्वलोकेश्वरः सा-क्षाद् ब्रह्मा त्रिभुवनेश्वरः । ममापि नारदस्यापि प्रोक्तवान्मन्त्रमुत्तमम् । शौनकादि-महर्षीणां नैमिषारण्यवासिनाम् । नारदः प्रददौ मन्त्रं प्रपत्तिं शरणागतिम् । एतद् गुह्यतमं राजन्न जानन्ति महर्षयः । देवताश्च न जानन्ति सिद्धसाध्याश्च दानवाः । मत्तश्च प्राप्तवान्मन्त्रं शक्तिपुत्रः पराशरः । इदं रहस्यं परमं लक्ष्मीना-रायणं द्वयम् । राजंस्तत्रापि वक्ष्यामि प्रपत्तिं शरणागतिम् । द्वयात्परतरं मन्त्रं नास्ति सत्यं ब्रवीमि ते " इत्यादिवाक्यसमूहो वाधुदाहृतो वास्तवो मन्यते । नो खलु नारायणो ब्रह्मा नारदो वसिष्ठो दिलीपः शौनकादयो महर्षयो देवताः सिद्ध-साध्या वा दानवाः शक्तिपराशरादयो वाऽर्वाचीना अभ्यासादितसदाचारशिक्षा-श्चातुर्वर्णिकास्तप्ताङ्कनप्रक्रियामाद्रियन्ते स्म समधिगताशेषवेदार्था आम्नानसिद्ध-श्रौतस्मार्तक्रियानुष्ठाननिष्ठागरिष्ठाः करतलबदरमिवात्मतत्त्वं साक्षात्कुर्वाणाश्चराच-रबाह्याभ्यन्तरतत्त्वकोविदा आत्महत्यासमानपाप्मजननीं बीभत्साप्रत्ययविभेदोत्पा-दिनीं प्रेत्याऽऽपादकविशादतररूपोत्पादनप्रपावती चापामरमसभ्यम्वशब्दश्रवणदो-र्मर्ग्यां मुमूर्शं ते । ते खलु वेते वसिष्ठादय आसुरमेनदङ्कनादयं वस्तु क्वचिदप्यात्मस्मृ-तिषु वा प्रयोगसन्दर्भेष्वीषदपि न स्तनयन्ति स्म । न वा शौनकनारदादयो वि-श्रुतप्रयोगागमाहिर्नीषु हन्त स्मृतिषु स्वास्वप्रमर्थ वचमा मन्वेकेनापि कुहचित्

निबन्धः । नापि पुनर्नारायणब्रह्मणोरध्यात्ममाहात्म्यपरिस्फुरत्स्वरूपसन्ताप-
न्तावथ सर्वात्मानावमुमर्थं पिशाचभावावभासिनं प्रतिपादयेतां जनाविभियमेव
सुभृशमभियोजयमानौ । परिशेषादमुष्यार्थस्य निर्मातारो रामानुजीयाद्युपजीव्योप-
जीवकभावावलम्बिन एव मानवा नारायणब्रह्मवसिष्ठशौनकनारदादिकृषिमनामानो
ऽध्यवसीयन्ते । नन्वेते तानेतान्दुर्मार्गालोचनशीलाः केचित्प्रथन्ते पृथिव्यामित्यपि
नापूर्वं यत एते देहदाहा मन्त्रतिलकादिमिषेण वैकुण्ठावाप्तिभगवत्सान्निध्यादिसम-
वाप्तिसर्वबन्धत्यागादिसंप्राप्तिनियमावश्यत्वादिसुकीर्तिपुरोगमानलीकार्थान्प्रग्राहयन्तस्त-
मसेव शार्वरीमज्ञजनतामाच्छादयन्ति च परं व्यामोहयन्ति प्रत्यर्थम् । न ह्यमीभिः
परिकल्पितं मन्त्रजातं दीक्षायै कस्यै चिद्वा मोक्षमार्गविधायिन्या अवकल्पते । गा-
यत्रीपञ्चाक्षर्यष्टाक्षरीद्व्यक्षर्यादिपञ्चदेवतामहामन्त्रदीक्षाया एव व्यष्ट्या वा सम-
ष्ट्या ऽनुष्ठानविधामभिपन्नाया. समाश्रयणीयत्वात् । न त्वमी षडक्षर्यादयस्साङ्केति-
कप्रक्रियया ऽऽबद्धाः श्रेयोविशेषसम्भिन्नदुदितमन्त्रनिरपेक्षाश्च श्रेय.पदमाधातुमी-
शते । तत्पदाधायकप्रधानमन्त्रानुष्ठानादरवैमुख्यादेव फलोदयवैमुख्यममुख्यानामा-
ञ्जसं यतः । एवञ्चैषां मन्त्रा वा तद्ग्राहकप्रकारा वा प्रमाणबाह्या इति स्थिते प्रा-
गिह पुनः पुरुषार्थसञ्जीविन्यां च विस्तरोऽस्या अवसीयताम् । न हि " वासुदे-
वाङ्कनं कुर्यादात्मनो बाहुमूलयोः । सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते । ये
केचिदत्र पुरुषा विष्णुचक्राङ्कमुद्रिताः । तेषां दर्शनमात्रेण महापातकनाशनम् । भू-
तप्रेतपिशाचाश्च डाकिन्यश्च वसुन्धरे । तत्सर्वं प्रशमं याति यत्र चक्राङ्कितो वसे-
दि " ति वाराहपुराणस्थतयोदाहृतवचनजातं वास्तवमुपपद्यते । " भूतप्रेतपिशा-
चादेर्डाकिन्यादेश्च मूर्तिमान् । यत्र कुत्र वसेद्भूम्यां तप्तगात्रो नराधमः । ईक्षणा-
देव तस्याऽऽशु भास्करं समुदीक्षयेत् । अन्यथा पञ्चगव्याद्यैः स्नानमेव समाचरे-
दि " त्यादिब्राह्मपुराणवचनानामुपस्थितत्वात् । न वा " चक्राद्यायुधमन्त्रेण जु-
हुयात्षोडशाहुतीः । विष्णुचक्राङ्कितं गात्रं पवित्रमिति वै श्रुतिः । चक्राङ्किताय
दातव्यं हव्यं कव्यं द्विजोत्तमैरि " त्यादिगारुडीयतयाऽऽवेदितं वचनं सुवचनं
प्रतीयते । गुणिमनविदूषणद्वारेण हव्यकव्यादावात्मोदरपूरणार्थमेव दुरिताकारैश्चा-
ङ्कैर्दुर्वाक्यगणसेवम्भूतस्य शतशो निर्माय तत्र तत्र तदा तदा प्रक्षिप्तत्वात् ।
नापि " दाहयेत्सर्ववर्णानां हरिसालोक्यसिद्धये " इति वा वाग्वास्तवी । "अङ्कि-
तायधामानां साङ्कोरयं स्यात्पिशाचक" इति वाचा पुनः सत्यापगातिवादिन्या वे-

ज्ञाया पराहतत्वात् । नापि पुनः "वसति मनसि यस्य सोऽव्ययात्मा पुरुषवरस्य न तस्य दृष्टिपाते । तव गतिरथवा ममास्ति चक्रप्रतिहतवीर्यबलस्य सोऽन्यलोक्य." इति विष्णुपुराणगततयोपदर्शितवचनार्थो न्याय्य आपद्यते चक्राङ्कितमानवमाहात्म्यपर्यवसायी । विष्णोर्ध्यानैकपर्याप्तस्वान्तस्य निगलितदेहादिवासनस्यैव पुरुषपुङ्गवस्य स्वरूपपर्यवेदने तत्प्रसङ्गात्सुदूरपराहतस्यात्यन्तमेवाविषयीकरणाद्यमभाषस्य च प्रेतपिशाचादिसमानयोगक्षेमवतः । न च 'चक्रप्रतिहते' त्यादिपदसामर्थ्यात्स्वोक्तार्थसिद्धिरिति मन्तव्यम् । स्वाधिकारे ज्ञानस्यैवेह चक्रादविवक्षाविषयत्वात् । पश्वादिवदायसशकलैर्नोद्धादावङ्कनवतां कल्पान्ते वा सुदर्शनसम्बन्धासम्भवाच्च पैशाचिकयोनीनाम् । 'अन्यलोक्य' इत्यस्य देहेन्द्रियातीतात्मलोकैकसाक्षात्करणवानित्येषा अर्थव्यक्तिर्युक्ता । " अनन्याश्चिन्तयन्तो मामि " त्यादिभिः स्मृतिभिरस्मदावेदितार्थस्यैव निरूढत्वात् । न हि सङ्कल्पसार्पप्रतीतिमवस्थाप्यैच्छिककार्यव्युत्पादना क्वचिदपि प्रमाणसहा । इतरथा समुच्छृङ्खलप्रत्ययानामेव सम्प्रसारणे प्रक्रिया किल कृत्स्ना वातपुत्रीया प्रसज्येत ।

यत्तु " स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानामि " तिवचनं वैष्णवेतरनरमात्रमभुत्वमेवात्मनो न तु वैष्णवमानवकर्मकं तदिति तात्पर्यबोधकमुपवर्णितं तन्नु तूष्णीमात्मश्लाघागोचरमेवास्ति वैष्णवमानिनः । तप्ताङ्कनाद्यङ्गक्रियायाः कायिकदोषविशेषमूर्धन्यायाः मुख्यत्वे स्वप्रयोज्यवाचिकमानसिकदोषाविभेदरूपितात्मना तावद्वैष्णवमानिनां यमानुशासनवशवर्तित्वस्य निरूपितप्रमाणशतेभ्योऽबाधात् । न हि " तप्तचक्राङ्कनं विष्णोरेकादश्यामुपोषणमि "ति हारीतगी. स्वपदैकादश्युपवासानृशंस्यसत्सङ्गादेः सकलेतरसूत्पन्नरसमुदाहृतस्यावगाहिनी च स्वार्थे सम्प्रतिपन्ना चक्राङ्कने विप्रतिपत्ता पुनरप्रतिपन्नोपमायते । दर्शितगत्या स्वस्यादच स्वबोध्याया मुहुरङ्कनक्रियायाः प्रमाणशून्यत्वादश्रार्थकारित्वाच्च । वचनानामलीकानामलीकमानससमुपस्थापितानामर्थावगाहित्वेऽप्यलीकार्थभावाद मुच्यन्ते गिर एता हारीतस्य । यथाहुः "रत्नन्तामत्यपि ज्ञानमर्थे शब्दः करोति हीति" । एतेनात्मनादेव.मिथ्यवचिन्ता वाक्किमात्मिकेति निरस्तम् । न चाम्बरीषपरिभवोद्धत दुर्वासनिरसनकृते सुदर्शनदेशोत्थितिरमुद्रियुक्तिरुक्तिकरा । वासुदेवदेशिकचर्या ग्रन्थेन गीयमानस्य हि भगवतो दुर्वासस एकादशरुद्रांशावतरणतया प्रथमानस्य

पराभूतेरेव सुदर्शनसकाशादत्यन्तमनुपपत्तेः । नो खलु यदुनन्दनसमस्तार्थशिक्षा-
वतो दुर्वाससस्तदायुधभूतसुदर्शनतेजोऽभिभावकतायां निरूपयत्नो वाऽऽलक्ष्यते ।
एवञ्चात्महत्याऽपरपर्यायतप्ताङ्कनदुराचारो यमकिङ्करपारवश्यैकनिरूपणो भवन्नेव
निरयगमननिर्णेता सम्मीयते । यच्चा "न्ये च संस्कृतात्मानो विधिनाऽभिहितेन ते ।
यजन्ति त्वन्मयास्त्वां वै बहुमूर्त्त्येकमूर्त्तिकमि"ति दशमस्कन्धेऽक्रूरस्तवे गम्यमानव-
चनघटकपदं हन्त 'संस्कृतात्मान, इति तप्ताङ्कनपरतया न्यवेदयत्तत्तुच्छम् ।
"महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरि"ति गौतमस्मृत्या ब्रह्मज्ञानप्रयोजकस-
त्त्वशुद्ध्यापादकपञ्चमहायज्ञयज्ञान्तराणामेवेह संस्कारपदाभिधेयभूतत्वात् । न मना-
गपि चतुष्पादचक्रकार्ष्णायसतप्तखण्डसन्तापनोपनीतशुद्धिक्रियावन्तस्तथोच्यन्ते । प्रस्तु-
तविषयविशेषणीभावस्याप्राप्तेरपरिहार्यत्वात् । न चेह 'बहुमूर्त्त्येकमूर्त्तिकमि'ति वा-
सुदेवसङ्कर्षणप्रद्युम्नानिरुद्धादिमूर्त्तिद्वारकनारायणमूर्त्तिं तदभिप्रेतां ब्रूते । "एको
विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रीन् लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्व-
भुगव्ययः" इति पैप्पलादश्रुत्या त्रैलोक्यस्य भगवन्मूर्त्तिमत्त्वावधारणेन वासुदेवादि-
पारिभाषिकमूर्त्त्युत्प्रेक्षया भगवदाकारसङ्कोचचेष्टाविधानदौरात्म्यप्रज्ञापकत्वात् ।
दुर्नयेन मतानेन वैष्णवम्मन्येन नारायणस्वरूपविडम्बनं किञ्चिन्न विधीयेतेत्याऽऽस्त-
नास्तिक्यम् । यदुक्तं "पुरेषु पुण्योपवनाद्रिकुञ्जेष्वपङ्कतोयेषु सरित्सरस्सु । अ-
नन्तलिङ्गैः समलङ्कृतेषु चचार तीर्थायतनेष्वनन्यः" इत्यादितृतीयस्कन्धवर्त्तिवि-
दुरतीर्थयात्राप्रकरणगतवचने'ष्वनन्तलिङ्गै' रित्यादिपदानां सुदर्शनादिदिव्यायुधचि-
ह्नानीति तदुरुक्तम् । पुरोपवनाद्रिकुञ्जतोयसरित्सरस्सु किल लिङ्गानां पुनः प्र-
तीतानामितोऽन्यानामेव सुमहत्त्वात्तथाहि । पुरलिङ्गानि हि चतुरङ्गबलादीनि पा-
ण्डुराभ्रनिभानि पुनर्हर्म्याणि समस्तसम्पत्समृद्धान्यन्यान्युद्यानादीनि गम्यन्ते । उ-
पवनलिङ्गानि नानाविधफलपलाशकुसुमसौरभादीनि । अद्रिलिङ्गान्यैकान्त्यगुहातल-
मृगेन्द्रादिसञ्चारादीनि । कुञ्जलिङ्गानि बर्हिपुरोगमविहङ्गममधुररवाः । तो-
यलिङ्गानि स्फीतस्वच्छत्वमधुरत्वशैत्यादीनि । सरिल्लिङ्गान्यनिशमुपनायमानप्र-
वाहगाम्भीर्यादीनि । सरोवरलिङ्गानि तोयसौन्दर्य्यकुशेशयमराळादिविहाररूपा-
ण्येव । न मनागप्यन्यतमे वा तेषु देहदाहादयो लिङ्गान्युपपद्यन्ते । प्रेमादि-
ष्वेव तेषां सुमहत्त्वात् । न ह्येवंविधभीतप्रेतपरीतदेशेषु तत्त्वार्थविदो विदुरस्य
सञ्चरणमुपपद्यते न्याय्यम् । नर्ते तस्य तादृग्जनावलोकनेन जुगुप्सोत्पादनाभि-

प्रत्किमप्यर्जनार्हं तदादौ स्यात् । न वा तदादीन्प्रत्यकृत्वा भर्त्सनं तस्य ततः प्रतिनिवृत्तिः स्यात् । वृत्तं चेदं विदुरस्यादेहवासनात्मकं मलिनतमसंस्कारपराहतप्राणिनिरीक्षणसमं स्वप्ने वा सम्भवेत् । न हि तावत्तप्ताङ्कनं भगवाद्दिव्यायुधलाञ्छनम् । किन्तर्हि पशुवल्लोहलाञ्छनमेव । तेन तु लाञ्छिता जनाः प्रेतात्मानो यथार्हमध्यवसीयन्ते न तु जातु देवसञ्ज्ञाः परमैकान्तिनः । इमे चेद्देवाः स्युस्तर्हि पिशाचयोनयो देवाधिदेवाः किन्न स्युः । एवञ्च देवत्वं क्रीडनकाकारं यथेच्छं व्याकुलीक्रियेत । तथाचैवंविधतप्ताङ्कनदूषितैः प्रतिष्ठापितदेवतायतनानि वा प्रतिमा अपावित्र्यैकसङ्कलिताः स्युः । तन्माप्रापन्नाम कालुष्यमिति दैवपित्र्यादिकार्येषु पिशाचादिधर्माणो दग्धाङ्गा विपद्यपि घोरायां न प्रवेशयितव्याः श्रेयस्कामैः । ननु " श्रोत्रियो विष्णुभक्तस्तु गृहस्थः शास्त्रवित्तमः । चक्रलिङ्गधरो विप्रः प्रतिष्ठां कर्त्तुमर्हति । तेन प्रतिष्ठितस्तत्र सन्निधत्ते सदा हरिः । देवतान्तरभक्तो वा समबुद्धिरथापि वा । नास्तिको वेदहीनो वा न प्रतिष्ठां समाचरेत् । वर्ज्याः पाषण्डशैवाद्यैः स्थापिताश्च तथाऽर्चिता " इत्यादिविष्णुतत्त्वभरद्वाजसंहितावचनेभ्यो नोदीरितदूषणगणग्रस्ता भवामो वयम् । मैवम् । दग्धाङ्गानामुक्तलक्षणाऽनाक्रान्तत्वस्यैव वास्तवत्वात् । आदरभराच्छ्रुतरुद्रीयाद्यध्ययनमकुर्वाणाः प्रत्युत तदादिवेदभागान्निन्दमाना वैष्णवम्मन्या न स्युः श्रोत्रियाः । उपासकान्तरपूज्यमानप्रतिमां वा शालग्राममनर्चयन्तः प्रत्युत विद्विषन्तो जना विष्णुभक्ता नोच्येरन् । शास्त्रप्रतिपाद्यशिवादिविद्रोहिणः शास्त्रज्ञातारो नाभिमन्येरन् । चक्रलिङ्गधरा ननु जीवत्प्रेताकाराः शूद्रभावापाद्यनर्हा न कथञ्चिद्विप्रत्वापादकलेशेरीति सर्वतन्त्रसिद्धान्ते तद्रहितवृत्तिमद्वैष्णवमानिकृता प्रतिष्ठा नाशदोषोत्पादनायालङ्कल्पिष्यत् । मालिन्यादेरेव तत्र परम्प्रसक्तौ दूरोपास्तमेवास्ति सान्निध्यं हरेः सर्वशः । वैषम्यादिमतिकर्दमावलिप्तानुव्यवहारजातानामेव सर्वप्राण्यन्तर्यामिणः प्रेमभागमाङ्गितायाः सम्प्रतिपन्नत्वाद्धिस्तरश्च वस्तः । " नमो गिरिशाय च शिपिविष्टाय च । विष्णुः शिपिविष्ट " इत्यादिमन्त्रवर्णैरितरेतरात्मतया हरिहरयोर्गम्यमानत्वाच्च । न हि गम्यमानस्याग्नि कुहरिवद्गम्यमानता । भेदस्य तयोरुपरिष्टान्निराकरिष्यमाणस्य भेदप्रत्ययप्रत्यानस्य प्रत्याख्यानादेवात्स्वरूपसिद्धत्वात् । इह तु लिप्सया परं यया प्रेर्य्यमाणवाङ्मनःकायाः स्वानुरूपप्रवृत्तिप्रमुक्ताः पर्य्योधीयन्ते न ते नितरां स्वाधिकारविशेषादाम्नायनिर्धारिताद्धीय-

न्त इत्यैकात्म्यकनकाचलशिखरमधिरोहतां देवतान्तरगोचरान्तरप्रत्ययाविभेदस्यैव मृग्यतया तत्प्रयुक्तपरमाहात्म्यसंस्थानवद्भिरेव कृतायाः किल प्रतिष्ठायाः पुनरर्चाया हरेर्निरतिशयप्रीत्यास्पदत्वं मुख्यमस्ति शास्त्रसर्वस्वात् । न च सममत्यां वस्तुव्यत्ययलेशो वा वास्तवः । चिद्धातुस्वरूपसत्ताऽतिरिक्तसत्ताकत्वाभावस्यौपाधिकविरूपप्रत्ययसन्तानासहस्य निर्बाधात् । न हि निर्बाधं दुर्बुध्या वस्तु कश्चिद्वाधितुं प्रभवेत् । न हि ताधद्दिग्देशाद्यनवच्छिन्नचैतन्यसत्ताऽसूयकादस्ति कश्चिन्नास्तिको वैष्णवम्मन्यात् । नो खल्वीर्ष्यया यथाकथञ्चिदधिगतवेदो वा तदुक्तानुष्ठानेन भाग्यहीनः पुनरसौ वेदहीनसमानयोगक्षेमतां नातिशेते । न वा पाषण्डशैवपूर्वभ्रातासौ तादृशानपि शैवानर्हति वञ्चयितुम् । इत्थञ्च नासीद्विदुरस्त्वादृशो विध्वंसयिता । अपि त्वखिलव्यापिरूपैकसंस्कृतमना भक्तिमसंस्कृतां नाचकार सार्वात्म्यवित् । चित्त्वं चास्योद्योगपर्वणि परश्च वा प्रसङ्गैर्भूयोभिर्यथापदवगम्यते वचनैरेव स्वीयैः । तथाच भवत्वं मौर्ख्यमात्मनस्तत्त्ववित्स्वनपवदनीयसंविन्माहात्म्यविद्योतमानेष्वध्यारोप्य कृत्रिमवाग्भिर्मनाग्वा । मा च तान्निषेणासुरवर्मैरनभिज्ञान् व्यामोहय । मा हि पुनः पैप्पलादश्रुत्यवष्टम्भेनास्मन्निरूपितमूर्त्येकमूर्त्तिकमितिपदव्याख्यानपर्यादृतश्रीधरविद्वद्रत्ननिरूपितरसातिशयमबुध्वा क्षारोदकरसविकासैरात्मवचनैरात्मानमभिकल्पयेः । एवञ्च निराकृतवाक्यसहोदरवाक्यगणाः कृत्रिमदेहाः सर्व एवोपरितना दर्पणगता मुद्गरघातन्यायेन प्रत्याख्याता वेदितव्याः ॥

१०७ पारिभाषिकनामादिसंस्कारस्यापि यथाशास्त्रनिराकरणम् ।

पुण्ड्रसंस्कारः समनीते दूषित एव ग्रन्थे यथावत् । अतः परं नाममन्त्रयागसंस्कारा मितार्थैर्वेदबाह्यतया परिह्रियन्ते तथाहि वेदप्रदेशेषु च स्मृतिषु "द्वादशेऽह्नि पिता नाम कुर्यादि"त्येवमादिवचोभिर्नामकरणं खलु सकृदेव विधीयते । नासकृत्कुत्रचिद्वा । आचारोऽप्येवमेव सार्ववर्णिको महाजनप्रचारशाली सार्वदिकः सम्प्रथते । अतएवाश्मवद्रामादीन्पुरोहितपुङ्गवो वसिष्ठः सकृदेवोदितेऽहनि नाम मङ्गलमयं निरदिशत् । न चोत्तरकाले तेषां वा परेषां नामसंस्कारवादि पश्यामः प्रमाणं कुहचित् । न च हारीतस्मृतावसौ संस्कारो वर्णितोऽस्तीति सन्तोष्टव्यम् । तस्य मन्वाद्यनेकस्मृतिकारासंस्पृष्टस्यैकतमेनाप्याम्नायवचसा हन्तासंगृहीतस्य प्रामाण्यं नोपपद्यते । यद्यपि नामसंस्कारं प्रकृत्य "नृसिंहरामकृष्णाख्यं दासनाम प्रकल्प-

येत् । शक्त्या दशावताराणां वर्जयेन्नाम वैष्णवः । नाम दद्यात्प्रयत्नेन वैष्णवं पापनाशनम् । यस्य वै वैष्णवं नाम नास्ति चेत्तु द्विजन्मनः । अनामिकः स विज्ञेयः सर्वकर्मसु गर्हित " इत्यादिना वाङ्निकरेणाकल्पयन्नामसंस्कारमपि हारीत इति गम्यते तथाऽपि स्वसजातीयविजातीयस्मृतिकारानभिप्रेतविरूपवस्तुविशेषनिर्देशतया नोपादेयवचनतामापद्यते । स एष प्रस्तुतेऽर्थेऽपि वा परमार्थः । " शूद्रो दास इति स्मृत " इति सकलस्मृतिकृन्मतव्यपेतकार्ये तन्नाम ननु नामान्तं पुनरशेषगृह्यकारसरणिसमतिक्रान्तोद्यतप्रयोगप्रसाधनाविधायिश्रुत्येकतममर्यादयाऽप्यसम्बद्धमनादेयविषयतामाभियायाद्यतः । न च नृसिंहरामकृष्णादीनामुपासकत्वेऽप्युपासकस्वरूपावेदकतया पर्य्यवस्येद्दासनाम न्याय्यम् । तादृशावेदनस्य दाम्भिकप्रचाराकारतयाऽदाम्भिकभक्तिप्रक्रियाप्रवणस्य हि नृसिंहादेरभिमतत्वासिद्ध्या फलाभावात् । प्रत्युत भक्तम्मन्यानामत्यल्पमतिमत्त्वैवाध्यवसीयते स्वस्वार्थवियोजिका । न हि तथ्यात्मिकामुपाददाना भक्तिं दासत्वादिरूपिताभिधानसामग्रीं कथञ्चिद् गृह्णीयुः । गृह्णानाः पुनस्तदाभासा एवोपजायन्ते निजप्रकृत्या । दातारस्तु दासपदव्या गुर्वाभासा दासजनार्थापहर्तृतयाऽभ्युपायमधिकमेवाभ्यूहितवन्तो विकृतकरणाः । न चेदमभ्यूहनमस्ति हि हारीतस्यैव न तु नोमनागपीति साम्प्रतम् । स्मृतावस्य क्षेपकनाऽवधृतेः प्रागेवोद्ग्राहितायाः कल्प्यभ्यूहनाधीनशङ्कासम्पर्कैविमर्दकत्वात् । न हि जातकर्मसमनन्तरभाविनामसंस्कारमनुत्पादितप्रक्रियाघटकमुन्मार्गिकसामग्री काचिदुपतिष्ठते या खलु श्रुत्या वा स्मृत्यन्तरेण स्यादिह सम्माननीया या चेमामन्वादर्शी नामसंस्कारसम्पदमुररीकुर्यात् । न चेमां वार्त्तं सामग्रीं पश्यामः कुहचित् । न वा द्वितीयनामसंस्कारविधानभक्तस्ता काचिदप्युदाजहार । यदीदं नाम प्रामाणिकं स्यात्तदुदीरितरीत्यवलम्बिनपाऽऽवेदमानमुनिगणनाम्नामशेषाणां पुरुषान्तरनिरूढानाञ्च नामान्तरमसहमानानां वसिष्ठव्यासवैशम्पायनादिरूपाणां व्याकोपः स्यात् । साङ्केतिकेन च नाम्ना किलैतम्भूतेन द्वितीयेन प्राथमिकं नाम बाधितं नाम स्यादप्रत्यूहम् । न चेयं बाधितप्रतीतिरनुभूतिविषया युक्त निर्दोषपद्यते । न चानुत्पद्यमाना सा बाधकप्रतीतिं कावित् स्वार्थप्रतिपत्तिर्वा तत्प्रभूता निराश्रयैवेति केवलं वा स्वेन परार्थप्रतिपत्तये । एवञ्च " एवं हि नामसंस्कारं कुर्वीत द्विजात्र प्रत्याशा तद्विषयिणी स्यात् । विशिष्टं वैष्णवं नाम समग्रमः । गुणयोगेन नान्यानि विष्णोर्नामानि लौकिकैः । विशिष्टं वैष्णवं नाम

न्त इत्यैकात्म्यकनकाचलशिखरमधिरोहतां देवतान्तरगोचरान्तरप्रत्ययाविभेदस्यैव मु-
ख्यतया तत्प्रयुक्तपरमाहात्म्यसंस्थानवद्भिरेव कृतायाः किल प्रतिष्ठायाः पुनरर्चाया
हरेर्निरतिशयप्रीत्यास्पदत्वं सुस्थमस्ति शास्त्रसर्वस्वात् । न च सममर्चा वस्तुव्य-
त्ययलेशो वा वास्तवः । चिद्धातुस्वरूपसत्ताऽतिरिक्तसत्ताकत्वाभावस्यौपाधिक-
विरूपप्रत्ययसन्तानासहस्य निर्बाधात् । न हि निर्बाधं दुर्बुध्या वस्तु कश्चिद्बाधि-
तुं प्रभवेत् । न हि तावद्दिग्देशाद्यनवच्छिन्नचैतन्यसत्ताऽसूयकादस्ति कश्चिन्ना-
स्तिको वैष्णवम्मन्यात् । नो खल्वीर्ष्यया यथाकथञ्चिदधिगतवेदो वा तदुक्तानु-
ष्ठानमान्यहीनः पुनरसौ वेदहीनसमानयोगक्षेमतां नातिशेते । न वा पाषण्ड-
शैवपूर्वभ्राताऽसौ तादृशानपि शैवानर्हति वञ्चयितुम् । इत्थञ्च नासीद्विदुर-
स्त्वादृशो विप्रलम्भयिता । अपि त्वखिलव्यापिरूपैकसंरक्तमना भक्तिमसंस्कृतां
नाचकार सार्वात्म्यवित् । विस्तरं चास्योद्योगपर्वणि परत्र वा प्रसङ्गैर्भूयोभिर्यथा-
यदवगम्यते वचनैरेव स्वीयैः । तथाच मास्त्वं मौर्ख्यमात्मनस्तत्त्वविस्त्वनपवदनीय-
संविन्माहात्म्यविद्योतमानेष्वध्यारोपय कृत्रिमवाग्भिर्मनाग्वा । मा च तन्मिषेणा-
सुरधर्मैरनभिज्ञान् व्यामोहय । मा हि पुनः पैप्पलादश्रुत्यवष्टम्भेनास्मन्निरूपित-
मूर्त्येकमूर्त्तिकमितिपदव्याख्यानपर्यादृतश्रीधरादिदत्तनिरूपितरसातिशयमवधूय सा-
रोदकसविकासैरात्मवचनैरात्मानमभिकत्थये. । एवञ्च निराकृतवाक्यसहोदर-
वाक्यगणाः कृत्रिमदेहाः सर्वे एवोपरितना दर्पणगता मुद्गरघातन्यायेन प्रत्याख्या-
ता वेदितव्याः ॥

१०७ पारिभाषिकनामादिसंस्काराणामपि यथाशास्त्र निराकरणम् ।

पुण्ड्रसंस्कारः समतीते दूषित एव अन्ये यथावत् । अतः परं नाममन्त्रया-
गसंस्कारा मिताक्षरैर्वेदबाह्यतया परिह्रियन्ते तथाहि वेदप्रदेशे-
षु च स्मृतिषु "द्वादशेऽह्नि पिता नाम कुर्यादि"त्येवमादिवचो-
भिर्नामकरणं खलु सकृदेव विधीयते । नासकृत्कुत्रचिद्वा ।
आचारोऽप्येवमेव सार्ववर्णिको महाजनप्रचारशाली सार्ववैदिकः सम्पद्यते । अतएवा-
भगवद्रामादीन्पुरोहितपुङ्गवो वसिष्ठ सकृदेवोद्दिष्टेऽहनि नाम मङ्गलमयं निरदिश-
त् । न चोत्तरकालं तेषां वा परेषां नामसंस्कारवादि पश्यामः प्रमाणं कुहचि-
त् । न च हारीतस्मृतावसौ संस्कारो वर्णितोऽस्तीति सन्तोष्टव्यम् । तस्य म-
न्वाद्यनेकस्मृतिविरोधसंस्पृष्टस्यैकतमेनाप्याम्नायवचसा ह्यनासंगृहीतस्य प्रामाण्यं नो-
पपद्यते । यद्यपि नामसंस्कारं प्रकृत्य "नृसिंहरामकृष्णाख्यं दासनाम प्रकल्प-

येत् । शक्त्या दशावताराणां वर्जयेन्नाम वैष्णवः । नाम दद्यात्प्रयत्नेन वैष्णवं पापनाशनम् । यस्य वै वैष्णवं नाम नास्ति चेत्तु द्विजन्मनः । अनामिकः स विज्ञेयः सर्वकर्मसु गर्हित " इत्यादिना वाह्निकरेणाकल्पयन्नामसंस्कारमृपिर्हारीत इति गम्यते तथाऽपि स्वसजातीयविजातीयस्मृतिकारानभिप्रेतविरूपवस्तुविशेषनिर्देशतया नोपादेयवचनतामापद्यते । स एष प्रस्तुतेऽर्थेऽपि वा परमर्षिः । " शूद्रो दास इति स्मृत " इति सकलस्मृतिकृन्मतव्यपेतकार्ये तन्नाम ननु नामान्तं पुनरशेषगृह्यकारसरणिसमतिक्रान्तोद्यतप्रयोगप्रसाधनाविधायिश्रुत्येकतममर्यादयाऽप्यसम्बद्धमनादेयविषयतामभिधायाद्यतः । न च नृसिंहरामकृष्णादीनामुपासकत्वेऽप्युपासकस्वरूपावेदकतया पर्यवस्येद्दासनाम न्याय्यम् । तादृशावेदनस्य दाम्भिकप्रचाराकारतयाऽदाम्भिकभक्तिप्रक्रियाप्रवणस्य हि नृसिंहादेरभिमतत्वासिद्ध्या फलाभावात् । प्रत्युत भक्तम्मन्यानामत्यल्पमतिमत्तैवाध्यवसीयते स्वस्वार्थवियोजिका । न हि तथ्यात्मिकामुपाददाना भक्तिं दासत्वादिरूपिताभिधानसामग्रीं कथञ्चिद् गृह्णीयुः । गृह्णानाः पुनस्तदाभासा एवोपजायन्ते निजप्रकृत्या । दातारस्तु दासपदव्या गुर्वाभासा दासजनार्थापहर्तृतयाऽप्युपायमधिकमेवाभ्यूहितवन्तो विकृतकरणाः । न चेदमभ्यूहनमस्ति हि हारीतस्यैव म तु नोमनागपीति साम्प्रतम् । स्मृतावस्य क्षेपकनाऽवधृतेः प्रागेवोद्ग्राहितायाः कृत्यभ्यूहनाधीनशङ्कासम्पर्कविमर्दकत्वात् । न हि जातकर्मसमनन्तरभाविनामसंस्कारमनुष्ठितप्रक्रियाघटकमुन्मार्जकसामग्री काचिदुपतिष्ठते या खलु श्रुत्या वा स्मृत्यन्तरेण स्यादिह सम्माननीया या चेमामन्यादृशीं नामसंस्कारसम्पदमुररीकुर्यात् । न नेमां वार्त्तामग्नी पश्यामः कुहस्वित् । न वा द्वितीयनामसंस्कारविधानमक्तस्ता क्वचिदप्युदाजहार । यदीदं नाम प्रामाणिकं स्यात्त्वदुदीरितरीत्यवलम्बितयाऽऽवेद्यमानमुनिगणनाम्नामशेषाणां पुरुषान्तरनिरूढानाञ्च नामान्तरमसहमानानां वसिष्ठव्यासवैशम्पायनादिरूपाणां व्याकोपः स्यात् । साङ्केतिकेन च नाम्ना किलैवम्भूतेन द्वितीयेन प्राथमिकं नाम बाधितं नाम स्यादप्रत्यूहम् । न चेयं बाधितप्रतीतिरनुभूतिविषया क्व चिद्वोपपद्यते । न चानुत्पद्यमाना सा बाधकप्रतीतिं काचिदपि वा सहते परार्थप्रतिपत्तये । स्वार्थप्रतिपत्तिर्वा तथ्यभूता निराश्रयैवेति केपात्र प्रत्याशा तद्विषयिणी स्यात् । एवञ्च " एवं हि नामसंस्कारं कुर्वीत द्विजसत्तमः । गुणयोगेन चान्यानि विष्णोर्नामानि लौकिकैः । विशिष्टं वैष्णवं नाम

सर्वकर्मसु चोदितमि"त्यादिपदजातं हारीतस्य प्रमाणान्तराननुगृहीतमयुक्तियुक्त-मकिञ्चित्कराक्षरनिकरमेवेति विज्ञायते । यदीदमृषावसम्मतं स्यात्तर्हि प्रक्षेप्तर्येव तदेतदसंशयमभिमन्यतां तावत् । तथा च नायं नामसंस्कारः श्रुतिसम्मितो न वा समस्तेतरस्मृतिसम्मितः । स्मृतौ हारीतस्य घटकोऽपि न स्वयं स वाक्याना-ममीषां प्रमाणभूतानां निर्माताऽस्ति किन्तर्हि हारीतनामा रामानुजीय एवैषां कश्चन प्रक्षेप्ताऽऽसीत्संस्काराणामिति स्थिते । " जातकस्यान्वर्थकं नाम कुर्यादि"ति धर्मसूत्रबलादेवज्ञसम्मत्याऽमकस्य जीवनचर्यामवधार्यान्वर्थमेव नाम नामान्तरसङ्की-र्तनासहं सकृदेवेतिकर्त्तव्यतामापद्यते । तावतैव सर्वे एव नामवन्तः कृतकृत्या भ-वन्ति न तु नामान्तरपरिग्रहो हविर्यज्ञसोमसंस्थासमलङ्कृतपुरुषधौरेयादीक्षितपौ-रुषनामधेयभाजः प्राप्नोत्यन्यत्र । यथा चाम्नायते । " तस्माद्दीक्षितो द्विर्ना-मे"ति । न चायमपि प्रक्रियामन्यादृशीमास्थाय नामदीक्षावानेव सन् ततो व्यतिरिच्यत इति साम्प्रतम् । हविर्यज्ञसोमसंस्थावतामेव दीक्षितपदभागित्वात् । इदमेवाभिसन्धाय " एवं दीक्षितो भवती"ति व्यपदेशास्तथाविधप्रक्रियावन्तमेवा-भिदधते । नेतरान्हन्त साङ्केतिकाचारदूषितात्मनो मनागपि । इतरथा सर्वे एव स्वावेशवशवर्तिनो व्यापारमात्मीयमास्थाय दीक्षितपदव्यपदेशाः स्युः । सति चैवं विनिर्दिष्टदीक्षितात्मानो न विशिष्येरन् । इत्यन्यानिष्टम् । तथा च हविर्यज्ञसो-मसंस्थागोचरदीक्षाधरेष्वेव दीक्षितपदाभिधेयभूतेषु तथा व्यवहारः नेतरे निरुक्तवे-दबाह्याचाराः कथञ्चित्तदादिपदबोध्यतामर्हन्ति ।

यत्तु " अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत् । अवैष्णवाद् गुरोर्मन्त्रं यः पठेद्वैष्णवो द्विजः । कल्पकोटिसहस्राणि पच्यते नरकात्मना । अचक्रधारिणं यस्तु मन्त्रमध्यापयेद् गुरुः । रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयादि"ति दृश्यते हारीतवाक्यजातं तत्त्वानिवार्यमनोमलोत्थापितक्रूरतरकृत्यानामेव मानवा-धमानां स्मृतौ तस्यां सद्ग्रथितमवधार्यते न मनागप्येतदपरमुपोपपद्यते । यदी-दमस्यैवेति साहसमात्रेणाभ्युपेतं स्यादविचारमतिभिस्तदा ऋषित्वं वा स्मृतिकार-भावो वाऽस्य स्वकाल एवपर्यन्तरेणोपमर्दितः स्यात् । वस्तुतस्तु श्वपाकादिसप-क्षभूतमनुष्यवचांस्यमून्याभिजात्यमात्मनो निर्ग्राहयन्ति किञ्चिदत्यर्थम् । नातः पर-तरं मूलमस्योपजायते प्रतिपदप्रयोगवैपरीत्यपर्यवेक्षयेति स्थिते कृतममीभिः संस्कारैः श्रुतिस्मृत्यादिगर्हितैरातिवेलम् ॥

## इति श्रीवैष्णवम्मन्यानां पुण्ड्रादिसंस्कारपरीहारः ॥

अथात्र निस्सीमदौरात्म्यनिष्पादनानिदानभूताः श्रीभाष्योक्तीः समासतः प्रत्याख्यास्यामो यथाशास्त्रं, तथा हि । अथ "मीमांसापूर्वभागज्ञातस्य कर्मणोऽल्पास्थिरफलत्वादुपरितनभागावसेयस्य ब्रह्मज्ञानस्यानन्ताक्षयफलत्वाच्च पूर्ववृत्तात्कर्मज्ञानादनन्तरं तत एव हेतोर्ब्रह्मज्ञातव्यमित्युक्तं भवती"ति निष्कृष्टार्थमावेदयन्रामानुजो निजाभिप्रायाद्रढिम्ने 'वृत्तात्कर्माधिगमादनन्तरं' ब्रह्मविविदिषेत्युदाजहार वृत्तिकारवचनं तन्नोपपद्येत । कर्मब्रह्मणोरितरेतरविरुद्धस्वभाववतोरभिधायकग्रन्थव्यक्त्योरन्योन्यविलक्षणप्रकृतिकत्वे कर्माधिगमब्रह्मविविदिषयोः पूर्वापरीभावस्यास्वरूपसिद्धत्वात् । न चाल्पास्थिरफलत्वमपेक्ष्यानन्ताक्षयफलत्वप्रतिपत्तिरुदितार्थे तन्त्रम् । तादृप्येण तयोर्ज्ञातत्वेऽपि न तावता कर्मज्ञानानन्तरमेवं ब्रह्मज्ञातव्यतोपजायते यतः । नो खल्वेतद्वृत्तिकृद्वचः प्रकृतार्थमनुगृह्णाति । तस्याप्यस्य यथाकथञ्चिदुपपन्नेऽधिकारिण्युपपत्तावप्यतथाभावभाविनि नियन्तुमेवमक्षमत्वात् । न हीह कर्मपदमध्वरमीमांसाप्रतिपाद्यमेव वस्तु कर्माख्यं ब्रूते । ततोऽतिरिक्तब्रह्मचर्यतपस्सत्यवदनशमदमाहिंसादीनामसङ्कीर्णानामत्याश्रमैकसंसिद्धानां पुनस्तन्त्रान्तरप्रतीतानामप्यभिधायकत्वात् । प्रतिपन्नगार्हस्थ्यानामपि कर्मात्मनां तत्र पुनः प्रयोजनमपश्यतां निवृत्तिरेव तेभ्यः कुहस्वित्स्यात् । यथा चाम्नायते "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे । प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मी"ति बृहदारण्यके । यथा पुनः स्मर्यते "संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिता" इत्यङ्गिरसा । एवञ्च प्रागेव गार्हस्थ्यप्रतिपत्तेरात्यन्तिकवैराग्यवतः पारिव्राज्यप्रतिपत्तौ गार्हस्थ्यसञ्चितकर्मणामनुष्ठितेरेवात्यन्तमनुपपत्तौ च 'वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषे'त्युक्तिर्वृत्तिकाराणामनुपपन्नोपजायते । तथा ■ किमभिप्रेत्यायं भाष्यकारम्मन्यो वृत्तिकारवचनमुपनीतवांस्तद्वि‍द्वान् यतो ये च केचिज्जन्मनैव विरक्ता अभिगम्यन्ते । परे तु कर्मसु प्रवृत्ता अप्यविरक्ता विद्याविद्वेषिणो विलोक्यन्ते । एवञ्चाधिकारतारतम्यवैषम्ये चाविमृश्य प्रवृत्तं वचो वृत्तिकाराणामसूत्रार्थरहस्याशंसयेनावेहि । त्वद्विध तन्मतमनुवर्त्तमानः कुतो न भ्रान्ततरोऽस्यासमन्तात् ।

१०८ श्रीभाष्यप्रतिपादितस्य तु कर्मब्रह्ममीमांसयोरैकशास्त्र्यस्य निराकरणम् ।

अथैवमपि वक्ष्यति च "कर्मब्रह्ममीमांसयोरैकशास्त्र्यं संहितमेतच्छारीर-

कं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिरित्यतः प्रतिपिपादयिषितार्थभेदेन षट्कभेदवदध्यायभेदवच्च पूर्वोत्तरमीमांसयोर्भेद" इति । तदपि न । कर्मब्रह्ममीमांसयोरैकशास्त्र्याभावात् । कर्मब्रह्मणोर्विशदतरस्वरूपसतोरितरेतरानपेक्षयोः शेषशेषिभावाभावितयोरैकशास्त्र्यवार्त्तैवानादेयतरा स्यात् । न च तयोः समुच्चिचीषया शेषशेषिभावो वृत्तिकृन्मान्य इति मन्तव्यम् । आलोकतमसोरिव नकुलीव्यालयोरिव च सुधागरलयोरिव समुच्चय एव तयोरसम्प्रतिपन्नो यतः। नो खलु तयोः स्वरूपपरिणामविवक्षया वा तथाभ्युपगमो न्याय्यः । आरम्भे तदसम्भवे परिणामे तत्सम्भवस्यानुभूतिबाह्यत्वात् । न तावद्विरूपाभिसन्धिसन्धानशालिनोर्जैमिनिबादरायणाचार्ययोरन्योन्यविसदृशानुभूतिभावनास्मरणादिसामग्रीसमवेतात्मनोः स्वानुरूपाभिधेयप्रयोगपारम्परीप्रसूत्यैकनियामकयोः क्वचिदप्यैकशास्त्र्याभ्यूहनमैकान्तिकं स्यात् । न हि जैमिनीया षोडशलक्षणी कुहचिद्वास्तवी । द्वादशलक्षण्या एव तदीयतयाऽधिगमात् । प्रकृते त्वस्या एवोपेयात् । यदि षोडशलक्षण्येव जैमिनीया स्यात्तर्हि चतुर्लक्षण्या संहिता नन्वेषा विंशतिलक्षण्येव जायेत । न तु जातु षोडशलक्षणी । यदि पुनरैकशास्त्र्यमेव स्यात्पृथक्कृत्य द्वादशलक्षणीसंहितमेतच्छारीरकं तयेत्युक्तिरेवासङ्गता स्यात् । न च षट्कभेदवदध्यायभेदवच्चास्ति तयोर्भेद इति वा वाच्यम् । षट्काध्यायपादभेदानां स्वान्तर्गतानामेव प्रकृतत्वे स्वेतरगतानां नूनमेषामप्रकृतत्वात् । स्वेतरभावस्तु संहितमेतच्छारीरकं जैमिनीयेनेति पार्थगर्थ्यावेदकस्त्रीयवचनेनैवावगम्यते । न हि ब्रुवाणो भेदमभेदमाख्यातुं क्षमते । प्रीतात्मनो वा तयोरभेद उपायैकत्वाद्वैकश्यवानेवोपेये पर्यवस्येत् । न च पुनः प्रतिपिपादयिषितार्थभेदेन षट्कादिभेदवदित्युक्तिर्युक्तियुक्ता । न हि स्वप्रकरणे प्रतिपिपादयिषितार्थभेदः साधयेदप्रकरणे ग्रन्थाभेदं कृच्छ्राद्वा यतः । इतरथा दर्शने कस्मिंश्चिद्दर्शनान्तरविषयमुदाहरन्वतात्मदर्शनेनैकात्म्यतयोपादद्यात् । एवं तर्हि तया तया प्रत्यासत्या ते तेऽर्थाः शास्त्रान्तराणामुपादीयमाना ऐकशास्त्र्यमेव भजेरन्निति न मनागप्यभियतान्नितरेतरं शास्त्रजातम् । एवञ्च तद्भेदप्रतीतिगोचराः सर्वे एवाध्ययनाध्यापनानुष्ठानानुष्ठापनादिव्यवहाराः परस्परविरूपसंभारसमास्पदाः सर्वे एवोच्छिद्येरन् । शाब्दिकवृद्धिशब्दनदीशब्दार्थावार्थिकस्मार्त्ततन्त्रगताभ्यां नन्वेताभ्यां पुनश्शब्दार्थाभ्यामैकशास्त्र्यमापद्येयाताम् । न च " वृद्धिरादैच्यूस्त्र्याख्यौ नदी"त्येवंलक्ष-

नावम् शब्दार्थावुत्तरकालीनात्मावयवोपचयादिसंस्थानलक्षणशब्दार्थाभ्यामत्यन्तास्वरूपाभ्यां क्वचिदप्यन्वितौ वर्त्तेते । न चापीयमसङ्गताऽस्ति कल्पना परस्परानन्वितशास्त्रविषया इह तु मीमांसयोरेकमत्ययात्रिषयतामापन्नयोरस्त्वनपायमैकशास्त्र्यमिति साम्प्रतम । मीमांसयोः शब्दगाम्येकप्रत्ययाविषयतामापन्नत्वेऽप्यर्थगाम्यनेकप्रत्ययविषयतापत्तेरप्रत्यूहत्वात् । इदमेवाभिसन्धाय कर्ममीमांसाब्रह्ममीमांसेति प्रयोगभेद उपपद्यते । मीमांसापदार्थस्यैकत्वेऽपि तद्वोत्तराभिधेययोर्भेदस्य कर्मब्रह्मात्मनोरपरिहरत्वात् । न हि " दूरं पूर्वोत्तराद्योर्हि "त्यत्र विवक्षितयोः पूर्वापरशैलयोरैकात्म्यमभिप्रेयते । तयोस्तावदाधारनामरूपाणामितरेतरपार्थक्यसम्पादकानामन्योन्यं समुपस्थितत्वात् । न हि " पुनश्चरणं पूर्वोत्तरभ्रात्रोरि "त्यत्र वा ज्येष्ठकनिष्ठभ्रात्रोरभ्यार्हितचारित्र्यसम्पत्तिपर्यवेक्षया स्वरूपैक्यं वस्तुवृत्त्योपपद्यते । नापि " पूर्वोत्तरपथोर्ज्ञाता नाहमस्मि विशेषत " इत्यत्रापि परस्परविरुद्धदिग्देशसङ्कलनयोर्मार्गयोर्विशदाविशदाविन्यासवैरूप्यप्रतीतयोरैकमार्ग्यमुपपद्यते । तथैवेह कर्मब्रह्ममीमांसयोः परस्परव्यतिभिद्यमानानुबन्धचतुष्टयसमाश्रितयोरैकशास्त्र्यमप्रामाणिकमन्याय्यं च स्यात् । प्रणेत्रोरप्येतयोर्मीमांसयोर्जैमिनिबादरायणयोः परस्परपरिच्छिन्नापरिच्छिन्नवस्तुव्रातप्रसाधनानियन्त्रोरनुभूतिभावनास्मरणादिसामग्रीभेदविशेषप्रतिपन्नोरनैकशास्त्र्याभावे विशदतरं हेतुभावं प्रतिपद्यामहे । अत एव " द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च विभावित "ति भगवद्बादरायणोक्तिर्महाभारते प्रवृत्तिनिवृत्त्याख्ययवर्त्मद्वयावबोधिनी च तत्स्वरूपाभिधातृतया द्वयोरपि मीमांसयोरवगाहयन्ती शुकाचार्यं प्रत्युज्जृम्भते । यत्तु " सम्पत्तेरिति जैमिनिः । अन्यार्थन्तु जैमिनिः । परं जैमिनिर्मुख्यत्वात् । ब्राह्मेण जैमिनिरि "त्यादिब्रह्मसूत्रैरेव जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्य प्रतिपन्नत्वमस्तीति तन्न साम्प्रतम् । " धर्मं जैमिनिरत एव । पूर्वन्तु बादरायणो हेतुव्यपदेशात् " इत्यादिब्रह्मसूत्रैर्यागादिलक्षणस्य धर्मस्यैव फलदातृत्वं जैमिनेराचार्यस्याभिमतं यतो यतश्च बादरायणाचार्यस्य त्वीश्वरादेवाभिमतं तदेतत् । एवञ्चैतयोराचार्ययोः कर्मब्रह्मलक्षणेतरेतरविजातीयाभ्युपगमवत्त्वस्य सम्प्रतीत्या स्वकाले जैमिनेर्ब्रह्मस्वरूपतद्गुणतदुपासनतत्फलाद्यभ्युपगमस्याप्रतिपन्नत्वात् । न हि निर्विशेषब्रह्मात्मैकत्ववादिनो निवृत्तिवेलायां सगुणोपासनतत्फलाद्यभ्युपगमो जैमिनेरानुभविकः । तदाद्यभ्युपगमस्य तन्त्रान्तरेणैव मन्दाधिकारिणः प्रति संवृ-

त्त्वात् । न च " सम्पत्तेरिति जैमिनिरि"त्यादिभिर्वा सूत्रैरस्याभिप्रेतार्थासिद्धि-र्वादिनः । तेषामपि बादरायणाचार्याद्विमत्यविशेषनिरूपणपरत्वादविवादम् । अ-नुवादो वा तेषां पूर्वतन्त्राभिप्रेतपार्थगर्थ्यमेवैकशास्त्र्यविघटनानुरूपव्यापारपरायत्तं प्रत्याययति । इतरथाऽनुवाद एव तेषामकिञ्चित्करः स्यात् । न हि महाभा-रते दृष्यप्रविवेपाख्यानादावत्रभवद्व्यासाचार्योपदेशप्राप्तपरमात्मतत्त्वज्ञानवत्ता जैमिने-स्त्वदाख्याताऽभिप्रेता । निरस्तसमस्तविशेषे पुनः सच्चित्सुखात्मनि निरज्वर-ज्वरतः परमेश्वरस्य त्वदभ्युहितविष्णुतत्त्वज्ञानत्वानावश्यकत्वात् । त्व"न्त्वस्मि-ञ्शास्त्रे परस्य ब्रह्मणो विष्णोर्निरस्ताज्ञानादिनिखिलदोषगन्धस्य समस्तकल्याणगु-णात्मकस्य महाविभूतेः प्रतिपन्नतये"त्यादिकां पदावलीं व्याहृतवानसि । व्याहर-णमेतद्यावत्प्रमाणगर्हितमिति " ब्रह्मशब्देन च स्वभावतो निरस्तनिखिलदोषोऽनवधि-कातिशयासङ्ख्येयकल्याणगुणगणः पुरुषोत्तमोऽभिधीयत " इत्यस्य भाष्यस्य ख-ण्डनावसरे निरधारयिष्यामः । यत्तु " धूर्तस्वामिकपर्दिकर्तृकापस्तम्बसूत्रव्या-ख्यानस्य व्याख्येयैक्यादेकप्रबन्धकत्वं हि दृष्टं पाणिनिसूत्रपूर्वोत्तरवृत्त्योश्च वामन-जयादित्यकर्तृकयोर्व्याख्येयैक्यादेकव्याख्यानत्वं दृष्टं तस्मादुपपन्नमैकशास्त्र्यमि"त्यु-क्तं तद्युक्तम् । भगवदापस्तम्बसूत्रप्रस्थानस्य पाणिनिसूत्रकदम्बलक्षणव्याकरण-प्रस्थानस्य नानाकाङ्क्ष्यानन्यलक्षणतन्त्रात्मकतया वृत्त्योस्तयोर्विशदतरन्यूनाधि-कभावभावित्वेऽपि व्याख्येयभूतयोस्तन्त्रयोस्तयोः पूर्वोत्तरभेदप्रत्ययाभागित्वात् । पूर्वोत्तरार्धादिप्रक्रियायास्त्वध्येतृमतिसौकर्यमात्रनिर्वाहिकायास्तत्र तत्र प्रत्युक्तत्वे-ऽप्यापस्तम्बसूत्रतायाञ्च पाणिनिसूत्रतायां तद्भेदगन्धस्याप्यप्रत्ययात् । इह तु कर्मब्रह्ममीमांसे इतीतरेतरविभिन्नप्रस्थानकयोरेव शब्दयोरभिलापकयोः प्रतीत्या-भिधेयोरर्थ्यभिधेययोर्धियोश्च तयोर्भेदप्रतिपत्तिरेव सुतरां सूपपादा । तस्मा-दनुपपन्नमेव तवाभिकशास्त्र्यमिति स्थिते मीमांसाशास्त्र"मथातो धर्मजिज्ञासे"त्यार-भ्य " अनावृत्तिः शब्दादि,त्येवमन्तं सङ्गतिविशेषेण विशिष्टक्रममि"त्युक्तिर्वा श्रीभाष्यस्यासङ्गतिकतयाऽविशिष्टक्रमे मीमांसे स्वस्वोपक्रमपरामर्शोपसंहारोपयिक-भेदमूर्ती अधिकृत्याधाविकाऽवसीयते । यदि मीमांसयोरुभयोरैकशास्त्र्यं स्या-त्तदा पूर्वोत्तरयोः षट्कयोरन्यतराध्ययनेनान्यतराध्ययनाविशेषेणापरिपूर्त्तिमध्ययनस्य मन्यमाना अधिगम्यन्तेऽध्येतारस्तथैवानध्ययने"नाथातो ब्रह्मजिज्ञासे"त्यारभ्य " अनावृत्तिश्शब्दादि,,त्यन्तब्रह्ममीमांसाया अमीमांसकतामारभमाणोऽविघ्नं मन्येर-

द । न तथा मन्यन्ते हि शास्त्रान्तरतया प्रेक्षावन्तः । न मा तानेतानध्येतृ-व्यशिष्टमीमाँसाध्ययनानाचक्षते शास्त्रविदः । इयमेव सरणिर्ब्रह्ममीमाँसाया अ-प्यविशिष्टा प्रतिपद्यते । इतोऽपि तयोरैकशास्त्र्यमनुपपन्नतरं प्रतिपत्तव्यम् । एता-वताऽविमृश्यमानसुन्दरे श्रीभाष्यश्रुतप्रकाशिकानिरूपणे हन्तैकशास्त्र्यपौर्वापर्यनि-यमशास्त्रारम्भणीयत्वगोचरे पराभूते वेदितव्ये । अथ पुनः प्रथमं ताव"त्स्वाध्या-योऽध्येतव्य,, इत्यध्ययनेनैव स्वाध्यायशब्दवाच्यवेदाक्षरराशेर्ग्रहणं विधीयते । तच्चा-ध्ययनं किंरूपमित्यादिकं प्रवृत्तमुत्तरवाक्यं श्रीभाष्यस्थं तदप्यसङ्गतप्रायं प्रतीयते तथा हि । "मानपूजाया,,मित्यस्माद्धातोरभिनिष्पन्नोऽयं मीमाँसाशब्दः पूजितविचा-रणावचनोऽधिगम्यते । सेयं विचारणा वेदवाक्यानामेव । तानि तु "स्वा-ध्यायोऽध्येतव्य" इत्यध्ययनविध्यापादितार्थवच्छेदराशयपरपर्यायाण्याऽऽसते । त-दध्ययनं नाम गुरुपादोपसर्पणपुरःसरमर्थावगत्यलङ्कृतविशिष्टवर्णपदवाक्यादिवेद-शाखापरिग्रहः । सोऽयं पूर्वभावी सम्परिग्रह उत्तरभाविनीं नामार्थावगतिमभि-युङ्क्ते । सेयमवगतिः कर्मावबोधकवाक्यानामेव प्रायेण साभिप्रायम् । न तु विशेषेण ब्रह्मस्वरूपावबोधकानां नाम तेषाम् । तथा स"त्यधीत्य स्नायात् । अनधीत्य गुरुकुलाच्च समावर्त्तितव्यमि"त्यादिप्रमाणबललभ्यगार्हस्थ्यप्रत्यापत्तिरभी-प्सागोचरा प्रतिबध्येत । किञ्च "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सी-रि,,ति श्रुतिर्व्याकुप्येत । तत्स्वरूपावबोधकवाक्यार्थपरिचिन्तया ननु विशिष्टसंस्का-रसध्रीचीनया गार्हस्थ्याभिमुखप्रवृत्तिवैमुख्यसम्भावनायाः प्रत्यासन्नत्वात् । ननु "वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मने,,ति स्मरणं तावद्रहस्यपदवेद्योपनिषदर्थवि-चारणापरायणता युगपदेव बोधयति । न । अध्ययनविध्यापादितार्थव-त्स्याविशिष्टत्वेऽप्यात्मपरिपाककलिना तादृशाविशेषपथ्यकिं पुरस्कृत्यैव विचार-णायास्तस्याः कृतकृत्यत्वात् । अत एव तादृशदशाविशेषसमलङ्कृतपुरुषधौरेययो-ग्यतातिशयपर्यालोचनया नाम प्रमाणसर्वस्वसम्मानितया साधनचतुष्टयसम्पत्सम्प-त्स्यानन्तर्यमेवाथशब्दाभिधेयभूतं तदुत्तरञ्च ब्रह्मजिज्ञासा उपतिष्ठते सप्रमाणम् । न तु जातु श्रीभाष्यकृदुक्तगत्या "वृत्तात्कर्माधिगमादनन्तरं ब्रह्मविविदिषे,,त्यु-क्तिर्वृत्तिकारस्योपपद्यते । उपनयनोपाकर्माध्ययनादिप्रक्रियाया गृह्यसूत्रप्रस्था-नैकसन्नियततया न कर्मब्रह्ममीमाँसे समाश्रित्य विचारणानर्हत्वाच्छारीरकश्रीभाष्य-ग्रन्थे वा स्वस्मि"न्विशिष्टकर्म तथा हि प्रथमं तावत्स्वाध्यायोऽध्येतव्य इत्याद्युक्त-

यो यथाप्रकरणं सङ्घदन्ते । " यज्ञेन यज्ञमयजन्त देवाः तानि धर्माणि प्रथमान्यासन्नि,,त्याद्यया श्रुत्या यज्ञाख्यस्य कर्मण एव श्रौतत्वा"थातो धर्मजिज्ञासे,,ति पूर्वमीमांसया श्रुतीरवतार्य पूर्वकाण्डगता जिज्ञास्यत्वात् । "ब्रह्म त्वं विद्धि । आत्मानं विजानीया,, इत्याद्यया च श्रुत्या परिनिष्पन्नात्मनो ब्रह्मणो निरस्तसमस्तोपासनादिविशेषस्य च श्रौततमस्य श्रुतिप्रकाण्डानवतार्योत्तरकाण्डगतान्परं जिज्ञास्यत्वात् । इतश्चानैकशास्त्र्यं पूर्वोत्तरयोर्मीमांसयोः । यच्च " सत्सन्तानप्रसूतसदाचारनिष्ठात्मगुणोपेतवेदविदाचार्योपनीतस्य व्रतनियमविशेषयुक्तस्याचार्योच्चारणानूच्चारणमक्षरराशिग्रहणफलमध्ययनमित्यवगम्यत" इत्युत्तरश्रीभाष्यस्यवचस्तदप्यसाम्प्रतम् । अर्थपारम्परीसमुदयसम्पादनार्थिनामभिप्रेतफलप्रकाण्डपर्यवेदकत्वादध्ययनप्रवृत्तेः । अत एव "विद्वान् यजतेविद्वान्याजयती,,त्यादिभिः श्रुतिभिर्विदुष एव कर्मण्यधिकारः प्रदर्श्यते।

१०९ अध्ययनन्त्वर्थावगतिपर्यवसाय्येव। न त्वक्षरराशिग्रहणमात्रमिति निरूपणम्॥

किञ्च " यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती,,ति श्रुतिरपि पुनश्छन्दोगानामतिशयितामिप्रेतार्थोपयिकयोग्यताकल्पमर्थावाप्तिविभूतिव्यापारपरायत्तमभिगमयति तराम् । इतरथा गिर इव कीराङ्गनानामापद्येरन्वाचस्ता वेदानामुपनयनोपाकर्मसंस्कारपुरस्सरमासादिता अप्युपाध्यायसकाशादादरभरैः । यद्यपि " यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छती,, त्यादितैत्तिरीयारण्यकश्रुतिरध्ययनमात्रादप्यध्येतुरध्यायादिप्रतिपाद्यमानार्थफलभागित्वं गमयति तथाप्यपौरुषेयवेदमाहिम्नैवैतावता ऽधिगन्तव्यो नत्वर्थावगतिगोचरादरावो विज्ञायताम् । तथा सति "स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा । यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचिदि,,त्याद्याः श्रुतयो ऽर्थापरिज्ञानवन्तमपुरुषार्थैकपर्यवसायिनं ननु छिन्नशाखमिव चानडुवाहं विदूषयन्तस्तद्व्यतिरेकेणार्थज्ञानवन्तं तावत्सकलश्रेयःपदपारम्परीपराधिकारितयोद्योतयति । नचेदनिन्दनं निन्दामात्रपर्यवसाय्याधीयते । अपि तु विधेयभूतार्थाधिगमप्रवर्त्तनद्वारा कृतकृत्यानेव प्रेक्षावतो विदधाति । सति चैवमक्षरराशिग्रहणफलमध्ययनमित्युक्तिः श्रीभाष्यकारस्यापार्थिका पर्यवस्यति । नो खलु पञ्चकावस्थां सत्सन्तानादिविशेषणयोग्याचार्यकर्तृकोपनयनसंस्कारकर्मीभूतत्वं माणवकस्योपपाद्यमानं निरूढप्रमाणसहमुपेयते । "उपनीय तु यः शिष्यं वेदमध्या-

वेद् द्विजः। साङ्गञ्च सरहस्यञ्च उपाध्यायः स उच्यते,,। इति स्मृतिर्हि गौतमादीनामुक्तलक्षणाक्रान्तोपाध्यायाधीनमेवाध्ययनादि माणवकस्याभिधत्ते न त्वाचार्याधीनम्। तस्य "त्वाचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमाचरते यस्माचमाचार्यं विदुर्बुधाः,,। "आचारं ग्राहयत्याचिनोत्यर्थानाचिनोति बुद्धिमिति वे" ति गौतमयास्कार्पनिर्वचनमहिम्ना विशिष्टार्थप्रशास्तृत्वमध्यवसीयते। न तावदुच्चारणानूच्चारणमात्रमेवालं विशेषणमध्ययनाय। स्वरवर्णमात्राबलादिविशिष्टविशेषणयोगित्वस्यापि तत्रावश्यकत्वात्। यथा च। तैत्तिरीयकैराम्नायते "शीक्षां व्याख्यास्यामः वर्णस्वरः मात्रा बलं साम सन्तान" इति। शिक्ष्यते वर्णाद्युच्चारणलक्षणमनयेति शिक्षा। शिक्ष्यन्ते ऽनया वर्णा इति वा। शिक्षैव शीक्षा दैर्घ्यं हि छान्दसम्। तां शीक्षां व्याख्यास्यामः विस्पष्टमासमन्तान्निरूपयिष्यामः'। चक्षिङो वा ख्याञादिष्टस्य व्याङ्पूर्वस्य व्यक्तत्वात्कर्मण एतद्रूपम्। तत्र वर्णः अकारादिः। स्वर-उदात्तादिः। मात्रा ह्रस्वाद्याः। बलं- प्रयत्नविशेषः। साम च वर्णानां मध्यमवृत्त्योच्चारणं समता। सन्तानः सन्ततिः संहितेत्यर्थः। एष ह्यध्ययनवेलायां शिक्षितव्यो ऽर्थो माणवकानाम्। न,चोच्चारणानूच्चारणमात्रादध्ययनमर्थस्सेद्धुमर्हतीति मन्तव्यम्। उच्चारणानूच्चारणयोरध्यापकाध्येतृगतयोः प्रायेण प्रामादिकत्वस्याप्यानुभविकत्वान्न तथा। एतदेवाभिप्रेत्य "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधादि" तिश्रुतिरुदाहारि शिक्षायां परमर्षिणा पाणिनिना। न "स्वाध्ययनं स्वाध्यायसंस्कारः। स्वाध्यायो ऽध्येतव्य इति स्वाध्यायस्य कर्मत्वावगमात्। संस्कारो हि नाम कार्यान्तरयोग्यताकरणम्। संस्कार्यस्त्वत्र स्वाध्यायस्य युक्तमि" ति युक्तम्। अर्थस्यास्य प्रमाणबाह्यत्वात्तथाहि। न तावत्स्वाध्यायः संस्कारकोटौ प्रवेष्टुमीष्टे। संस्कारेष्वस्य स्वपाठात्। ते हि "गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां चाष्टकापार्वणश्राद्धश्रावण्याग्रहायणीचैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्था अन्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यनिरूढपशुबन्धसौत्रामणीतिसप्तहविर्यज्ञसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थः षोडशिर्वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमसंस्था इत्येते चत्वारिंशत्संस्कारा,, इति सङ्ख्यानात्। नैतेष्वेव स्वाध्यायसंस्कारः

परिपठितः । न चाशेषार्थावबोधकस्वाध्यायस्य स्वातन्त्र्येण संस्कारता किन्न स्यादित्याशङ्कनीयम् । अस्य तु प्रमाणान्तरप्रतीतोपाकर्मसंस्कारकार्यत्वेनैवावगमात् । संस्कारः किल सकृदेव प्रयुज्यमानः सन्नियतकृत्यन्तरोत्पादनाऽऽपादको विशिष्टक्रियाविशेषः । न तु कार्यान्तरयोग्यताकरणम् । अनुमितिं प्रति कार्यात्मिकामसंस्कारभूतायां बत व्याप्तावतिव्याप्तेः । स्वाध्यायस्तु "अहरहः स्वाध्यायमधीयीत । मध्यन्दिने प्रबलमधीयीत । यूज ५ स्तिष्ठन्नासीनः शयानोऽरण्ये ग्रामे वा यावत्तरस ५ स्वाध्यायमधीत,, इत्याद्याभिस्तैत्तिरीयारण्यकादिश्रुतिभिः स्वाध्यायाध्ययनस्यान्वहमनुक्षणं च कर्तव्यतयाऽऽदरेण विहितत्वाच्च । यदि स्वाध्यायः संस्कारवर्गीयः स्यात्तर्हि सकृदेवासावुपनयनादिसंस्कारान्तरवत्सम्प्रयुक्तः स्यात् । न ह्युदीरितमानेनानुक्षणमासंस्तवविषयोऽसावाम्नसैवासंस्कारतामावहन्ममनाग्वा संस्कारपदवाच्यतां भजते । किञ्च " वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनः । कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च । गार्भैर्होमैर्जातकर्म नाम चौडोपनायनैः । स्वाध्यायैस्तर्पणैश्चैव विवाहः स्नातकव्रतैः । महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुरि,,तिस्मरणेन परं गौतमीयेन संस्कारसामान्यनिर्वचनं प्रति वेदमन्त्राणां प्रयोजकतमतया न तन्मन्त्रापरपर्यायः स्वाध्यायः स्वप्रयोज्यभूतसंस्कारपङ्क्तावर्हति प्रवेशयितुम् । अन्यथा प्रयोज्यप्रयोजकयोरनन्यतया स्वस्वभावादेवैनौ विमुच्येयाताम् । तथा चानिष्टम् । न च स्मृताविह "स्वाध्यायै,,रिति पदमस्त्येव स्वस्यापि संस्कारभावं प्रतिग्राहकमित्याशङ्कनीयम् । पदस्यास्य ब्रह्मयज्ञपारायणविशेषप्रक्रियामात्रग्राहित्वात् । तस्मादेष श्रीमाप्यार्थः प्रत्याख्येयो वेदितव्यः सहैवोक्तिभिः श्रुतप्रकाशिकाकारस्याडम्बरैकपर्यवसायिनीभिः ।

: यत्तु कर्मब्रह्ममीमांसयोराशयातिशयमजानानो दुरावेशग्रहाकारवशवर्ती सन्व्यावन्मानावलीपर्यभिषिक्तसाधनचतुष्टयाख्यं वस्तु वृत्तिवचनच्छद्मना पुनः सूत्रार्थभ्रंशनप्रवृत्तिप्रकृतिसहभाविना निराधिकीर्पुरुत्तरोत्तरमविद्यानिवर्तकं विज्ञानमखण्डार्थाद्वयमपनिनीषु"श्चैतदुक्तं भवति-ब्रह्मस्वरूपाच्छादिकाऽविद्यामूलमपारमार्थिकं भेददर्शनमेव बन्धमूलम् । बन्धश्चापारमार्थिकः स च समूलोऽपारमार्थिकत्वादेव ज्ञानेनैव निवर्त्येत,, इत्यारभ्या"तः कर्मज्ञानस्यानुपयोगादुक्तमेव साधनचतुष्टयं पूर्ववृत्तमिति वक्तव्यमि,,त्यन्तेन यथाकथञ्चित्स्वपरतत्त्वमुपन्यस्याश्नोच्यते । यदुक्तमविद्यानिवृत्तिरेव हि मोक्षः सा च ब्रह्मज्ञानादेव भवतीति तदभ्युपगम्यते । अ-

द्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीयम् । किं वा-क्याद्वाक्यार्थज्ञानमात्रम् उत तन्मूलमुपासनात्मकं ज्ञानमि,,ति स्वमतमारभमाणो विकल्प्य पुनरनूदितार्थे किञ्चिज्जगर्ज च रामानुजः श्रीभाष्ये तदेतदजाराजविजातीयचाञ्चल्यसहोदरायमाणमुपजायते तथा हि । अविद्यानिवृत्तिलक्षणो हि मोक्षो ब्रह्मविज्ञानमात्रसमधिगम्योऽभ्युपगम्यत इतीमां महतीं हि प्रतिज्ञां प्रवर्त्तयन्नयं प्रष्टव्यः किमायुष्मानेतावतैवात्मानमयं चरितार्थयत्याहो पुनर्विकलतामात्मनो वैदिकराद्धान्तरहस्यावेदनमतिमान्द्यविशेषसाक्षिणीं शमयित्वाऽपि वा । नाद्यः । अज्ञानाख्यनिग्रहस्थानदूषणगणग्रस्तत्वात् । नान्त्यः । प्रतिज्ञासंन्यासशस्त्राघातपराहतत्वात् । न तावत्परपक्षं निष्कृष्टाभिधेयसंशीलितात्मानमनवसाय लेखन्याः प्रवृत्तिः पण्डितम्मन्यस्य युज्यते जातु चित् । सोऽयं निष्कृष्टाभिधेयः प्रकृते विज्ञातोऽपि नोपात्तश्चेत्तदनुपादाननिमित्तं किमप्यन्वेषणीयं स्याद्यथायोगम् । तत्तु छलनमेवात्यन्तिकं परमाहात्म्यासहनसमाश्रयं पर्यवस्यतीति नेदं निरूपकम्मन्यस्य क्वचिदप्यात्मेच्छासमर्थनयोगयोग्युपपद्येत । प्रत्युत कथकपङ्क्तेः परिवारितव्यक्तिकोटिक एवोपनमेत । अस्तु वा तस्य नैसर्गिकमेवंजीवनम् । प्रकृते त्वज्ञतमं तमेतं प्रतिबोधयामो "ऽविद्यानिवृत्तौ स्वात्मन्यवस्थानं मोक्ष,, इति तैत्तिरीयादिभाष्यादौ भगवत्पूज्यपाददेशिकेन्द्राणां वचनामृतमापीय निजोत्सुक्यापिपासामुपशमयेरिति । नो खल्वविद्यानिवृत्त्या केवलया मोक्षं ते प्रत्यपादयन् । किन्तर्हि तन्निवृत्तिपूर्वकमात्मन्यवस्थानमात्मसाम्राज्यापरपर्यायमशेषप्रमाणराशिसमर्पितमखिलमहाभागसम्प्रार्थनीयमेवासमन्तात् । नहि प्रतिबन्धक्षयादेवाभीष्टसिद्धिः । अपि तु तत्प्रक्षयपुरस्सरमुत्तरकालीनपरिनिष्पन्नदशासमापत्तेरेव । न ह्यामयविधानिवृत्तिमात्रमारोग्येस्वास्थ्येण तन्त्रम् । अपि त्वेताभ्यो विसदृशदशासाधकसंयमसाकल्यसम्पत्तिमहिम्नैव । न हि नद्याः परतीराग्रहारमेप्सुस्तस्याः सन्तरणमात्रेणैवात्मेच्छां प्रसाधयेत् । अपि तु परतीरव्यवहिताग्रहारावाप्त्यौपयिकपरिशिष्टविशिष्टव्यापारमहिम्नैव । इतरथा घटप्रागभावमात्रविनाशादेव घटोत्पत्त्यापत्तिः स्यात् । अस्तु वा तवात्र विपरीतागमो यथाकथञ्चित् । तथाऽपि तावन्मात्रादेव तदभ्युपगमप्रकटयितुस्तद्गोचरविपर्ययप्रतीतिरनानुभविकी । न च वाच्यमभ्युदितार्थप्रतिपत्तेः स्वारसिकत्वेऽप्यन्तराद्विचारणयाकथितसाध्यार्थप्रमादनिर्मापिकया न भवितव्यमिति । तथा सत्यभ्युपगमोक्तिर्वातशाटीकजननी स्यात् । न ह्यनीकप्रकृतिको विचारकः सत्यार्थ

प्रतिपत्तुं प्रभवेम्मनागपि । न "वाऽविद्यानिवृत्तिः प्रतिबन्धनिवृत्तिः साधनाद्वि-त्वसाध्यद्वित्वनिरासोऽभिमत इत्यर्थ" इति पदं तदेतद्विवृण्वन्पुनः श्रुतप्रकाशिकाकृ-न्मूलकारमहाळन्नाग्निहीनतद्भावस्त्वकास्ति शब्दाडम्बरदुर्व्यूहे । अत एतयोरलीकार्थ-विचारणारहस्यमुद्घाटयिष्यामः ।

११० ज्ञानमेव मोक्षे हेतुर्नोपासनमिति निरूपणम्।

यत्"त्वविद्यानिवृत्तये वेदान्तवाक्यैर्विधित्सितं ज्ञानं किंरूपमिति विवेचनीय-मि„त्यालोचितं तदसाधु । प्रायशो भेदप्रकारावलम्बिप्राचीनकाण्ड-गोचरस्यानुष्ठानपरीहारशरीरस्य हि ज्ञानस्य , सविशेषत्वेप्युत्तर-काण्डप्रकाण्डगोचरस्य तु तस्य निर्विशेषतया आर्थिकत्वेन तद्वाक्यवि-हितज्ञानस्वरूपविवेचनचेष्टितन्तु वायसदन्तपरीक्षणसंकाशमेव स्यात् । अत्रैवं पर्यनुयुज्यते किं वेदानां पूर्वोत्तरकाण्डयोरितरेतरभेदं पूर्वोत्तरषट्काध्यायादिवद्वा-ऽभ्युपैषि न वेति । यदि चेत्तथा मन्त्रब्राह्मणारण्यकप्रतिपाद्यवस्त्वनुष्ठानवेलायां विशेषाश्रितस्तथा प्रथमानं नाम ज्ञानमभ्युपेयं सविशेषमेव तर्हि । तदाद्यशेषवि-शेषविहीनस्य ब्रह्मणोऽखण्डाद्वितीयस्यैव वेदान्तागमवाक्यैकगम्यत्वात्प्राचीनाशेष-प्रमेयेभ्यो विलक्षणत्वादप्रमेयस्य हि तस्य ज्ञानमप्यप्रमेयानर्थान्तराखण्डार्थमेव प-र्यवस्यत्यप्रत्यूहम् । यद्युत्तरकाण्डप्रमेयविषयस्याप्याग्रहबलात्पूर्वकाण्डविषयज्ञा-नादनन्यतां मन्यसे तदा काण्डप्रमेयप्रतिपत्त्राद्यवैलक्षण्यप्रयुक्त एव वस्तुन्यापतिते त्वाभ्युपेतभेदव्यवस्था सा दुरुपपाद्या स्यात् । न हि तावाद्विधाभ्यामेताभ्यां वि-धान्तरानुप्राणितं ज्ञानं किल किञ्चित्पश्यामो विद्यासु कासु चिद्वा येन तत्स्वरू-पपरिचिन्ता कथञ्चित्स्यात् । न च किं वाक्याद्वाक्यार्थज्ञानमात्रमिति विकल्पो विचारसहः । शक्तिलक्षणान्यतरतानिर्धारणनिदानोपपदप्रकरणविशेषबलकृम्य-सन्धानमहिम्नोपपद्यमानस्य हि वाक्यार्थस्यातोऽतिशयाप्रसक्त्या तन्मात्रगोचराशा-ङ्का वास्तवी स्यात् । वाक्याद्धि पदकदम्बकात्मन आकाङ्क्षायोग्यतासान्निध्या-दिसन्नियतसामग्रीसध्रीचीनाद्वाक्यार्थप्रतिपत्तिमविरूपामविवादम्मन्यन्ते त्रैविद्यवृद्धाः । सति चैवमुत तन्मूलकमुपासनात्मकं ज्ञानमिति विकल्पान्तरमसङ्गतं स्यात् । उपा-सनेति ज्ञानमिति च प्रख्याभेदापरपर्यायभून एकात्मना तयोर्बाधते तराम् । शब्द-योरमुयोः प्रवृत्तिनिमित्तभेदस्य तथाऽभावे गमकत्वात् । वस्तुतस्तूपासनाज्ञानयो-रितरेतरात्मत्वप्रत्याख्यानपुरस्सरमुदिताखण्डार्थज्ञानस्यैव मोक्षं प्रत्यात्यन्तिकोपायता प्रागेवेह प्रसङ्गात्सप्रमाणं निबन्धे प्रतिष्ठापिता । उपासना तु विशिष्टचेतःपरि-

पाकोत्पादकनयेदृशज्ञानोत्पत्तावन्यतमो हेतुरिति च । न च "ज्ञानं न तावद्वाक्यमननं तस्य विधानमन्तरेणापि वाक्यादेव सिद्धेः । तावन्मात्रेणाविद्यानिवृत्त्यनुपलब्धेश्चे,,ति कृतविकल्पपरीहारोऽस्ति वास्तवः। यथाभूतब्रह्मात्मैकत्वविषयज्ञानस्याचोदनातन्त्रता तत्र प्रवर्त्तकप्रमाणवचनानां ना"त्मावाऽरे द्रष्टव्य,, इत्यादीनामहेयानुपादेयवस्तुगोचराणामविद्याप्रत्युपस्थापितनैसर्गिकवाङ्मनःकायप्रवृत्तिविषयवैमुख्यैकप्रयोजनानां प्रवृत्त्यतिशयतात्पर्यपर्यवेक्षयैताद्विकल्पपरिहारयोरसङ्गतिर्यतो यतश्च ज्ञानमात्रादविद्यानिवृत्त्या " ज्ञानादेव तु कैवल्यम् । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने,,त्यादिस्मृतिभिरनेनैवाविद्यानिवृत्त्युपलब्ध्युपपत्तिः । न चैवं रूपं ज्ञानमुपासनामयमेव न मनागपि केवलं वाक्योत्थितमिति मन्तव्यम् । उपासनाद्यनेकपूर्वोपकरणोपलक्षितमप्यात्मप्रद्योतनवेलायामात्मन एवापास्तसमस्तकरणग्रामस्यात्मात्मना प्रत्ययान्तरमनापन्नस्य रूपमिति सिद्धयेज्ज्ञानाख्यं ननु सर्वोपबाधकं यस्मात् ॥

यत्तूक्तं " वासनाकार्यं भेदज्ञानं छिन्नमूलमथवाऽनुवर्त्तेत इति बालिशाभाषितम् । द्विचन्द्रज्ञानादौ तु बाधकसन्निधावपि मिथ्याज्ञानहेतोः पारमार्थतिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानिवृत्तिरविरुद्धा प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्त्तते । अपि च भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्तद्विरुद्धभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेः । अतो वाक्यार्थज्ञानादन्यदेव ध्यानोपासनादिशब्दवाच्यं ज्ञानं वेदान्तवाक्यैर्विधित्सितमि,,ति । तत्तुच्छम् । दुर्मतमतिविभ्रमप्रणालीविगर्हितत्वात्कीर्त्तनस्यास्य यथोद्देशम् । यद्यद्वैतविद्यासु सुशिक्षितात्मा स्यादज्ञानविजृम्भितमेवं निश्शङ्कमावक्ष्यत् । अवोचच्चासावसिद्धान्तवस्तुजातमिति तदसौ यथार्हं शिक्षयितव्यः श्रीमात् । भेदज्ञानं हि जायमानं कस्माज्जन्यत, इति सन्देहे वासना एव व्यक्तत्त्वार्थे । नो खलु नर्त्ते वासना नानाकारास्तास्तत्तज्जनन्यो मानानुभवाभ्यामवधार्यन्ते । जायमानन्तदेतद्वासनाः पुनर्मानआकारिगोचरं भेदज्ञानं कस्य चिदुपजायते । वासनाः खल्वेताः स्वतो सीरवगमयति तदात्मनो विशदाविशदप्रतीतिमागन्वर्थम् । वासनाः खल्वेताः स्वतो वाऽप परतो वा प्रथन्त इति जिज्ञासायामनेकात्मनाममूषामेकात्मना कया चिद्भवितव्यं मूलव्यक्त्या । सा तुज्जृम्भते यावद्यन्नाप्येति च तावदेवात्मसन्तानं ता-

स्व
वत्स्वरूपानुरूपं प्रत्याययत्यतिविशदम् । तच्चाज्ञानमित्यविद्येति च मायेति शब्दप्रत्ययभागम्यते । ज्ञानेन तस्मिन्नस्वरूपं याते तत्सन्तानभूतवासनाः पुनर्भेदो भयबन्धनादिसन्धानात्मा न काप्यवतिष्ठेदित्यनुव्यवहारं बाह्यव्यवहारकुशलैरप्यवधार्यमाण"मथवाऽनुवर्त्तेत,, इति त्वोद्भावितदूषणार्हं न स्यादेव कदाचिद्वा । न च नाहमेवं ब्रवीम्यपि त्वनुवदाम्यर्थमेव तावकीनमिति वाच्यम् । अस्मद्वैदिकराद्धान्तानभिज्ञतरत्वेनानुवदनं वा तावकीन भर्त्सनापात्रं किन्न स्यात्सति चैवं बालिशभाषितमिति ब्रुवाणो योग्य एवासि तद्योनेर्मुहुर्मुहुः । न हि द्विचन्द्रज्ञानादौ मिथ्याज्ञाननिदानतिमिरादेरागन्तुकस्य परमार्थतोपपद्यते । न हीदं त्वत्समयानुसारेण व्यावहारिकसत्यतामापद्यत एवेति वा युक्तिर्युक्ता । राद्धान्ते किलास्माकीने नानाभावविरहितस्वात्मन एव वस्तुनः परमार्थत्वाभ्युपगमे तद्गोचरमेव ज्ञानं वास्तवं पर्यवस्यति । यथा च " न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थते,,ति समामनन्ति पैङ्गलाः । न च "तिमिरादिदोषस्य ज्ञानबाध्यत्वाभावेनाविनष्टत्वान्मिथ्याज्ञानानिवृत्तिरविरुद्धे,,ति वचो वास्तवम् । पूर्वोत्तरकालयोरस्यास्तित्वभावितावुद्धेरनुदयस्यैवाविघ्नं बाध्यतायां नियामकतया विनष्टविषयप्रतीत्याऽऽश्रितया च मिथ्याज्ञाननिवृत्तेरेवाविरुद्धत्वात् । मा त्वं " प्रबलप्रमाणबाधितत्वेन भयादिकार्यन्तु निवर्त्तेत,, इति जानीयाः । कारणानिवृत्तौ कार्यावस्थितेर्घूऽयस्यैव सन्नियमात् । एतेन रज्जुसर्पभ्रान्तिमत्पुरुषापेक्षया भयादिकार्यनिवृत्तिरित्याद्युक्तिः श्रुतप्रकाशिकाकृतोऽपि प्रत्युक्ता वेदितव्या ।

यत्तु " भेदवासनानिरसनद्वारेण ज्ञानोत्पत्तिमभ्युपगच्छतां कदाचिदपि ज्ञानोत्पत्तिर्न सेत्स्यति भेदवासनाया अनादिकालोपचितत्वेनापरिमितत्वात्तद्विरुद्धभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेरि"त्युक्तं तदवद्यम् । नो खलु भेदवासनाया अनादिकालोपचितत्वापरिमितत्वे ज्ञानानुत्पत्तौ तन्त्रम् । अनादिकालोपचितत्वापरिमितत्वाभ्यां नाम धर्माभ्यामभ्युपेतस्यापि शालिधासीमहाकूटस्य कणमात्रसंयोजनादेव वैश्वानरस्य क्षणमात्रेण भस्मसात्करणमुपपद्यते यतः । वासनैव " वज्रं वज्रेण भिद्यत,, इति न्यायाद्वासनाया अस्त्यपबाधिका । शुभाऽशुभयोर्हि वासनयोर्ज्ञानाज्ञानजन्ययोरनादिकालप्रवृत्तयोरप्यन्ते यात्वा बाध्यबाधकभावो भवत्येवातुल्यबलतया । केयाऽत्र बाधिका कैया वा बाध्येति चिन्तायां शुभैव नाधिका बाध्या पुनरशुभेति प्रमाणमर्वस्वादवगच्छामो निरपायम् । यथाचाम्नायते

"शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् । पौरुषेण प्रयत्नेन योजनीया शुभे पथि । अशुभेषु समाविष्टां शुभेष्वेवावतारयेदि,,त्युपनिषदि हि मुक्तिकायाम् । उपदेशा अप्यननुज्ञापरिहारात्मानो "मित्रमुपसेवितव्यम्। शत्रुः परिहर्त्तव्यः । ऋतौ भार्यामुपेयात् । गुर्वङ्गनां नोपगच्छे" दित्येवंरूपा व्यावर्त्त्यैव दुर्वासनाभ्यश्शोभनवासनास्वेव प्रवर्त्तयन्त्यभ्युदयवाञ्छिनो वत्सलतया । व्यावृत्तिर्हि दुर्वासनाभ्यस्ताद्विकृतप्रचारणानिरामप्रकर्षाभ्यासपूर्वकशोभनवासनापरापूर्वभूते वस्तुस्थित्या निरुक्तप्रक्रियाविभागाभागिनि ज्ञान एवाभ्युदययातनासन्तानातीते सन्निष्ठा । तद्बलादेव दिदासितात्मनां भेदवासनानिरसनमनायासम् । यथा चाम्नात-"मध्यात्मविद्याऽधिगमः साधुसङ्गतिरेव च । वासनासम्परित्यागः प्राणस्पन्दनिरोधनम् । एतास्ता युक्तयः पुष्टाः सन्त्यविद्याजये किले" त्यादिकं तत्रैव। दशायां तर्हि तादृश्यां ज्ञानोत्पत्तिराञ्जसी । यदप्युक्तं "तद्विरुद्धभावनायाश्चाल्पत्वादनया तन्निरासानुपपत्तेरि"ति । तदप्यसत् । कृतसुकृतातिशयानामुक्तगत्या तद्विरुद्धभावनाऽभ्युच्चयप्रकृतिकत्वात्तन्निरासः करतलबदरमिवोपजायते । न चाथापि वासनानिर्मोचनमसम्पाद्यमेवेति शङ्कयम् । दुष्प्राप्यस्याप्यस्य यत्नतः सम्पादनीयतायामेवादेशविशेषाणां प्रवृत्तेः । यथा च श्रूयते "लोकवासनया जन्तोः शास्त्रवासनया ऽपि च । देहवासनया ज्ञानं यथावन्नैव जायत "इति । एवञ्च समस्तश्रेयःपदप्रतिपन्थिनी तावद्वासनामदूरीकुर्वन्मानवाधमः शिष्य एवाभवन् श्रुतिशास्त्र्या नार्हत्येव सुतरां श्रौतपदवीम् । अतो ध्यानोपासनादिशब्दवाच्याद्वस्तुनो महावाक्यजन्यं ज्ञानमुन्मृदिताशेषविशेषप्रक्रियमध्यवस्यामो वासनानिरासपूर्वकं मोक्षलक्ष्मीनिदानमाम्नानात् । नातः परतरं ज्ञानं वेदान्तवाक्यैर्विधित्सितं न्याय्यं मन्यामहे यतस्तत्र खण्डनयुक्तयो निरुपचारं प्रगल्भन्ते नित्यशः ।

यदप्युच्यते "ज्ञानं तु ध्यानोपासनादिशब्दवाच्यमित्यत्र विज्ञाय प्रज्ञां कुर्वीत । अनुविद्य विजानाति । ओमित्येवात्मानं ध्यायथ । निचाय्य तं मृत्युमुखात्प्रमुच्यत"इति श्रुतीरुदाहृत्य "निदिध्यासितव्य" इत्यादिनैकार्थ्यो " दनुविद्य विजानाती" त्येवमादिवाक्यार्थज्ञानस्य ध्यानोपकारकत्वाद्ध्यानमेव विधीयत,,इति तदप्युच्यते । ध्यानोपासनादिशब्दवाच्यं वस्त्वभ्युक्तज्ञानाभ्युपायभूतमेवेति । ध्यानोपासनयोर्नाम क्रिययोर्मानस्योः स्वोच्छ्रितगतिमत्तामाजुषनोर्ज्ञानं प्रत्येव निदिध्यासनकालीनानिशमितापूर्वभूतं तावदन्तरङ्गोपायताऽनिरिक्तभावाभागित्वात् । न

हि प्रत्ययैकतानताऽलक्षणं ननु ध्यानमसङ्कीर्णतुल्यप्रत्ययसन्तत्यात्मापोपास्तिः परि-
निष्पन्नब्रह्मस्वरूपानन्यज्ञानं निजप्रयोजकभावेनानुयोक्तुं क्षमेते । न च ब्रह्मावित्प-
रिनिष्पन्नप्रज्ञाप्रकर्षैकगम्याखण्डार्था हि धीर्महावाक्यकामदुघामात्रगम्यमाना लौ-
किकालौकिकवाक्यान्तरजायमानमतिमात्रसमानेति मन्तव्यम् । तथा सति सूनृतो-
क्तयश्लीलोक्त्योरनुग्रहाभिशापोक्त्योश्चोक्तित्वसामान्याद्विरूपवाक्यार्थापत्तिरपरि-
हार्या स्यात् । न चेह वाक्येतरार्थज्ञानवन्महावाक्यज्ञानमपि परोक्षमेवेति मन्तव्यम् ।
तस्य तु नित्यशो निराकारज्ञानवतां नो नूनमत्यन्तापरोक्षत्वात् । न हि निर्विशेष-
ज्ञानानुभववद्युष्माकमस्माकं सविशेषविषय एवास्त्यनुभवो विजातीय इत्युपपद्यते ।
सविशेषनिर्विशेषयोः प्रवृत्तिनिवृत्त्योरिवाज्ञानज्ञानयोरिव पूर्वोत्तरभावितायाः क्लृप्तत्वे
प्रवृत्तिं पूर्वभाविनीमपेक्ष्य प्रतियोगिनीं पुनर्व्युदस्यां निवृत्तिरेवोत्तरकालभाविनी नि-
रपवदनीया वननीया पुनरेकान्तमतीनाम् । अज्ञानं किल पूर्वभाव्यपेक्ष्योत्तरकालभाविश्रे-
यःपरम्पराप्रसवमभ्यात्तविप्लवविशेषप्लावकमिव ज्ञानं सगुणं हन्त स्वाभाविकव्यवहा-
रास्पदमशान्तिविशेषप्रदमतिलङ्घनीययोग्यताकमपेक्ष्य निर्गुणमेव निर्मृष्टनानाव्यवहा-
रमाभिप्रार्थ्यनिस्सीमशान्तिसुधापयोनिधिमखण्डसत्तासहस्ररश्मिप्रभाभासमानमाद्रिय-
न्ते ब्रह्म ब्रह्मण्याः समस्ताः । ननु जातु सविशेषमर्वाचीनम् । प्रागेव तैरेतैस्तरफल-
तव्यवहाराणां सीम्नो ऽनुभूतत्वात् । यथाहुः संक्षेपशारीरकाचार्याः " निर्विक-
ल्पं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैरि-
ति । आम्नायते च " दर्शनादर्शने हित्वा स्वयं केवलरूपतः । य आस्ते कपि-
शार्दूलब्रह्मैवासौ न ब्रह्मविदि "त्युपनिषदि मुक्तिकायाम् । तस्मान्निर्गुणमेव ज्ञान-
मिह विवक्षितम् । न मनागपि सगुणध्यानमुपासनं वेति स्थिते महाब्राह्मण इव म-
हावाक्यमिपुक्तिरपस्माराध्यामयोपभूपिराशीसितात्मनः कस्य चिद्विवानाभिप्रपद्य प्र-
त्याख्याता वेदितव्या । ननु "वक्ष्यति चावृत्तिरसकृदुपदेशादिति तदिदमपवर्गोपा-
यतया विधित्सितं वेदनमुपासनमित्यवगम्यत इत्युत्तरश्रीभाष्यादुपासनस्यैव सिद्धा-
वुदितज्ञानममान्यमि" ति चेन्नैवम् । ब्रह्मसूत्राद्मुष्मा " दात्मावाऽरे द्रष्टव्यः श्रोत-
व्य" इत्यादिविषयवाक्यकाच्छ्रवणादीनामेवावृत्तेरवगमे सूत्रे पुनरुपासनपदात्यन्ताभा-
वे श्रवणाद्यात्यन्तिकोपायपरिलब्धयथाभूतात्मैकत्वाविज्ञानमभ्यार्हिततममसंगृह्य त-
स्माद्वात्यतरोपासनायाश्चासूत्राक्षरतात्पर्यविषयायाः परिग्रहस्यान्याय्यात् । न त्व-
नुपासनाप्रकरणे वेदनपदमुपासनापरमुपेयम् । अर्थयोः साङ्कर्यापत्तेर्दुरुद्धरत्वात् ।

न चोपासनमनपवर्गोपायमुपायतया तत्र प्रवेशमाधत्ते । धृतातिशयितोपायभावाया अत्रोदीरितप्रज्ञायाः किल विकोपापत्तेः । न चोपासनायां नाम स्थूलमत्याऽपि प्रयोगयोग्यतायामपेक्षा आवृत्तेरुपजायते । तस्याः किलाण्वन्तार्थयोगयोगित्वेनैवार्थवत्त्वात् । न च "विद्युपास्त्योर्व्यतिकरेणोपक्रमोपसंहारदर्शनात्मनोब्रह्मेत्युपासीत भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद" इत्यादिस्थलविभेदपरिग्रहबलाद्वा ज्ञानमुपासनमेवेत्युपालम्भनीयम् । उपासनारूपस्यापेक्षबाह्यप्रक्रियायामप्यावृत्तिभूयस्त्वमपेक्ष्याभ्यन्तरतमतत्वप्रकाण्डे गुहाहितत्वादिमाहात्म्यमहाधामनि महाभागशीर्षण्यसूक्ष्मतमशेमुषीसुधारश्म्यैकवेद्ये श्रवणाद्यावृत्तेः परमाभ्यर्हितत्वात् । न ह्युपासनायामेवंविधावृत्त्युपदेशो योगयोग्यः । विजातीयप्रत्ययप्रवाहानन्तरितसजातीयप्रत्ययप्रवाहलक्षणायाः स्वस्या एव तदात्मकत्वात् । न ह्यतदात्मा तदात्मतासिद्धिसम्पादिनीं नाम सम्भारधारामधिगन्तुमभ्युत्सहते । न वा स्वयं स्वेतरस्वरूपौपयिकप्रक्रियामुपादाय वस्तुत आधिक्यमुपादत्ते व्यक्तिरभ्यूहिता । नाप्यभ्यूहवन्तो निजाभीप्सां चरितार्थीकुर्युः । एवञ्चाभ्यूहाभ्यूहादिप्रकारा व्यग्रतरा एव पर्यवस्येयुर्यथोदितधीसाम्राज्यपरिचिन्तयेति कृतमुपासनागोचरकुकल्पनाभिः ॥

इति वेदान्तानामुपासनं नार्थः किन्तु ज्ञानमेव तेषां परमार्थ इति व्यवस्थापनम् ॥

ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति श्रुतौ वेदनस्य ध्यानरूपस्याहरहरनुष्ठीयमानस्याभ्यासाधेयातिशयस्याप्रायणादनुवर्तमानस्य ब्रह्मप्राप्तिसाधनत्वात्तदुत्पत्तये सर्वाण्याश्रमकर्माणि यावज्जीवमनुष्ठेयानी"ति श्रीभाष्योद्ध्यानापरपर्यायमुपासनमेव सिद्ध्यति । मैवम् । 'विदन्तान' इत्यस्य "द्विविदिषन्ती"त्यत्र ज्ञानापरपर्यायस्यैव वेदनस्य व्यक्तत्वे तदवाप्तिप्रयोजकयज्ञादीनामेव महोपास्तेरवान्तरात्मनयाऽवैदिकविष्णूपास्तेः श्रीशिवादिदेवतावैमनस्यसम्भ्रान्ताया एकदेशतराया अकार्यकारित्वात् । यज्ञादीनि त्वशेषदेवतास्वरूपौपयिकनिरवच्छिन्नात्मसत्तासमापत्त्याधायकविशिष्टोपासनां नूनमभिनयन्ति । न तु जातु श्रीभाष्यकारिनामत्वरामुपासिं विष्टरश्रवसः । इतरथा देवतान्तरोपास्तेरप्येतरस्वरूपानुरूपाया हन्तापत्तेः । यदुच्यते "वाक्यका-

१११ ज्ञानस्यैव कैवल्यसाधनत्वे प्रागपि ब्रह्मजिज्ञासायाः समनन्तरञ्च साधनचतुष्टयसम्पत्तिरुपपद्यत एवेति सदृष्टान्तमुपवर्णनम् ।

रथ ध्रुवानुस्मृतेर्विवेकादिभ्य एव निष्पत्तिमाह तल्लब्धेर्विवेकविमोकाभ्यासक्रिया-कल्याणानवसादानुद्धर्षेभ्यः सम्भवान्निर्वचनाच्चेती''ति तत्रप्युच्यते ध्रुवानुस्मृतिः संस्कारप्रकर्षलभ्येति । विवेकादीनां निष्कृष्टानुभूतावुपयोगित्वेऽपि ध्रुवानुस्मृतेर्निष्पत्तावन्यथासिद्धत्वात् । " विवेकादिभ्य एव न तु केवलकर्मणा केवलशमादिना चेत्यर्थ '' इति विवृण्वञ् श्रुतप्रकाशिकाकारोऽपि प्रममाद । शमदमाद्यात्मनः कर्मण आत्यन्तिकविवेकावश्योत्पत्तिमत्तया तद्धेतुभूतस्य हि तस्य निषेधानुपपत्तेः सदाचारयमनियमादेः पूर्वतरभूमिकासमारोहयोग्यतासमापादकादेव ध्रुवानुस्मृतिपर्यन्तगतिमत्त्वोपपत्तौ विवेकविमोकाभ्यासक्रियाकल्याणादेः परिकीर्त्तनस्यानावश्यकत्वात् । इतरथा प्रागुपनयनात्कामचारवादभक्षताविनिवृत्तिपर्यन्तप्रवृत्तेराश्रयितव्यत्वापत्तेः । यदपि "जात्याश्रयनिमित्तदुष्टादन्नात्कायशुद्धिर्विवेक इत्यत्र निर्वचनम् । आहारशुद्धौ सत्वशुद्धि· सत्वशुद्धौ ध्रुवा स्मृतिरि,,त्याद्युपवर्णनमुपदर्शितं तदपि प्राक्कालीनस्वाचारशिक्षणादेव शिक्षिततया "नाथातो ब्रह्मजिज्ञासे,,ति सूत्रव्याख्यानावसरे प्रसङ्गमापाद्यापीह व्याख्येयम् । यदप्येतदुक्तं "निर्वचनविमोकाभ्यासादिकमुदाहृतं भाष्यकारेणे,,ति तदप्यनादेयपरिभाषाविषयतया नोदाहार्यम् । न हि "पूर्वोपात्तनिर्वचनान्यपि द्रमिडभाष्योक्तानीति ज्ञायत,, इति श्रुतप्रकाशिकोक्तिर्वाऽत्र वास्तवी । गुहदेवद्रमिडादीनां भाष्यादिप्रणेतृतया द्रविडशिष्टेष्वप्यत्यन्ताप्रसिद्धेः । वस्तुतस्तु द्रमिडादीनि तु नामानि तद्देशीयपूर्वोत्तरभणालीसमालोचनया प्रतारकजनालीपरिकल्पितानीति विज्ञायन्ते विचारणापटुभिः ।

यच्चाप्युक्त"मविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुत,, इति श्रुतावविद्याशब्दाभिहितं वर्णाश्रमविहितं कर्म अविद्यया कर्मणा मृत्युं ज्ञानोत्पत्तिविरोधिप्राचीनं कर्म तीर्त्वा अपोह्य विद्यया ज्ञानेनामृत्युं ब्रह्माश्नुते प्राप्नोतीत्यर्थ'' इति तच्चाप्यपार्थम् । न ह्यविद्यापदाभिधेयं भवत्यत्र वर्णाश्रमविहितं कर्म । अग्निहोत्राद्यतिरिक्तस्य हि शमदमाहिंसाध्यानधारणाद्यात्मन इतराश्रमसम्पन्नस्यापि तद्विधारसनारूढस्य तत्पदैकवेद्यत्वात् । न हि मृत्युपदं ज्ञानोत्पत्तिविरोधिप्राचीनं कर्मेति विवरणमर्हति । प्रत्यगात्मस्वरूपभूतस्य हि ज्ञानस्य कर्मोज्जृम्भणदशायामप्यनपायान्नास्योत्पत्तिर्न वा प्राचीनत्वं कर्मणो वस्तुवृत्त्या । सति प्राचीनत्वेऽर्वाचीनत्वस्याप्यापत्तेः । ताभ्यामेव हि धर्माभ्यां कर्मणो नित्यत्वापत्त्या तु-

स्वबलतया कर्मज्ञानयोर्बाध्यबाधकभावाभावापत्तेरुपपत्तेः । न हि 'तीर्त्वा' पदम-
पेक्षेति विवरणमर्हति । स्वापलापवेलायामपि स्वरूपानपायशीलिन्येवापोहपदप्र-
योगात् । अतिक्रम्येति त्वारोपितसम्बन्धसामान्यविधुरत्वात्मकमुचितन्ननु विवर-
णं यथायोगम् । न हि पुन"र्विद्ययाऽमृतमश्नुत" इत्युत्तरार्द्धे ज्ञानेनैव सविशे-
षेण ब्रह्म प्राप्नोतीत्यर्थविभेदमाधातुमीष्टे । अखण्डार्थज्ञानस्यैव निर्विशेषब्रह्मात्म-
प्रतिपत्त्यभ्युपायभूतत्वात् । समुच्चयगत्या तु विद्यया विष्ण्वाद्युपास्यदेवताज्ञा-
नेनामृतं देवतात्मभावं प्राप्नोतीत्येष एवार्थो युज्यते । "विद्यां चाविद्याञ्च यस्त-
द्वेदोभयं सह"ति पूर्वार्द्धेन समुच्चयकारिण एवैकपुरुषार्थसम्बन्धः क्रमेण तयो-
र्निर्दिष्टत्वात् । न चैवम्भूतोपास्यदेवताज्ञानलक्षणा हि विद्या बतात्यन्तिकमृत्युत-
रणोपायतयाऽभिधीयते । अवान्तरापत्त्यपोहनद्वारेण विशिष्टलोकदेवताधात्सिङ्-
लक्षणस्यैव हि फलस्य तस्याः सम्प्रतीयमानत्वात् । अन्यथा "सूर्यद्वारेण ते वि-
रजाः प्रयान्ति । अर्चिभिर्वो यानेर्वे,,त्यादिश्रुतीनां व्याकोपापत्तेः । एतादृशवि-
द्यायाः सकाशादभिन्नात्मनः कर्मणः सन्निहितस्वभावभावितया विधेनरादिहितं क-
र्मेति विवेकावेदनं तयोर्नोपयुज्यते । न वा "इयाज सोऽपि सुबहून् यज्ञाञ्ज्ञा-
नव्यपाश्रयः । ब्रह्मविद्यामधिष्ठाय तर्त्तुं मृत्युरविद्यये,,त्युदाहरणं वा स्मृतेः प्र-
कृतार्थमभिव्यञ्जयति । वचनव्यक्तेरेतस्या अभ्युक्तापास्तसमस्तविशेषस्यैव हि
ब्रह्मणोऽपासिकविधाविशेषातिगस्य फलाभिसन्धिसन्धानहीनोदीरितयज्ञाद्यनुष्ठानस-
व्यपेक्षमात्मविद्याया एव प्रत्यायकत्वात् । न च ज्ञानोत्पत्तिहेतुभूतशुद्धसत्ववि-
रोधिरजस्तमोविवृद्धिद्वारेण पापस्य च ज्ञानोत्पत्तिविरोधित्वमेष एवासाधुकर्म कार-
यति तं यमधो निनीषतीति श्रुत्यावगम्यते,, इतिकथनमुपपद्यते । पुण्यपापयोर्वा
ज्ञानं प्रति तयोः साधकबाधकभावस्य वा तयोर्नियमनकर्तृगोचरजिज्ञासाया वा-
ऽत्राप्रस्तुतत्वात् । सत्यामपि तस्यां श्रीभाष्याभ्युपेतज्ञानोत्पत्तिं प्रत्यविरोधित्व-
मेवास्ति हि पापस्य । "योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन
न कृतं पापं चोरेणात्मापहारिणे,,ति श्रुत्यवहेलितविपरीतज्ञानाभ्युपगमस्य पाप्म-
भ्योऽविशेषात् । इदमेव हन्तासाधु कर्म यस्मिन्नस्य कर्तृत्वमन्तर्यामिणः कार-
यितृत्वमधो निनीषाविशेषसम्प्रयुक्तमभिशोभते । नो खलु रजस्तमोविवृद्धिमूते
"नमस्ताराय नमः शम्भवे च मयोभवे च । आराधयेन्महेशानं महादेवं
महेश्वरम् । नमस्कुर्यान्महादेवमभृतं परमेश्वर,,मित्यादिमन्त्रवर्णन्यासवर्णमहीकृतम-

ईश्वरस्य सर्वात्मनो भक्तिध्यानप्रणिधानाद्यनुष्ठानाद्वैमुख्यमुपजायते। नातः परतरं पापं "मत्प्रियःशङ्करद्वेषी मद्द्वेषी शङ्करप्रियः। तावुभौ नरकं यातो यावच्चन्द्रदिवाकरावि,,ति स्मृतिवन्दितहराराधनपराङ्मुखानां किं स्यात्। वस्तुतस्तु "कर्मोदये कर्मफलानुरागास्तथानुयन्ति न तरन्ति मृत्युम्। ज्ञानेन विद्वांस्तेन अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्था। यज्ञैर्देवत्वंप्राप्नोति तपोभिर्ब्रह्मणः पदम्। दानेन विविधान् भोगाञ्ज्ञानेन मोक्षमाप्नुयात्। धर्मरज्ज्वा व्रजेदूर्ध्वं पापरज्ज्वा व्रजेदधः। द्वयं ज्ञानासिना छित्वा विदेहः शान्तिमृच्छति। त्यज धर्ममधर्मञ्च उभे सत्यानृते त्यज। उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यजे,,तिश्रुतिस्मृतिविरोधात्कर्मणां बन्धहेतुतानिरूपणपुरस्सरमात्मज्ञानस्यैव मोक्षान्तरङ्गोपायताऽधिगम्यते। यदि मोक्षः कर्मादिसाधनश्चतुर्विधक्रियान्तरभावादनित्यः स्यात्। यत्कृतकं तदनित्यमिति व्याप्त्या कर्मादिसाध्यमनित्यमेव निश्चीयते। मोक्षस्तु नित्य इष्यते। मोक्षावाप्तौ पापकर्मैव पुण्यकर्मापि बन्धनमूलतयाऽधिगम्यते। पुण्यत्वेन च पापत्वेनोपादेयताऽनुपादेयतालक्षणभूयोवैषम्यदर्शनेऽपि कर्मत्वेन च रूपेणाविशेषप्रतीत्याऽभिन्ना साम्यमेव बन्धने पुण्यस्यापि फलतो जागरूयेनिवार्यं यतः। अत एव निर्विशेषब्रह्मविद्यायामुभयोः पुण्यापुण्ययोर्हानमविशेषेण अभ्यनुज्ञायते। यथा च"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशादि,,त्यसूत्रयदत्रभवद्बादरायणाचार्यः।

यच्चाप्येतदुक्तं "तदेव ब्रह्मप्राप्तिसाधनं ज्ञानं सर्वाश्रमकर्मापेक्षं अतोऽपेक्षितकर्मस्वरूपज्ञान केवलकर्मणामल्पास्थिरफलत्वज्ञानञ्च कर्ममीमांसावसेयमिति सैवापेक्षिताब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्ये,,ति तच्चाप्यसत्। न तावज्ज्ञानं ब्रह्मप्राप्तिसाधनं सर्वाश्रमकर्मापेक्षमुपपद्यते। सर्वाश्रमकर्मणामानन्त्यात्सामस्त्येन तेषामनुष्ठानाशक्तौ ज्ञानस्यैवासिद्धया ब्रह्मप्राप्तौ साधनभावमेव तदेतन्नोपेयात्। कृतकर्मणामपि केषाञ्चित्तत्त्वजिज्ञासा ज्ञाने विद्वेषविशेष आलक्ष्यते। अकृतकर्मणामप्यन्येषां ज्ञानोदयो निश्चीयते। न चैषां प्रकृतप्रतिबन्धप्राचीनानुष्ठानलक्षणो हेतुर्दर्शनीयः। तस्य हि परोक्षतया प्रत्यक्षानुभूतिलक्षणकर्माचरणापलापानर्हत्वात्। नो खलु कर्ममीमाँसायाः सन्नियतकर्मस्वरूपज्ञानप्रदायित्वेऽपि केवलकर्मणामल्पास्थिरफलत्वज्ञानसम्पादकता वास्तवी स्यात्। स्वस्या एवाल्पास्थिरफलत्वज्ञाने प्रेक्षावतां प्रवृत्तिरेव स्वस्यां न स्यात। न चोत्साहभञ्जकाल्पास्थिरज्ञानदायि-

न्यर्थेऽनुपस्थितफलभावितात्मानः पुनरुत्साहशालिनो वर्त्तेरन् । न चाप्येवमनुष्ठानवेलायाममावेऽप्यन्ते स चासावस्याः परिणाम कर्ममीमाँसाया इति मन्तव्यम् । अन्तिमपरिपाकस्यानिष्टात्मन आदिमप्रवृत्त्यप्रयोजकत्वात् । न तदिदं ज्ञानं कर्ममीमांसात्वसेयं स्यात् । तस्मान्न "सैवापेक्षिता ब्रह्ममीमांसायाः पूर्ववृत्ता वक्तव्या । सैव या त्वया निरुद्धेति निरस्ता सैवेत्यर्थ,, इतिश्रीभाष्यश्रुतप्रकाशिकोक्ती शङ्कतोऽर्थतश्च प्रत्याख्याते वेदितव्ये । अनृतेऽर्थेनृतप्रतिज्ञायास्तयोरतिरस्कारानर्हत्वात् ।

अथा''प्यपि च नित्यानित्यवस्तुविवेकादयश्च मीमाँसाश्रवणमन्तरेण न सम्पत्स्यन्ते फलकरणेतिकर्त्तव्यताधिकारिविशेषनिश्चयादृते कर्मस्वरूपतत्फलतत्स्थिरत्वास्थिरत्वात्मनित्यत्वादीनां दुरवबोधत्वादि,,ति श्रीभाष्यकृत्प्रत्यवतिष्ठते युक्त्याभासैः पुनः श्रुतप्रकाशिकाकार. । तदेतदपरे न क्षमन्ते तथा हि । मीमाँसाश्रवणप्रयुक्ता एव नित्यानित्यवस्तुविवेकादय इति यदभ्युपेयं किं तत्तथाऽनभ्युपगच्छन्तो विवेकादीनेव नाप्नुयुराहोस्विदासादिता अप्यमी स्वरूपसाकल्ये वैकल्यकोलीमवनविभेददूषिता इति । नाद्य. । पूर्वोत्तरमीमाँसयोरसम्प्रत्यकृतश्रवणानामपि शुकाचार्यपुरोगमानां जनिमात्रादेव नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयसम्पत्तेः परिपूर्णाया उपपत्ते. "शुकस्तु मारुताच्छीघ्रां गतिं कृत्वाऽन्तरिक्षगः । दर्शयित्वा प्रभावं स्वं सर्वभूतगतोऽभवदि,,त्यादिविशिष्टवचनेभ्यो भारतादिगतेभ्यस्तस्य सिद्धत्वावगमात् । वामदेवस्य तु परमर्षे"र्गर्भे एव तु शयानो वामदेव एवमुवाचे,,ति श्रुत्या तत्सम्पत्तेरतिशयितत्वाच्च । नान्त्यः । प्राग्भवीयसंस्कारविशेषयोनीनाममीषां विवेकादिस्वरूपसाकल्ये वैकल्यापादकसामग्रीगृहीतशङ्काया एव प्रापशोऽनुदयात् । सत्यप्येवमुत्तरकालीनब्रह्ममीमांसाविचारणावशंवदकरणत्रयसम्प्रवृत्तेरनन्यनिष्ठाया अहानिः । हानिर्हन्तान्यथावृत्तावेवोत्तरकालम् । कृतमीमांसाश्रवणानामपि विजातीयसमाचारसमाकृष्टमानसानां नित्यानित्यवस्तुविवेकाद्यनुत्पत्त्याँ भूयसामुपलम्भेनोभयतो व्यभिचारात् । एवञ्च विवेकाद्युदयं प्रति मीमांसाश्रवणत्वावच्छिन्नस्य हेतुता न सार्वत्रिकी । क्वाचित्की किन्त्वसौ न मानेनात्मीयेनाशेषानेवाधिकारिणोऽविशेषेण व्यापारयितुमीष्टे । न चासावधिकृतजनानामसम्भवदोष एवेति वाच्यम् । अधिकृतमानवमतिवैचित्र्यमनुपमृध निजशासनं यथार्थयन्त्या ननु शास्त्रव्यक्त्या _नियतानियतव्यवस्थावदधिकारिसमुद्धारहेतवे

नित्यानित्यवस्तुविवेकादय एवाञ्जसाऽभिप्रेयन्ते पूर्ववृत्ततया । न मनागपि कर्मस्वरूपतदस्थिरफलत्वज्ञाने । तयोस्तावत्तावत्येव रूपे पर्यवसानात् । न हि फलकरणादिविशेषनिश्चयमृते कर्मस्वरूपादीनां दुरवबोधत्वमैकान्तिकम् । मानैकमितेऽर्थे प्रमातृसन्देहसम्भवेऽपि मेयतत्वव्यवस्थानस्थानपायात् । यद्यप्यलोकसिद्धार्थावगतिहेतव एव प्रवृत्तिः शास्त्रस्येष्यते तथाऽपि लौकिकालौकिकमतिविभेदाकलिताभिधेयप्रतिनियतपौर्वापर्यसन्धारणामुपजीव्योपजीवकभावपरिग्रहप्रसादशालिनीममन्दिरवाविपर्ययस्तप्रयोगकलिनीमुपादत्ते सौत्रो नन्तयशब्दः साटोपम् । न ह्यायुर्वेदस्याधीतिमृतेऽप्यौषधसेवनेनात्मनो जाड्यं प्रतिहन्यामिति विवेकादयो हि रुग्णस्य स्वस्वेतरानुभूत्यारूढा अपह्नोतुं पार्यन्ते । न वा तेनोत्तरकालं परिपाल्यिष्यमाणपथ्यादिविशेषा "आरोग्यकामः पथ्यमश्नीयादि"ति शास्त्रमश्रुतवताऽप्यमान्या वा अनिष्टजननाः सुस्थात्मभिरभिप्रेयन्ते । नो खल्वशनायापिपासाभ्यामाकुलितात्मानो हन्ताभेकगणाः प्रसविष्याद्युपदेशमन्तराऽप्याम्नसैवाभ्युदिताभ्यवहारादिगोचरविवेकादिमन्तो विगर्ह्यन्ते कौटुम्बिकैर्वा सेवकसखिभिः । न हि श्रीकामैः किल वणिङ्मानवैर्नान्यावार्थिभिर्वा कृषीवलैरात्मेच्छाभिरेव वाणिज्यकृष्यादौ विवेकादीन्स्वकार्यक्षमाँश्च पूर्वभाविनो निजनिबन्धश्रवणादिना विनाऽप्यर्जयन्तः स्वेतिकर्तव्यतां कृतार्थयन्तस्तत्रापवादादिपराहताः स्युर्जगत्यां जातु चित् । तथाचाशेषविद्या एवोद्यमिनो निजोद्यमनसम्भालनानुकूलविवेकादीनाम बीजकस्थानीयान्पूर्वभाविनः समुपाददानाः पुनरङ्कुरपल्लवफलस्थानीयानुत्तरभाविनस्तानव्यग्रं भावयेयुरिति स्थिते प्रकृते वेदान्ताधिकाराधिकृताः स्वप्रवृत्तिसम्पिपादयिषामुत्थापकनित्यानित्यवस्तुविवेकादिसाधनचतुष्टयमनपाभ्युपादायोक्तयोग्यताकमात्मसाक्षात्कारनिस्सीमसाम्राज्यफलपर्यन्तं तावद्ब्रह्मविद्यामर्थयेयुर्यथार्थम् । नेतरे कदाचिद्वा कपञ्चिदेतत्साधनचतुष्टयवैकल्यहता बत मन्दात्मान इत्यनवद्यम् । सति चैव "भक्तिभ्वतुष्टये सिद्धे ब्रह्मविचारः ब्रह्मविचारात्तत्सिद्धिरित्यन्योन्याश्रयः स्यादतः पश्चाद्भाविनः पूर्ववृत्तत्वमनुपपन्नमि"त्युक्तिः श्रुतप्रकाशिकायां प्रत्युक्ता वेदितव्या । उपायोपेयभावाभ्युपेतयोर्वस्तुनोरितरेतराश्रयत्वस्यात्यन्तमनुपपत्त्या पूर्ववृत्तसाधनचतुष्टयसम्पत्तिनिगृहीतकरणत्रयाः कल्पान्ते वा नाधिक्रियेरन्ब्रह्मविद्यायामिति सुप्रसिद्धोऽयं वैदिकः पन्थाः ।

यत्तु "साङ्गाध्ययनजापातप्रतीतिरिहामुत्रफलभोगविरागमुमुक्षुत्वयोर्हेतुर्नित्या-

नित्यवस्तुविपर्ययप्रतीतेरि,,त्युक्तं तदयुक्तम् । साक्षाध्ययनजापातप्रतीतेः शाब्द-
तया 'दशमस्त्वमसी' ति वाक्यजन्यज्ञानवत्प्रत्यक्षप्रमाविशेषहेतुत्वेन ततो विपर्यय-
प्रतीतेरतितरामनुपपत्तेः । यद्यापातप्रतीतेः कार्यकारिता न स्यात्प्रतीतिरेव सा नो-
दीयात्तर्हि । उदयमासादयन्ती तु सा स्वकार्यनिर्वाहायैव प्रभवेन्न मनाग्वा ततो वि-
रामहेतवे तूष्णीम्भावाय वा । आपातप्रतीतिरपि प्रतीतिरेव । सा हि निरूढप्रतीतेः
पूर्वाकारा गमयत्येवोत्तरां दशामविसदृशीम् । न ह्यापातप्रतीतिरुभयभागविचार-
साधारणी । उत्तरभागविचारणाया एवेह प्रकृतत्वात् । न वा समुदितविवेकादिम-
न्तः कर्मतत्वं बुभुत्सन्ते । विवेकादीनाममीषान्तु ब्रह्मतत्वैकबुभुत्साप्रयुक्तप्रसूतिम-
त्वात् । न तावदुत्तरकाण्डाधिकारिणः पूर्वकाण्डमर्वाचीनं कटाक्षेणापि वीक्षन्ते ।
इतरथा सर्वस्य सर्वत्रातीते वस्तुनि निष्पीडनात्मनि प्रवृत्त्यनुवृत्त्यापत्तेः । जन्मनि
वर्त्तमाने वा व्यतीते समनुष्ठितवेदार्थानां नित्यानित्यवस्तुविवेकाद्युदयस्यावश्यंभा-
वित्वाच्च । अनध्ययनविधिवश्यो ऽपि पुरुषविशेषो विना शास्त्रमुत्पन्नविवेको ऽनुभू-
यमानो न पार्यते निराकरयितुम् । शास्त्रान्तरजन्यो नित्यानित्यविवेको वेदान्तविरु-
द्धो ऽत्र प्रकृत इति केन तुभ्यमभ्यधायि । अप्रकृतमपार्थमेवोपादाय रोदिष्यन्व-
र्थमत्युच्चैः । "आत्मन्येवात्मानं पश्येदि" ति श्रुतिरुपासनाङ्गतया शमदमादीनो-
पदिशति । किं तर्हि ज्ञानाङ्गतयैवाभिप्रायात् । न ह्युपासनाद्युन्नीतसद्भावा नाम
शमादय उपासनायामङ्गभावमापद्यन्ते । न हि प्राग्भवीयानुष्ठानलभ्याः शमादयश्च-
र्वितचर्वणनीत्योपर्युपरि श्रवणसरणिमपेक्षन्ते । " बहुशास्त्रकथा कन्था रोमन्थेन
वृथैव किम् । "अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरमि" ति निदिध्यासनैकसान्नि-
ध्यां बोधयन्त्या हनूमन्तं वाचो जानकीजानेः सम्प्रत्ययात् । "प्रशान्तचित्ताये" त्या-
द्या श्रुतयो मननोत्तरकालीनपरिपाकातिशयमेवाभिष्टुवन्ति निष्कृष्टदृष्ट्या । "अवास-
नत्वात्सततं यदा न मनुते मनः । अमनस्तात्सदोदेतिपरमोपशमप्रदे" त्युक्तो मुक्ति-
काया अधिगमात् । "प्रशान्तचित्ताय शमान्विताये" ति विशिष्टलक्षणवन्तं ताव-
त्पुरुषमुपदिदेश ब्रह्मविद्यामिति मन्यमानस्त्वं प्रागपि मीमांसाश्रवणादास्तित्व निश्चि-
नुयाः शमदमादीनाम् । पूर्वकाण्डविचारादेवैतादिति मन्यसे तदा तत्काण्डप्रतिपा-
द्योत्पाद्यादिचतुर्विधद्रव्याणां किल शमादिसाक्षात्प्रसूत्यहेतूनां स्वभावं विभावयेः ।
इतिहासपुराणादिभ्यो ऽपि ब्रह्मप्रतिपादकवाक्यार्थविचारणाशालिभ्यो नित्यानित्यवि-
वेकादयो यत्र कुत्र वा भवन्त. फलतो ऽविशेषान्न विरोत्स्यन्ते । न हि तावता नार-

ष्मणीयता ब्रह्मविचारस्योपजायते । नो खलु सुरधुन्याः पिपासुरन्तराले सलिलं- हि पिबन्सरोवरस्य पिपासामात्मनो नोपशमयेदुपशान्ततृषो वा गर्हास्पदं कश्चिदुच्यते । यदुक्तं "मितिहासपुराणयोरपि संशयविपर्ययबाहुल्या देव नित्यानित्यविवेको ऽपि तत्र दुःसम्पाद इति न साधनचतुष्टयस्य पूर्ववृत्तत्वं युक्तमि"ति तदुरुक्तम् । साधनचतुष्टयस्यापूर्ववृत्तत्वे इतिहासपुराणयोर्नित्यानित्यवस्तुविवेकः संशयविपर्यासमूलकश्च दुःसम्पादो न तन्त्रम् । संशयविपर्यासपराभूतमानसानां मीमांसायामपि तादवस्थ्यात् । अत एव श्रवणे तस्याः प्रवृत्ता अपि निवृत्ता वा दृश्यन्ते भूरिशः । प्रागपि विनिवृत्तसंशयविपर्यासा दार्ढ्ययैव प्रतिपत्तेर्वर्तमानास्तत्रोद्वीक्ष्यन्ते । दृढा हि दृढतरा दृढतरां हि दृढतमा भवन्तो निजार्थेष्वध्यानमेतमेवोपाददते । एवञ्चाभ्यर्हितमीमांसाश्रवणादावुपायभूतेचतस्समाधानलक्षणशमादेरभ्यर्हिततरतया प्रागेव नूनं ब्रह्मजिज्ञासायाः साधनचतुष्टयसम्पत्तेरभ्युपेयतोपनमते । एतेन "तस्मात्कर्मब्रह्मविचारानन्तरभावी नित्यानित्यवस्तुविवेक" इति श्रुतप्रकाशिकाकोक्तावली निर्युक्तिकाऽथ निर्मोना प्रत्याख्याता वेदितव्या । एवमुपपत्तिभिरुपमर्दिते सत्यास्मिन्नर्थे श्रुतिमपि प्रमाणयामः । यथा चाम्नायते । "मुमुक्षवः पुरुषाः साधनचतुष्टयसम्पन्नाः श्रद्धावन्तं सत्कुलभवम्श्रोत्रियं शास्त्रवत्सलं गुणवन्तमकुटिलं सर्वभूतहितेरतं दयासमुद्रं सद्गुरुं विधिवदुपसङ्गम्योपहारपाणयो ऽष्टोत्तरशतोपनिषदो विधिवदधीत्य श्रवणमननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत्परिपूर्णता विदेहमुक्तिः सैव कैवल्यमुक्तिरिती" त्युपनिषदि मुक्तिकायाम् । अष्टोत्तरशतोपनिषदध्ययनोद्दिष्टगुरूपसत्तिस्वावाच्छिन्नं मत्येव साधनचतुष्टयसम्पत्सम्पन्नानां नाम पुरुषाणां विहितत्वे मुमुक्षूणां तदर्थः श्रवणादिलक्षणब्रह्मजिज्ञासायां साधनचतुष्टयसम्पद्विहीनाः सुतरामेव नाधीक्रियन्त इति कैमुत्येन गम्यत इत्येतदुक्तं भवति । "इत्थाधीहि भगवन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढां यया ऽचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वानि,, तिकैवल्योपनिषदारम्भवाक्यगविशेषणैर्वा साधनचतुष्टयसम्पत्तेर्जिज्ञासापूर्वभावित्वमध्यवस्यामो यत एतदर्थनिर्वाहकवाक्यगणा अष्टोत्तरशतोपनिषत्सु तदुपबृंहणरूपेतिहासपुराणयोरुज्जृम्भन्ते ।

यदपि सुदर्शनेन "यत्तु नित्यानित्ययोर्वस्तुनोरिति नित्यानित्यवस्तु तद्धर्मानित्यस्य धर्मिणो नित्यत्वं सत्यत्वं तत एवोपादेयत्वमनित्यस्य धर्मिणोऽनित्यत्वमसत्यत्वं तत एव हेय-

त्वमित्येवं नित्यानित्ययोर्धर्मिणोस्तद्धर्माणाञ्च विवेको नित्यानित्यवस्तुविवेक" इति-
श्रीवाचस्पतिमिश्राणां विवरणतात्पर्यग्रन्थमप्यनुद्धवता "अनित्यस्य तावदसत्यत्वं
वक्ष्यमाणप्रकारेण निरस्तं वेदितव्यं यन्नित्यं तदुपादेयं यदनित्यं तद्धेयमित्युभयम-
प्यनुपपन्नमित्यादि" प्रजल्पितं तदपि शिक्षयितव्यम् । वत्स वेत्सि तावन्नित्यत्वसत्-
त्वोपादेयत्वानि पुनरनित्यत्वासत्यत्वहेयत्वानि । न पुनर्वेत्सि निरूपणममीषामी-
दृशं । यद्यनित्यस्यासत्यत्वाभावो मन्येत तर्हि नित्यस्य सत्यत्वाभावो ऽपि तन्न्या
यादेव त आपतेत् । नित्यानित्ययोरुपादेयताऽनुपादेयते यदि यथाक्रमं न स्यातां
तदा को नु स्वत्वातिशयः स्याद्धर्मिणोरितरेतरप्रत्यनीकभूतयोः । न तावत्सुखदुः-
खनिवृत्तितत्साधनतदुपयोगिनामेवोपादेयत्वबुद्धिदर्शनमथ तद्व्यतिरिक्तस्यैवानुपादे-
यताबुद्धिदर्शनमित्येतद्वा ऽत्र हेतुमदर्शनमस्ति साध्यासिद्धिजननम् । नित्यं नहि
दुःखरूपं दुःखनिमित्तं वा स्यात् । अनित्याद्वैरूप्यविलोपापत्तेः । अनुभयं चेन्नवे
द्याप्तैवान्वयेन । नह्यनित्यं वस्तु सुखरूपं वा सुखनिमित्तमुपजायेत जातु चिदि-
त्युपादेयतायां तस्य को ऽवकाशः । न वा निरूपकस्य स्वलक्षणशालिनो ऽनित्य-
निर्हीनसुखाभासादत्यन्तदुःखसाध्यत्वदुःखोदर्कत्वस्यैव स्वाभाव्यादुपादेयताबुद्धि-
र्वास्तवी स्यात् । नात्र क्षीरोदनलाभात्कणः सन्त्यज्यत इतीदमुदाहार्यं मक्ष-
दसुखान्तरदर्शनाय । साध्यसाधनभूतयोरेतयोः सुखाभासतालक्षण-
स्वात्मसत्तातिरिक्तसत्ताकत्वविरहात् । न वाऽत्यन्तदुःखसाध्यत्वस्यान्धकूपपति-
ता वराटिका तदुद्धरणक्लेशस्य तल्लाभसुखातिशायित्वात्त्यज्यत इत्युदाहरणं भवे-
दुचितम् । आदिमध्यावसानेषु क्लेशप्रदानैकस्वभावायाः कामं वराटिकायाः स्व-
कार्यवेलायामपि व्यसनप्रदानस्वभावभागितायाअनुज्झनात् । नापि दुःखोदर्क-
त्वस्य विषमिश्रमन्नं मरणभयादित्युदाहृतिर्वा वास्तवी । अन्नेऽपि वाऽसङ्कीर्ण-
ऽन्नप्रभवत्वान्नजीवनत्ववदन्नप्रलयत्वस्यापि प्रजानां स्वारसिकत्वा "दहमन्नमन्नमद-
न्तमद्मी"ति मन्त्रवर्णेन हि संहर्तृत्वलक्षणोपप्लवाधाय्यनिष्टस्यैव निहितत्वात् । न
च "स्रक्चन्दनादि तु ततः प्रकृष्टसुखलाभादाद्यन्तयोस्तीव्रदुःखानुबन्धाभावाच्च
परिमितमप्युपादीयते तस्मादनित्यस्य हेयत्वं नानित्यत्वमात्रप्रयुक्तमि,,ति साम्प्र-
तम् । न तावत्स्रक्चन्दनवनितादेः प्रकृष्टसुखलाभभावितात्मानः पृथग्जनेभ्यो
वस्तुस्थित्याऽतिशेरते । आगमापायिनाममीषामनित्यत्वेन हेयत्वस्यैवोपदिष्टत्वा-
द्भगवता हि गीतासु । प्राक्तु स्रक्चन्दनाद्यवगतेरवगत्यभाव एवानुभविकः सम्-

नन्तर ध्वंसप्रतियोगितासहमान्यन्तराल एवोन्मिषंश्चानुमेयप्रत्ययमाधत्त इति को न्वत्र प्रथासो नि श्वासैकवासनासम्मीलितात्मनाममीषा सूरिमत्या । वस्तुतस्त्वा न्तरा खल्वमी भावा बाह्येभ्यश्चन्दनादिभ्योऽतिविच्छिन्नप्रत्ययप्रवेदनीयेभ्यो व्यतिरिक्ताः क्षणमात्रमध्यक्षमीक्ष्यमाणाश्च देशकालव्यसनादिभेदभिन्ननिमित्तबाहुल्यमुपादाय विनश्यदवस्थावन्तो नैरात्म्यमेवात्मनामुद्योतयन्त्यत्युच्चैरिति विश्वजनीनम् । सति चैवमनित्यत्वमात्रप्रयुक्ते हेयत्वे नानित्यत्वमात्रप्रयुक्त तदेतादित्युक्ति रवोधोज्जृम्भितैव । न वय तु खासम्भिन्नसुखरूपत्वं नित्यत्वस्य वदामः । सुखस्य हि विषयविषयिसन्बन्धजनितस्य च लौकिकस्यैव प्रतियोगिनो तु खस्यापेक्षणात् । तत्सम्बन्धातीतस्य तु स्वरूपभूतस्यै"वानन्दो ब्रह्मेति व्यजनादि,,त्या म्नायमौलिमन्दारसुमन सौगन्ध्याभिषिक्तस्य विवक्षितत्वेन नोक्तदु शङ्काकलङ्कावकाश । न हि "नित्यस्य दुःखासम्भिन्नसुखरूपत्वं किं व्याप्त्याऽवगम्यते उत शास्त्रादिति विकल्प्य नित्यस्य कालादे सुखरूपत्वादर्शनादि,,ति हेतुप्रदर्शनेन सिध्यत्यात्मनो मनोरथः । "आत्मन आकाश सम्भूत,, इत्यादिश्रुत्याऽनित्यत्वस्यैव कालादेरस्माभिरभ्युपगमाद्यावद्विकारन्तु "विभागो लोकवदि,,ति न्यायाच्च । नैयायिकान्प्रत्यैव ब्रूपे तदा तवैव क्षीरौदनलाभात्कण सन्त्यज्यत इत्याद्युदाहर णाद्यग्रहगृहीतशालिनस्तेषामप्यभ्युपगमस्यावैदिकस्य भगवद्भिर्भाष्यादौ सुशिक्षि तत्वात् । न हि पुन"र्नित्यस्यात्मनो दु.खासम्भिन्नसुखरूपत्वादर्शनाच्च आत्मनो हि दुःखमुपलभ्यतेऽह दुःखीति,, कथनमुपपद्येत । सुखादेरन्त करणधर्मत्या त्मन्यनुपपत्तेः । अहमित्यबाधितप्रतीतेर्विषयतयाऽऽत्मनो ममेत्यन्यादृशप्रतीतेर्गोचरतया च दु खादेरपपरत्या विविक्तता तयोरध्यवसातव्या । ममायं गज इति यन्ममेद दु खमित्येतम् । न चाह दु खमस्मीत्यात्मतया दु ख कश्चित्प्रत्येति मानव । एवञ्च ममतागोचराणा तावत्करितुरगादीना निर्ममत्वदशाया स्वस्वामिभावो वा सम्बन्धो विश्लिष्यत्येवमेव तत्सामान्यात्सुखादिसम्बन्धेऽपि सन्निपत्यसाधनसान्निध्यमहिम्ना निःशेषमपयातवति नाहं दु खीति प्रत्ययानुवृत्तिरुपपद्येत । दु खादयो नैवात्मगुणतया परिगणिताः कथ तस्माद्वियुज्येरन्नित्युच्येताश्रित्याभ्युपगमं काणादाना तदाऽप्यात्मातिरिक्ततायास्त एते नातिवर्त्तन्ते तत्राप्यात्मनो दु खमित्येव न मनागपि दुःखमात्मेति । एतस्मादेव पराकृतमायत्वाद्गुन शास्त्रा दिति वल्पान्तरमकिञ्चित्करम् । तत्रापि वेदाद्वेदमन्य किमापातज्ञानमुत प्रमि-

तिरूपमिति मतिकौशलं दर्शयसि श्लाघनीयमज्ञो देवानाम्प्रियः । इदमादौ विनानीयाः सदनुष्ठानफलीभूतसाधनचतुष्टयसम्पत्तावुक्तगत्या निह्नवस्तत्पूर्ववृत्तस्य निरवकाश एवेति । निह्नुषे यदि सहसा तर्हि कर्मब्रह्ममीमाँसयोर्वृत्तवार्त्तिष्यमाणयोर्भावत्कं वोपनीतमानातिशयप्रकारपयोम्नुयोर्निर्विघ्नास्त्यस्त्यर्थम् । पूर्ववृत्तसाधनचतुष्टयलक्षणफलानाश्वासादेव कर्मतत्त्ववैनाशको भवन्नापद्यसे यावत्तत्त्ववैनाशिकसेनानीर्निर्विशङ्कम् । न हि नित्यं वा सुखमुपादेयश्रेण्यां प्रवेशं प्राप्नोति । अहेयानुपादेयात्मयाथात्म्यभूतत्वाच्चस्यास्य सप्रमाणम् । न खल्वनिशमेव सुखं भृशमनित्यमर्थयमानेन पुनर्नित्यनिरन्तरसुखसाधनानुष्ठानपराङ्मुखेन शिवालापैरेवालापवता भवितव्यं कृताकृतप्रक्रियासङ्करीकरणयोजनावता नूनं भवता । न हि नित्यानित्यफलविवेकमजानानं त्वां नित्यफलोपादित्साप्रवचनमणवप्युपकुर्यात् । न हि बुद्धिविषयतामनापन्नश्चासन्निधीयमानोऽर्थः साधनमात्रमापद्यते कस्मिंश्चित् । तस्मान्निर्वर्णितरीत्या साधनचतुष्टयसम्पत्तेरेव पूर्ववृत्तत्वमशेषमानावलीसङ्क्लृप्तमास्थाय प्रवर्त्तते ब्रह्मजिज्ञासेति स्थिते श्रीमति वाचस्पतिमिश्रव्याख्याने नन्वशेषगुणनिवहमहाधामनि पुनरपारप्रज्ञाभरे बताक्षरदरिद्रैरविज्ञाते विज्ञप्रशासनप्रहाररश्मिभिरात्मानं पावयस्व चान्योन्याश्रयादिदूषणमतिकर्दमादस्थाने विक्रान्तादस्वरूपसम्धानसम्भ्रान्ताश्च विरमेति कृतमलीकालापबाहुल्येन ॥

॥ इति कर्मविचारादेर्ब्रह्मजिज्ञासापूर्ववृत्तत्वतिरस्कारपुरस्सरं साधनचतुष्टयसम्पत्तेरेव तज्जिज्ञासापूर्ववृत्तित्वसंसिद्धिः ॥

अथाद्वैते स्वगोचररहस्यविज्ञानव्यक्तीकरणकृतगरिमाणमात्मनो भावयन्नतितरामुदितार्थकीर्त्तनाभासशेषत "नैषां साधनत्वञ्च विनियोगावसेयं विनियोगश्च श्रुतिलिङ्गादिभ्यः स च तार्तीय" इत्यादिकं ब्रुवंश्च "यदप्याहुरशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैव परमार्थस्तदतिरेकि नानाविधज्ञातृज्ञेयतत्कृतज्ञानभेदादिसर्वं तस्मिन्नेव परिकल्पितमित्युपक्रम्य "सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयमित्याद्याम्नायादिवचोनिचयमुदाहरन्नुक्तार्थे मिथ्यात्वम्" मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथावस्थितवस्तुज्ञाननिवर्त्यत्वम् । यथा रज्ज्वाद्यधिष्ठानं सर्पादेः । "दोषवशाद्धि तत्र तत्कल्पनमि" त्येवं निराह रामानुजस्तत्रैवम् । विनियोज्यविनियोजकादिभेदभिन्नक्रियाकलापफलात्मनां तावच्छमादीनामसन्दिग्धस्वरूपातिशयशालिनां विनियोगादिगोचरचिन्ताया अप्रयोजकत्वादन्याय्यत्वाच्च । स्वस्य च देहे-

न्द्रियादेरहन्ताममताभाजप्रयुक्तकर्मविशभूतविशदूपितचेतस्कता हन्त न परमपा-
र्थसन्तानजननी ब्रह्मविचारपरिवासनामुदितार्थनिर्वापिकामावातुमीष्टे । अत एव
"भेदवासनाजनकत्वेनैक्यज्ञानविरोधस्तु पृथगात्मानमिति पृथक्त्वज्ञानस्य मोक्षोपा-
यत्वश्रुत्या परिहृतः । अयं विरोधो वक्ष्यमाणवस्तुसामर्थ्यान्तरगतश्च मोक्षस्य
सकलभेददर्शननिवृत्तिरूपतायाः प्रपञ्चमिथ्यात्वोपपादनसापेक्षत्वादैक्यज्ञानस्यो-
पायत्वेऽपि कर्मणामदृष्टद्वारेणोपयोगादविरोधः । अप्रमाणत्वं किं "क्रिया-
वानेष ब्रह्मविदां वरिष्ठ" इत्यादिसन्निहितविनियोजकप्रमाणदर्शनात्परिहृतं वि-
विदिषार्थचित्तशुद्धयुपयोगस्तु वेदनोत्पत्त्युपयुक्तमनोनैर्मल्यहेतुत्वोपपादनेन वि-
विदिषार्थत्वे ऽपि तस्याहरहरुत्पत्त्यपेक्षोपपादनेन च प्रत्युक्त" इत्यादि व्यच्छे-
लि च श्रुतप्रकाशिकाकारेण तदेतदस्ति पराभूतं तथा हि । न ह्यसौ "पृथगा-
त्मानं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनामृतत्वमेतीति" श्रुतिः श्वेताश्वतराणां पृथ-
क्त्वज्ञानस्य मोक्षोपायतां ब्रूते । अपि तु सुरनरतिर्यगादिभेदभिन्ननानायोन्यवच्छे-
देन जन्मजरामरणप्रबन्धलक्षणानिष्टहेतुतामेवाभिधत्ते । संसरतामशेषाणामस्यै-
वासंशयं प्रत्यासन्नत्वात् । एष हि मन्त्रवर्णस्यार्थः । आत्मानं जीवं प्रेरितारञ्चे-
श्वरं पृथग्भेदेन मत्वा ज्ञात्वा अन्यो ऽसावन्यो ऽहमस्मीति जीवेश्वरभेददर्शनेन-
संसारे परिवर्त्तत इत्यर्थः । तर्हि को ऽयमभ्युपायो मुक्तेरिति चिन्तायामात्मैकत्व-
विज्ञानमेवं तमेतमाह । जुष्टः सेवितः तेनेश्वरेण चित्सदानन्दाद्वितीयब्रह्मात्मना-
ऽहं ब्रह्मास्मीति समाधानं विधायेत्यर्थः। तेन तादृग्रूपेश्वरसेवनेनामृतत्वमेति लभते ।
यस्तु पूर्णानन्दब्रह्मात्मनात्मानमवगच्छति स मुच्यते । यस्तु परमात्मनो ऽन्यतया-
ऽऽत्मानं जानाति स एष बन्धनभाग्भवति । यथा च वाजसनेयिनः समामनन्ति "य
एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवतीति । तस्य ह न देवाश्च नाभूत्या ईशते ।
आत्मा ह्येषां स भवति । अथ यो ऽन्यां देवतामुपास्ते ऽन्यो ऽसावन्योहमस्मीति-
न स वेद यथा पशुरेवं स देवानामि" ति । स्मरन्ति च "पश्यत्यात्मानमन्यन्तु या-
वद्वै परमात्मनः । तावत्सम्भ्राम्यते जन्तुर्मोहितो निजकर्मणा । सङ्क्षीणाशेषकर्मा-
तु परं ब्रह्म प्रपश्यति । अभेदेनात्मनः शुद्धं शुद्धत्वादक्षयो भवेदि" ति कृष्णद्वैपा-
यनाचार्यो विष्णुधर्मादौ । मन्त्रवर्णान्तरञ्च तत्रैव "भोक्ता भोग्यं प्रेरितारञ्च मत्वा ।
सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतदि" ति व्यवहारकालीनभोक्तृभोग्यान्तर्यामिभेदभिन्नप्रपञ्च-
प्रविलापनादेव ज्ञानेन त्रिविधमप्येतन्निर्विशेषब्रह्मात्मानं जानीयादित्यादिशत्यतितराम्।

यथोक्तं "त्यक्त्वा सर्वविकल्पांश्च स्वात्मस्थं निश्चलं मनः । कृत्वा शान्तो भवेद्योगी दग्धेन्धन इवानल" इति काश्यपेयगीतायाम् । न ह्यसौ "क्रियावानेष ब्रह्मविदां वरिष्ठ ,, इति मुण्डकश्रुतिर्वो लालसां ते क्वचिदपि पूरयेत् । ज्ञानध्यानवैराग्यादिलक्षणक्रियातिरिक्तक्रियाया एवात्र विवक्षणात् । "आत्मक्रीड आत्मरति" रित्यव्यवहितपूर्वविशेषणाभ्यामस्यैवार्थस्य सम्प्रधारणात् । आत्मन्येव क्रीडा क्रीडनं यस्य नान्यत्र पुत्रदारादिषु स आत्मक्रीडः । आत्मन्येव रती रमणं प्रीतिर्यस्य स आत्मरतिः । साधनसापेक्षा प्रीतिः क्रीडा । तन्निरपेक्षा तु सा रतिरिति तयोर्विवेकः । तथैव क्रियावान् ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं क्रियावान् । समासपाठे आत्मरतिरेव क्रियाऽस्य विद्यत इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते । न हीहाग्निहोत्रादिकर्मब्रह्मोपासनयोः समुच्चयार्थतोपपद्यते । "एष ब्रह्मविदां वरिष्ठ,, इत्युत्तरविशेषणेन मुख्यार्थाभिधायिना विरोधात् । न तावद्बाह्यक्रीडो भवितुमात्मरतिः क्षमते । कश्चिदेव ब्रह्मविदां महानुभावो बाह्यक्रियाविनिवृत्तो भवति ह्यात्मक्रीडः । बाह्यक्रियाऽऽत्मक्रीडयोरितरेतरविरोधात् । न हि तावत्प्रकाशतिमिरयोर्युगपदेकत्रावस्थानं युज्यते । तस्माद्ब्राह्मनसङ्केतितमेवेदं ज्ञानकर्मसमुच्चयसङ्कीर्त्तनम् । "अन्यावाचो विमुञ्चथ । न कर्मणा न प्रजया । सन्न्यासयोगाद्यतयः शुद्धसत्वा,, इत्याद्याः श्रुतयोऽत्र विज्ञातव्याः । तदिदमुच्यते अयमेवेह क्रियावान् यो हि ज्ञानध्यानादिक्रियावानसम्भिन्नार्थमर्यादः परिव्राट् सम्भवेन । य एवं विशेषणो नातिवाद्यात्मक्रीड आत्मरतिः क्रियावान्ब्रह्मनिष्ठः सर्वब्रह्मविदां सर्वेषां वरिष्ठः प्रधानः । "सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् । अन्तः शरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषा,, इत्युत्तरविशेषणेभ्योऽपि कर्मणः कर्मसम्बन्धासम्भवात् । न हि निवृत्तिप्रधानानि सम्यग्ज्ञानसहकारिसाधनानि कर्मभिर्वा कार्मिभिः संयुज्यन्ते । सत्येन मृषाभाषणत्यागेन लभ्यः प्राप्तव्यः । अपि च तपसा मनःसमाधानलक्षणेन "मनसश्चेन्द्रियाणाञ्च ह्येकाग्र्यं परमं तपः । तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते,, इति स्मरणात् । इदमेवेह प्रकृतम् । आत्मदर्शनाभिमुखीभावात् । परमं साधनं तप एवोक्तविशेषणं नेतरच्चान्द्रायणादि । सम्यग्ज्ञानेन यथाभूतात्मदर्शनेन ब्रह्मचर्येण उपस्थसंयमलक्षणसमाधानातिशयेन । नित्यं सर्वदा नित्यं सत्येन नित्यं तपसा नित्यं सम्यग्ज्ञानेनेति नि-

त्यशब्दः सर्वत्रैवान्तर्दीपिकान्यायेनानुषक्तव्यः । को नु खल्वात्मा य एतैः साधनैः प्राप्तव्य इत्युच्यते । अन्तः शरीरे शरीरमध्ये पुण्डरीकाकाशे ज्योतिर्मयो रुक्मवर्णः शुभ्रः शुद्धो यं आत्मानं पश्यन्ति साक्षात्कुर्वन्ति यतयो यतनशीलाः पारहंस्यलक्षणपारिव्राज्यालङ्कृता न तु जातु कुटीचरबहूदकहंसाख्याः । तेषां बहुतरभेदवासनासमुपस्थाप्यार्वाचीनप्रज्ञामात्रपर्याप्तमानसत्वात् । क्षीणदोषाः प्रविनष्टक्रोधादिचेतोमलाः । सोऽयमात्मा नित्यमेव सत्यादिसाधनैः साधनचतुष्टयसम्पत्सम्पन्नैः सन्न्यासिभिर्लभ्यत इत्यर्थो न कादाचित्कैः सत्यादिभिः प्राप्यते । न क्वाचित्कैः सत्यादिभिर्लभ्यते । सत्यादिसाधनस्तुत्यर्थोऽयमर्थवादः । इत्येष मन्त्रार्थः ॥

यत्तु "अशेषविशेषप्रत्यनीकं चिन्मात्रं ब्रह्मैवे,,ति वाक्यकुक्षौ ब्रह्मविशेषणतया प्रायुङ्क्ति 'प्रत्यनीकपदं' तन्नोपपन्नम् । "अनीकं पक्षसेनयोरि,,ति इत्यायुधकोषादन्यतरार्थविपक्षलक्षणाभिधेयभेदस्य प्रतीत्युपसर्गसामर्थ्यवशलभ्यस्यानपह्नवार्हसत्तामात्रगोचरताया महिम्ना किञ्चखण्डार्थप्रज्ञागमस्तीनामञ्जसैवानतिताप्रत्ययसन्तानसाक्षिकावगतिमस्यापरया सिद्धवद्भावावबोधिप्रत्यनीकपदप्रयोगायोगात् । न चैष तवाभ्युपगमप्रतीतोऽप्यर्थस्तादृग्रूपेणैव प्रयोक्तव्यो मयापीति पार्यते नियन्तुम् । प्रक्रियाया ननु मदीयायाः प्रतिपिपादयिषोर्विधान्तरेण वस्तुसम्पिपादयिषाया अनुवदनप्रतिवदनादिसमयातिलङ्घननिहतत्वात् । न चापि निरसनीयपूर्वरूपदर्शितयेदमन्यादृशी सम्प्रत्यपि मयैवमिति वा सङ्गच्छते । निरसनप्रतिनिरसनादिव्यापारधाराया अविश्रान्त्या विश्रमणीयमास्माकीन एवानुपद्रुते वस्तुनि श्रद्धामापाद्य त्वया विश्राममभीप्सता यत । एतेन "तत्प्रत्यनीक स्वज्ञानेनैव निवर्त्तकं शुक्तिरिव रजतस्येत्यर्थ,, इति विवरणं वा मूलान्धकारानुविधायिक्षुतप्रकाशिकायामपाकृतं वेदितव्यम् । न च नानाध्यासा नानाऽधिष्ठानका दृष्टास्तस्कथमेकाधिष्ठानकत्वमिति विरोधं स्वयंप्रकाशवस्तुनोऽधिष्ठानत्वविरोधञ्च स्फोरयत्येवकार इति वा विवरणमुपादेयम् । परपक्षानुवादे स्वकटाक्षानुकारिशब्दार्थयोः सन्निवेशस्य मूलकारवृत्तिकारयोरनुपादेयैकवचनग्राहित्वात् । सिद्धान्ते समुदाहृतश्रुतिस्मृत्यादिवचनानामिहोदाहरणचेष्टितमात्मनस्तदर्थरहस्यवेत्तृत्वाभिमानाऽवेदनपरमपि प्रत्यक्षसमीक्षयाऽध्यवसीयमानं तयोः सिद्धान्तसञ्चालनवेलायामेवाग्रे प्रायेणापाकरिष्यते ॥

११२ रामानुजानूदितमिथ्यात्वलक्षणनिरस्कारः ।

यद्यपि "मिथ्यात्वं नाम प्रतीयमानत्वपूर्वकयथाऽवस्थितवस्तुज्ञाननिवर्त्यत्व-
मि,,ति लक्षणमुक्तं तच्चाप्यबोधदानवीपराहतमेव । तल्लक्षण-
स्य तु विशिष्टज्ञाननिवर्त्यत्वमात्रादेव शक्तिमदीश्वरादिसङ्कल्परू-
पज्ञाननिवर्त्ये वस्तुन्यतिव्याप्तिरित्यादिमान्यमानदूषणगणविस्तरानिस्तारदरूपादनपा-
यमुपपत्तेः । चेतसि ते अनारूढानामपि दूषणानां मतिमत्तरमानवकलनासमाक-
लितानामपहरणस्यात्र सम्प्रतिष्ठितशेषिष्केशरोचिःपुञ्जसंप्रयुक्तस्य सदा सन्नद्ध-
त्वात् । दोषा हि ते अतिव्याप्त्यव्याप्त्यसम्भवान्योऽन्याश्रयात्माश्रयचक्रकाद-
योऽनुसन्धातव्याः । गलिताशेषदोषविशेषस्थानमिदमत्यल्पमेवात्रभवत्पूर्वाचार्यक-
पृक्तं लक्षणमस्मत्सकाशाज्ज्ञाननिवर्त्यत्वमात्रात्मकमवगत्य भवतु तावन्मतिमान्वा
भवान् । दर्शितदूषणार्धव्यग्रीकरणाय मानविषययावद्विषयविशिष्टरूपापहारित्वं
ज्ञाननिवर्त्यत्वशरीरे विनिवेशनीयम् । परिशिष्टदूषणार्द्धस्याप्यपाकरणाय परि-
निष्पन्नार्थत्वमपि तत्रैव विशेषणं देयम् । यावद्विषये मानविषयत्वञ्च आत्म-
निष्ठविशिष्टसत्ताविरूपसत्ताकत्वम् । वैशिष्ट्यञ्च सत्तायां सार्वकालिकाविरूप-
स्वरूपप्रत्ययधारासमायत्तानियत्ताकविभूतिमत्त्वसम्बन्धेन । सत्तायां पुनर्वैरूप्यञ्च
स्वोपनीव्यसमुदितसत्तासमाधानाधीननिर्वाह्यप्रक्रियासमशीलित्वसम्बन्धेन । अर्थे
परिनिष्पन्नत्वञ्च सर्वत्राभ्यस्यमानप्रातिपदिकानातिरेकित्वसम्बन्धेन । अभ्यासे पुनः
सार्वत्रिकता च ज्ञेयनिचयगोचरमत्तासमारोहविहारपरिचायकतासम्बन्धेन । स-
त्तायां पुनर्ज्ञेयनिचयगोचरत्वञ्च स्वसामानाधिकरण्यस्वप्रतियोगितावच्छेदकाऽन-
वच्छिन्नत्वैतदुभयसम्बन्धेन । न च सत्तावैविध्यविद्योतकमानस्यैवात्राभाव इति भ्र-
मितव्यम् । जाग्रदाद्यवस्थानामनुवृत्तेरेव स्वावस्थावद्विषयावभासवैविध्यान्नाप्तिग-
मकत्वे स्वनियामकसत्तायास्तयात्वस्यार्थिकत्वात् । व्यावृत्तौ च तासां स्वगोच-
रानुभूतिभेदो वा यथायोगमस्ति हि तन्त्रम् । न ह्यस्तित्वमन्तरा सत्तामर्थानां
नानाकारां प्रतिपद्यते कश्चिन्नानाविधम् । सन्घटः सन्पट इत्यादावध्यारोप्यमा-
णघटादीनामधिष्ठानतया सत्ताऽपरनामा सदंश आलक्ष्यते । प्रतीतिरेवाधेयस्या-
धारं ज्ञापयत्यतिविशदम् । अत एवास्ति नास्तीत्यादयः प्रत्ययाः सत्तागैविषया
उपपद्यन्ते । तथाविधव्यवहारानुवादिन्यः श्रुतिस्मृत्यादिवाचः सर्वा एव "तत्स-
त्यमित्याचक्षते । सत्यं ब्रह्मेत्युपासीत । अस्तीत्येवोपलब्धव्य,, इत्याद्याभिः
सहैव वाग्भिरिममर्थमावेदयन्त्यतिव्यक्तम् । एवञ्च व्यावहारिक्या पुन प्राति-

भासितया सहैव सत्ता हि पारमार्थिकी सर्वोपजीव्या च समुज्जृम्भते यथाशास्त्रम् । प्रकृते च मिथ्यात्वप्रतिपत्तिःसर्वैमूर्धाभिसामान्यविहीनमानसस्तद्योगयोग्यताव्युदस्तिपिपया कथङ्कारमिहोपारप्स्याद्वा वार्त्तिष्यते । न हि तावद्वैतण्डिकीं कथां जल्पां वाऽऽलम्ब्य व्युदासोऽस्य वाऽन्यस्य वस्तुनः कृतास्पदः स्यात् । वादकथा तु ते पुरैव वनान्तरान्तरमाविशत्प्रमाणसत्तर्कसमुपबृंहिता । तथा च न कया चिदपि कथया ते विचारहतया प्रतिष्ठानमर्हति वस्तुतत्त्वमित्यवेहि मन्दात्मन् । नो खलु किमन्यत्र सतोऽन्यत्र ख्यातत्वं मिथ्यात्वमुतात्यन्तासत्त्वं पूर्वस्मिन्कल्पे कश्चित्पारमार्थ्यमभ्युपगतं स्यात् । द्वितीये तु निवर्त्यत्वमेव नास्तीति शास्त्रवैयर्थ्यम् । अत्यन्तासत्त्वञ्चानुपपन्नम् । स्वयंप्रकाशस्य वस्तुनो भ्रमाधिष्ठानत्वं नोपपद्यते । स्वयाथात्म्याप्रकाशमूलो ह्यध्यासः पराधीनप्रकाशस्य जडस्यैव तत्सम्भवः इतीदं विकल्पनाकौशलं श्रुतप्रकाशिकाकृतो वस्तु न गृह्णाति वा ग्राहयति । कमपि परमार्थं ग्राहयित्वाऽपारमार्थिकस्यैव वस्तुनास्तित्याजयिषया प्रवृत्तायाः परस्याः परमाम्नायशास्त्र्याश्च स्वस्याः शास्त्रभूताभियुक्तोपदेशसाहस्र्याः प्रतीततरायाः सर्वदैव सत्त्वमिथ्यात्वयोर्ग्राहकसामर्थ्यस्यानपायित्वे तदनुरूपसम्यक्प्रवृत्तिमत्त्वे च प्रतिपत्तॄणां किमित्यसौ मोहनमतिशयितमापद्यते मोहनप्रकृतिद्वैतध्वान्तचण्डार्कसन्निधावद्यत्वेऽपि वा । सद्भिन्नस्य निवर्त्त्यस्य निवर्त्यत्वेन मिथ्यात्वपदोपधानलब्धप्रत्ययभाजो नास्तीत्यत्यन्ताभावप्रतियोगितावच्छेदकानवच्छिन्नत्वेन सार्थक्यादेव शास्त्रस्य वैयर्थ्यकल्पनानवकाशात् । ख्याते व्योमकमलिनीवदत्यन्तासत्त्वेऽनभिहिते तच्चेदमनुपपन्नमित्यप्युक्तम् । स्वयं प्रकाशस्य वस्तुनः स्वसाक्षात्कारमहिम्ना भ्रमापहारित्वप्रत्यासत्त्या भ्रमाधिष्ठानत्वे नानुपपत्तिः । न ह्यध्यासः स्वयाथात्म्याप्रकाशमूलः । तस्य स्वप्रत्ययविसदृशप्रत्ययविशेषोदर्यकानिदानत्वात् । न वा जडे तत्सम्भवे पराधीनप्रकाशत्वं हेतुः । प्रकाशस्य तु स्वविभूतिमात्रमर्हयमानत्वात् । जडस्यापि प्रस्फूर्त्यनुरक्ततया सैवास्य सम्प्रवर्तते सत्ता हि वास्तवी । अत एव प्रपञ्चमिथ्यात्वं ब्रह्मणो भ्रमाधिष्ठानत्वञ्चायुक्तमित्येतदयुक्ततरमेव । युक्तताया उक्तगत्या समाराध्यत्वे मिथ्यात्वं नामेति तद्विरुद्धविषयप्रवृत्तौ रामानुजस्य दाम्भिकभावान्न मुच्यते । सति चैवं यथा रज्ज्वाद्यधिष्ठानं सर्पादेरित्युदाहरणादिप्रदर्शनमबद्धस्यैकदेशपरिचयशीलं वेति स्थितम् ॥

## ॥ इति श्रीभाष्यश्रुतप्रकाशिकाधृतसोपस्करमिथ्यात्वलक्षणप्रणयनचेष्टातिरस्कारः ॥

११३ अद्वैतार्थानुवादे वादिनोऽज्ञानव्यक्तीकारपुरस्सरमुदितार्थपरिशिक्षणम् ।

अ"थैवं चिन्मात्रवपुषि परे ब्रह्मणि दोषपरिकल्पितमिदं देवतिर्यङ्मनुष्यस्थावरादिभेदं सर्वं जगद्यथावस्थितब्रह्मस्वरूपावबोधबाध्यं मिथ्यारूपं दोपश्च स्वरूपतिरोधानविचित्रविक्षेपकरी सदसदनिर्वचनीयानाद्यविद्य"त्याचकारोपपादनं रामानुजस्तदसाधु । न हीदं जगद्दोषारूयवस्तूत्पादितमिति राद्धान्ताभिप्रायोऽवगम्यताम् । दोषाणां तावत्त्वदभ्युपेतरूपाणामनुगुणहेयभावैकनिदानानामुपादेयांशोपस्थापनसामर्थ्यानुपपत्तेः । माहं केवलमनुवादकस्तथाभ्युपगमस्येति वा मापिष्ठाः । एवं तर्हि विशिष्टाविद्यामेव तां मायापरपर्यायभूतां बुध्यस्व तावत्त्वं वृद्धसेवया । माया च यथाभूतत्वात्मनाविधर्मिदेहेन्द्रियादिदृश्यजातानर्थान्तरयावदनात्मप्रतिभासहेतुभूतः स्वप्रकाशचैतन्यानन्दानीर्विभागमहेश्वराश्रयत्वविषयत्वप्रत्ययभाग्गुणत्रयात्मिकश्च भूरिविभूमसम्भरात्मा व्यक्तिविशेषः । इदं पुनरावरणादिरूपं तदधिष्ठानकञ्चाज्ञाननामधेयगोचरं प्रकास्ति च भूमप्रमादाद्यात्मसन्तानचरम् । ". मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । इन्द्रो मायाभिः पुरुरूप ईयत " इत्यादयो मन्त्रवर्णा अत्र मानम् । दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते " इति स्मृतिश्च गीतायाः । स्वाश्रयत्वविषयत्वलक्षणविलक्षणसम्बन्धावच्छिन्नाऽभ्युक्तमायात्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावत्त्वमुक्तमत्यत्र तावन्महेश्वरे । अखण्डार्थधीविभेदमत्यात्तत्त्वपरागोपहितत्वात्मकतादात्म्यसम्बन्धावच्छिन्नमहेशानन्यप्रातिपदिकार्थत्वावच्छिन्नविशेष्यतानिरूपितप्रकारिताशालिता पुनरस्ति हि मायायां यथोपवर्णितसम्बन्धावच्छिन्नायाम् । न चैवं लक्षणायाः क्लिष्टाविद्याया दोषापरपर्यायता कुहश्चिदभ्युक्ता यतोऽयमर्थः सक्षेत्रमात्रं वाऽवतिष्ठेत् । गुणसामान्यसंसर्गानवच्छिन्ना चेत्सा स्यात्तदापि कार्यरूपगुणमहत्त्वानात्कारणात्मनस्तस्याः स्वनिरूपितव्यापकभूमिकासमारूढाया वैषम्यमेव दुष्परिहरं स्यात् । दोषत्वांशेऽप्यविशिष्टत्वैवैतदेवमवगम्यताम् । स्यादेतदेवं तथाऽपि स्वरूपतिरोधानविचित्रविक्षेपं वा तत्त्वत्रीमिदन्यमानोऽविद्यां विज्ञापयसे परमेषा नृत्यत्येवाविद्या दोषे ते सदा नूनं, ससन्ताना भगवद्विद्यादिरूपान्तरमापाद्यापि निर्दोषमेनामीट्से तर्हि तत्त्वलेऽप्यनुक्षणमनुभूयमानावगमप्रमदस्कारानिरिक्त-

चमत्कारवत्तायास्तस्याः समादरे मानाभाव एव । नानाविधोपादेयानुपादेयप्रचारचारिण्याः कमप्यंशमस्याः समासाद्य ह्यविद्यायाः पारमार्थ्यापारमार्थ्ययोरन्यतरस्याप्यस्वरूपसिद्धिरानुभविकी । न हि स्वरूपतिरोधानं किं स्वतः परत इति विकल्पः प्रयोजनपर्यवसायी । क्षुधः किं हृदयादूर्ध्वदेशादाविर्भाव उताधोदेशात्किं चैषा श्वेताऽथश्यामेति प्रयुक्तेष्वपि विकल्पेषु नैकतमेन वा तेन कश्चिदर्थः संसिध्येत् । सिध्येदेव तर्हि यथासमयं समुचिताहारप्रयोगयोगादेव यथाक्रमं तन्निवृत्त्या काममाप्यायसम्पत्त्या च । तादृग्रूपेण तां त्वं विकुर्वाणः सदसदनिर्वचनीयतां वा तस्याः कथङ्कारं विजानीयाः । न पुनर्विक्षेपो मण्यतेऽध्यासः । विविधविषयविकटपरिभ्रमणलक्षणस्तस्य परिनिष्पन्नलक्षणेनाध्यासेनासम्बन्धात् । न चाच्छादिकाऽविद्या विक्षेपेऽपि काऽविद्येत्यविद्याया एकस्या एवावस्थाद्वयं तदभिमतमित्याभिप्रायवर्णनमप्युचितं भवति । उक्तरीत्या मूलमेवाभिप्रायस्याजानन्नयं मध्यमान्तिमरूपयोरतितरामेवाज्ञाता यतः । नो खलु मूलं तरोरप्रतिपद्यमानः स्कन्धपलाशकुसुमफलानां तावत्समुचितावस्थां प्रतिपद्यते कश्चिदुत्तरोत्तरविपाकभाविनीम् । किं"च्चाच्छादिकाऽविद्याविक्षेप" इत्यसावसाधुः प्रयोगः । आच्छादकाविद्याविक्षेप इति पुंवद्भावस्यैवोचितत्वात् । व्यस्तपक्षस्त्विहाप्रकृतो न साधुतामस्योपयुज्यते । न ह्यनूतन हि प्रत्यूढा इत्युदाहरणवचनमुपशृण्वताऽपि त्वया सेवाश्रिते गुरोरामिधेयगौरवं तस्य बाधितानुवृत्तिप्राकट्यप्रकाराकारमर्यादमभिपद्येत मनागपि । न वा "नासदासीन्नोसदासीदि"ति सूक्तस्येमं मन्त्रवर्णमुदाहरन्नुपक्रमपरामर्शोपसंहारानभिव्यक्तनामरूपभेदाभिन्नप्रपञ्चव्यावर्तनपुरस्सरमात्मयाथात्म्यमात्रावधारणतदुत्तरकालीनविचित्रजगद्रचनापुरोगमप्रस्थानगोचरं जानीषे । नापि "किमासीदित्यत्राह । तम आसीदि,,ति निवरणनाम्नल्पं युक्तम् । "किमावरीवः कुहकस्य शर्मन्नि,,ति भावविशेषप्रादुर्भूतेरावरूपयोग्यताकारस्यैव स्वान्तर्वर्तिसामयिकप्रभेदधीविभेदसाक्षिणस्ततोऽधिगमात् । एवञ्च "मायान्तु प्रकृतिमि,,त्याद्या उदाहरन्नपि श्रुतिस्मृतिगिरो "निर्विशेषाचिन्मात्रं ब्रह्मैवानाद्यविद्यया सदसदनिर्वाच्यया तिरोहितस्वस्वरूपं स्वगननानात्वं पश्यतीत्यवगम्यत,, इति ब्रुवाणो भ्राम्यसे नूनं प्रत्यर्थम् । नो खलु " निर्विशेषाचिन्मात्रं ब्रह्मैव तिरोहितस्वस्वरूपं स्वगननानात्वं पश्यती,,ति कुत्रचिद्वा कीर्तितम् । अपि तु क्वापि काव्येषु भेदसन्तानसामान्यमुद्गूरं सदपारमनन्तमद्वयं नूनं महीयते स्वा-

यामेव सत्तायामनितराधारस्वरूपचारिण्यामिति । तिरोहितस्वरूपस्तु स्वकाले जीव एव सन्पश्यन्नपि च नानात्वं न पश्येदेव स्वरूपपरिप्राप्त्येति कोवाऽस्तावका-शास्त्रिलोकीवन्दितराद्धान्ते मृषामापायास्ते । वस्तुतस्तु पश्यतीत्यस्माज्ज्ञानमेव गम्यमानं "प्रज्ञानंब्रह्मे,,ति महावाक्यपरार्थप्रत्ययमूतं सदाच्छादकसामग्रीविरहित्वादे-बाध्याद्यप्रतीतिप्रभवं हन्त न सहते नानात्वम्। न चाहमात्मीयमण्वपि ब्रवीम्यपि तु तावकमेव समयमनुवदामीति साम्प्रतम् । न हिनो राद्धान्तमप्रवृत्तधिषणस्त्वं क-स्यान्ते वा कपिलकमलासनादिसेवितं शक्नोपि प्रतिपत्तुम् । तव तु नास्त्येव पन्था विचारकमतिमान्यः । गृहीत एव वाऽसौ विचारोज्झितचेतोभिः कुपथ एवेति क ते सम्प्रति सुमतिगतिप्रत्याशा ॥

यदुक्तं "यथोक्तमित्युपक्रम्य ज्ञानस्वरूपो भगवान् यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः । ततो हि शैलाब्धिधरादिभेदाञ्जानीहि विज्ञानविजृम्भितानि । यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम् । तदा हि सङ्कल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः । तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वाचित्कदा-चिद्द्विजवस्तुजातमि,,त्याद्युदाहृतमवहेलामातिमत्तया तत्प्रत्युच्यते वाक्यवदेव तद-र्थमपि सम्यङ्मत्या प्रतिपद्यस्वेति । किमिह वाक्यगणे विप्रतिपत्तिराहोस्वित्त-दर्थपरिभावनाभ्यासपरिपाकभुवा ब्रह्मात्मभावसाक्षात्कारेणाविद्यानिवृत्तौ । न ताव-दाद्यः । न ह्यसावुपदेशविशेषं प्रति प्रमाणभूताभियुक्तशार्दूलचोराशिरर्वाचीनह-रिणालीविरूपाक्रन्दनमनुमन्यते । नान्त्यः । साक्षात्कारेण हि तेन तन्निवृत्तेः "तमेव विद्वानतिमृत्युमेति । तमेवं विद्वानमृत इह भवति । मृत्युपाशाञ्छिन-त्ति । निचाय्यं तं मृत्युमुखात्प्रमुच्यते,, इत्याद्याभिः श्रुतिभिः सिद्धत्वात् । उत्ताना-र्थो अप्यमूर्वचनव्यक्तयो ह्यग्रे ते सिद्धान्तार्थपरीहारप्रसक्त्यार्थतोऽनुभावयिष्यन्ते ॥

यच्चापि "सकलभेदानिवृत्तिः प्रत्यक्षविरुद्धा कथमिव शास्त्रजन्यज्ञानेन क्रि-यते कथं वा रज्जुरेषा न सर्प इति ज्ञानेन प्रत्यक्षविरुद्धा सर्पनिवृत्तिः क्रियते । तत्र द्वयोः प्रत्यक्षयोर्विरोधः । इह तु प्रत्यक्षमूलस्य शास्त्रस्य प्रत्यक्षस्य चेति चेतुल्ययोर्विरोधे वा कथं बाध्यबाधकभाव,, इति शङ्कासमाधानगोचरमन्यावतरणं तत्राप्यनुपपन्नम् । समये प्रत्यक्षेणानुभूयमानानां तावद्भेदानां पुनः समयान्तरे परिहृण्यमानानां व्यावहारिकाणामपि प्रत्यक्षेणैवोपलब्धौ तन्निवृत्तेः शास्त्रजन्य-ज्ञानाधीनत्वपर्यन्तानुधावनस्पातदर्पोऽऽध्वस्तानामकिञ्चित्करत्वात् । न हि स्व-

काले स्वरूपेणोन्मिषन्त परस्परानात्मानो ननु भेदाः परं वियोजकसम्भारधारास म्पातायातसांसर्गिकधोरणीमुपाश्रित्य विनश्यन्निजाकारकलना शाश्वतिकत्वमात्मन कृच्छ्रेणाप्यविभ्राणाश्च क्वचिदपि स्थेमानं निजमाभजन्ते । रसालसादावादिमध्या-वसानदशान्वितरेतरव्यतिभिद्यमानरसविशेषा यथास्वं संस्थानं स्वमापन्ना गुणाः स-ममेव गुणवता पुनरप्ययं प्रतिपद्यमानाः पारमार्थिकतामात्मन आख्यातुमीशते ई-शाना वा न प्रकाशन्ति ते प्रतीतिमन्वाय वा वीर्यवत्ताय । नापि तानेनान्सुस्थात्मा कश्चिद्विकृतक्रियाकलापयुजो निजकाले चक्रमे वा कामयते । न चैतद्वस्त्वेव विनश्यदवस्थावदपि प्रवाहमहिमारूढमनादिभावस्वभावं अननुव्याघवदेवेत्याशङ्क-नीयम् । अविप्रतिपन्नप्रविलोपप्रतीत्यास्पदतयैव तेषामपारमार्थिकत्वे तत्सामा-न्येन सर्वे एव भावाः सन्तानसन्तानिभेदभिन्नप्रतीतिसमारोहिणो वाक्यप्रभववि-शिष्टधीप्रभावाद्विनश्या स्युर्निरवशेषं यत । तदिदमुक्तं पदूवभ्यासाऽदराऽहित-भावनापरायत्तमुन्मूलयत्यात्मसन्तानं तावत्समूलमेवेति युक्तमुत्पश्याम । रज्जुरेवैषा नायमहिर्माभैषीर्मा च पलायस्वेति प्रबोधित समवाप्तधैर्यो व्यपेतवेपथुर्निजानुभवव-लादेवाद्धा सर्पविषासोपद्रवाद्विनिर्मुक्त इवात्मानं मेने । अयं पुनरयमर्थो विश्वम-नीनप्रचारसाक्षिकोऽप्यनार्थे प्रत्यक्षप्रतीतिमपह्नोतुकाम प्रत्यक्ष पुनरात्मनो निरूढ-प्रमाणभूत सहसैवासावुपरुन्ध्यात् । उच्छिन्द्याच्च बाध्यबाधकभावापन्नानशेषा-नेव प्रमेयविशेषानेवजातीयान् । उदाहरणान्यप्येवरूपाणि श्रौतानि च स्मार्त्ता-न्यैतिहासिकान्युन्मत्तवचनसहोदराण्येवापद्येरन् । "शास्त्रजन्यज्ञानेन क्रियते । सर्वनिवृत्ति क्रियते ,, इत्यत्र प्रयोगदारिद्र्यमपि गम्यते नून श्रीमाष्यकारम्मन्य-स्य । "यत्सम्भाव्यमानान्यथासिद्धि तद्बाध्यम् । अनन्यथासिद्धमनवकाशमितरद्बा-धकमिति सर्वत्र बाध्यबाधकभावनिर्णय,, इत्यनुवदन्नय सङ्ख्यावत्सार्वभौमकिरी-टमाणिक्यश्रीमद्वाचस्पतिमिश्रोल्लसनगभीरतात्पर्यविज्ञानदेशिको वरीवर्त्येव । "स-मानविषयत्वे हि विरोधो भवेत् । दर्शनादर्शनयोर्लौकसिद्धत्वेन तुल्यबलतया बाध्यबाधकभावाभावेन विषयव्यवस्थोपपत्तेरि,,ति ब्रह्मतत्त्वसमीक्षातत्त्वबिन्द्वोः पू-र्वापरमन्थन्याधीनार्थविभेदं परिचर्ययाऽऽचार्याणामननुध्यस्व । यस्तुनस्तु अनाहा-र्यप्रामाण्यज्ञानानास्कन्दितनिश्चयशालि हि बाधकम् । बाध्य तु विपरीतमेवा-स्ति तस्मात् । स्वविरुद्धधर्मधार्मितावच्छेदककस्वप्रकारज्ञानत्वरूपमाहार्यत्वम् । तद्भिन्नमनाहार्यत्वम् । आहार्यमनाहार्यञ्चेति द्विविधमिह ज्ञानम् । प्रमाण-

मप्रमाणरूपञ्चोभयमेतत्प्रतिपद्यते । तत्राप्रमाणरूपमाहार्यज्ञानं यथा "योषा वाव गौतमाग्निरि,,ति । यथोपपन्नदेवनास्वरूपध्यानन्तु प्रमाणलक्षणमाहार्यम् । द्विरूपमप्येतद्व्यावहारिकम् । अनाहार्यभ्रमलक्षणन्तु परिनिष्पन्नपदार्थस्वरूपानुरूपमपि दोषविशेषवशवर्त्तितया वस्तुसत्तां न पर्याप्नोति । न हि घटादिविषयविशेषविषयन्तु ज्ञानमनाहार्यतया कृतिसाध्यतालक्षणां तावद्घटनामञ्चति । किन्तर्हि यथाकारोल्लेखशालयालसने तदाकारव्यावहारिकसत्तामुपादत्ते । आत्मैकत्वविज्ञानस्याप्येवमेवानाहार्यधीहेतुत्वेनोल्लम्बद्वाक्यप्रकाण्डप्रमत्तमपास्तसमस्ताकाङ्क्षं च प्रमाणप्रमेयाद्यशेषव्यवहारहन्तृत्वं जृम्भते । न "चानादिनिधने,,त्यादिविशेषणसंयोजनमुचितं भवति शास्त्रस्य । पुरैव सिद्धौ हि तेषां साधनेनायत्ते सिद्धसाधनात् । परमेष विशेषो यच्छ्रुतप्रकाशिकाकृ"दनादिनिधना ह्येषा वागुत्सृष्टा स्वयम्भुवा । आदौ वेदमयी दिव्या यतः सर्वाः प्रसूतय,, इति स्मृत्यक्षराणि मनोर्विनिमयीकृतानि यस्या"मनादिनिधना नित्या यतः सर्वाः प्रवृत्तय" इत्येतमेव पाठं परिष्कृत्य मेधातिथिप्रभृतिभिर्व्याख्यातायां तस्यां पाठसङ्कलितिसंलङ्घने नार्थविलोपपरिप्राप्त्याऽपि नार्थसमुत्तेजनसमर्थमेतदेवं स्यात् । "वाचा विरूपनित्यये,,ति श्रुतिरप्येतन्मूलीभूता व्याकुप्येत यतोऽत्रत्यमपि नित्यपदं नानुसन्धातं स्यादनुसन्धातमप्यात्मव्यूहवियोगकृतया परित्यक्तं स्यात् । यद्यप्यूगादिशास्त्रमुदाहृतश्रुतिस्मृत्युन्नीतविशेषणाऽङ्कृतमतिनिशदं तथाऽपि तदर्थानामत्यन्तानवगत्वा पुनरपार्थरचयित्राऽथ दुराविशदन्दशूकदेशिकेन निजगरलज्वालावलीभिस्त्वया तत्र किं किं न मूर्च्छीकृतं यतः पुनस्तादृशरसपूर्णजिह्वया सद्यः समुपन्यासमिषेण व्यकुञ्चीकुर्वाणः सदध्वानं नालिकाच्छेदं तावत्तस्या अर्हत्स्यविशङ्कं यतो वाऽपयमेव परितस्तार सन्नपि भवान्कान्दिशीकः ।

यदप्येत "त्सम्भाव्यते च विविधविकल्पभेदप्रपञ्चग्राहित्वमस्यानादिभेदवासनारूपा ऽविद्याख्या दोष "इत्युक्तं तदप्ययुक्तम् । सर्वविधप्रमितिजनकतावच्छेदकावच्छिन्नानामविशेषेणैव तथात्वे प्रत्यक्षत्वावच्छिन्नं प्रत्येव तथा सङ्कीर्त्तने विनिगमकाभावात् । न ह्यमूषां मन्त्रव्याकीनामपनोदने ऽमानमेवेति मतिः सत्या । तत्र "पिता ऽपिता भवति वेदा अवेदा भवन्ती "ति श्रुतेर्मानमुपन्यायाः समाराध्यत्वात् । न हि स्वकालीनमत्तामुज्जृम्भितात्मनां स्वनिर्यासोऽविध्यनिदानसन्ततानुभूतिमदापाम्नो ननु प्रत्यग्ज्योतिषः स्वरूपापचिमूर्त्ते विनाशमरणिरन्या-

द्दशी सम्मीयते । तावतैव तेषां हि कृतकृत्यत्वात् । ये हि यत्सत्ताकप्रतिभासाधीनप्रतिभासवन्तः संजज्ञिरे न ते नितरां तत्सत्तातिरिक्तसत्तां संस्पृशेयुर्जातु चित् । दोषाविद्ययोरितरेतरभावः प्रागेव पराकृतः । एतावता "अनादिनिधनत्वेन [प]च्छास्त्रमुक्तं तस्यापि शब्दत्वादिना दुष्टकर्तृकत्वानुमानं हि सुशकमि"त्यादिसुदर्शनाशिवालापो ऽप्यपास्तो वेदितव्यः ।

यत्पुनरेतदुक्तं "नन्वनादिनिधनाविच्छिन्नसम्प्रदायतया निर्दोषस्यापि शास्त्रस्य

११४अपच्छेदन्या. ज्योतिष्टोमेन स्वर्गकामो यजेतेत्येवमादेर्भेदावलम्बिनो बाध्यत्वं-यावत्सारपरिहारः ।

प्रसज्येते,,त्याशङ्कायाः "पूर्वापरापच्छेदे पूर्वशास्त्रवन्मोक्षशास्त्रस्य निरवकाशत्वात्तेन बाध्यत एवे,,त्युत्तररूपं तदप्यसिद्धान्ताभिज्ञानगमकं विज्ञायते । स्वस्वदशासम्प्रयुक्तव्यवहारैकनिर्ग्राहकतयैव तत्तदधिकारस्य क्लृप्तत्वे पुनः क्लृप्तेतरसम्बन्धानवच्छिन्नत्वे विजृम्भमानस्यास्य शङ्काया एवानुदययोग्यताकतयोत्तरप्रदानरीतेरप्रयोजकत्वात् । नो खलु यौवनवेलायां शिशुकिशोरदशानुभूतधर्माणां नाम यथोपपादमूत्रपुरीषत्वपुरोगमानां बाधितप्रतीत्यालम्बिनीं तावच्छङ्कां व्यवहारकोविदः कश्चन समुद्भावयेत् न वा यौवनदशायां बाधकप्रत्ययविशेषविषयां नापि पुनरितरेतरदशाऽनुवृत्तिव्यावृत्त्योः प्रवर्त्तनाप्रयुक्तहर्षविषादजननीं जातु चित् । एवमेव ज्योतिष्टोमादिविषयो ऽपि स्वाधिकृताधिकृतव्यक्तिविशेषकपर्याप्तनिजप्रयोजना नोत्तराधिकाराधिकृतव्यक्तिविशेषकर्त्तव्यतां वेतिकर्त्तव्यतां प्रति विभिन्नविषयविशेषविषयतया प्रत्यनीकभावमापद्यन्त इति स्थिते नोक्तशङ्कासमाधानगोचरप्रयासोऽवकाशं लभते लभमानो वा स्वाभिप्रेतं प्रस्फोरयन्कुण्ठस्यैव वस्तुतो निर्भिद्यते निरन्तरं नूनम् । यत्तु "पूर्वापरापच्छेदे पूर्वशास्त्रवदित्याद्यु,,क्तं तत्रावैशिष्ट्यविरमात्रभाविताध्वर्युप्रस्तोतृप्रतिहर्त्रुद्गातृब्रह्मणाञ्च यजमानस्यैकाधिकाराधिकृतानामन्वारम्भणविच्छेदाख्यप्रक्रियाया अप्यनितरप्रकरणपरायत्तत्वे च वैरूप्याभावसत्वे नोदाहरणार्हं कथञ्चिद्धेत्यवसेयम् । अत एव "यद्युद्गाता जघन्यः स्यात्पुनर्यज्ञे सर्ववेदसं दद्यादि,,ति पारमर्षं हि सूत्रं "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदि,,त्यस्याव्यवहितोत्तरं विच्छेदापराधप्रयुक्तमेकविधानाधीनमेव परिणामं सङ्कीर्तयदुदितार्थं न सहत इत्यवधेयम् । अन्यथा "विभागश्रुतेः प्रायश्चित्तं यौगपद्येन विद्यत,, इति पूर्वाधिकरणसूत्रमेकप्रकरणस्थक्रियाद्वयकीकारमणमाकिञ्चित्करं स्यात् । स्यादप्येतन्नौर्दैव्योत्तराधिकरणसूत्राशयविशेषो व्यग्रीभावमापन्न आसमन्तात् ।

पुनरध्यन्यथा बाधित्वा परं " पौर्वापर्य„ सूत्रार्थावलम्बनमाभिप्रायावष्टम्भनं नाम "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादि„ति सूत्रस्योपकारकं किन्न स्यात्पूर्वार्थस्यैव बलीयस्त्वे । न चैतन्मे साधकमेव तर्हि सगुणशास्त्रावलम्बिनो ब्रवीषीति सन्तोष्टव्यम् । बाधकप्रथाप्रत्यायनवस्तुसर्वस्यैव साधकताप्रत्याशावियोजकत्वात् । न वयं वियोजकमण्वपि संयोजकं जानीमः । मानानरस्त्वेवं त्वमज्ञातितरां मत्रैर्बद्धः सर्वथा । न च मे मामत्यादिनिरूपणानुवादिनो न दोषापेदमित्यैकान्तिकम् । तन्निरूपणाभिसन्धेर्न्नाह्यतयाऽस्यैकान्तिकत्वात् । एतावता श्रुतप्रकाशिकाया अप्याडम्बरो मूलानुकारी परास्तो वेदितव्यः । न च पुन"र्वेदान्तवाक्येष्वपि सगुणब्रह्मोपासनापराणां शास्त्राणामयमेव न्यायो निर्गुणत्वात्परस्य ब्रह्मण„ इति वा कथनं सङ्गतम् । अपच्छेदन्यायानवतारहेतोरुपदर्शितत्वात् । वेदान्तेष्वपि सगुणब्रह्मोपासनपराणां वाक्यानामयमेव न्याय इत्येवमेव युक्तत्वे वाक्येष्वपि शास्त्राणामिति लेखनमयुक्तम् । वाक्येष्वनुगतार्थापार्थवाचिषु शास्त्राणामतिविस्तरार्थसङ्क्लृप्तसमाचाराणामसमावेशात्कथञ्चिद्वा । वेदान्तेषु त्वनेकशाखाभेदभिन्नावयवसहस्रेषूक्तलक्षणानां नाम शास्त्राणां समावेशस्य सामञ्जस्यमाञ्जसं नापरथा ॥

यच्चाप्याक्षिप्यते पुनः प्रतिक्षिप्यते "ननु च यस्सर्वज्ञः सर्वविदि" त्यादिब्रह्मस्वरूपप्रतिपादनपराणां कथं बाध्यत्वम् । निर्गुणवाक्यसामर्थ्यादिति ब्रूमः । "अस्थूलमनण्वह्रस्वमि" त्यादिवाक्यानि कूटस्थानित्यचैतन्यं ब्रह्मेति प्रतिपादयन्ति । इतराणि च सगुणम् ।

११५ निर्गुणस्यापचेल्लघुद्धया वादिनोक्तत्वेऽपि तस्यैव निरतिशय साम्प्रदर्शनम् ।

उभयविधवाक्यानां विरोधेऽनेनैवापच्छेदन्यायेन निर्गुणवाक्यानां गुणापेक्षत्वेन परत्वाद्बलीयस्त्वमिति न किञ्चिदपहीनमिति, तथापि पूर्ववदेवानपूर्वमननमुपतिष्ठते । न हीदं महार्णवपरमहिम्नो निरूपणवेलायां फेनबुद्बुदतरङ्गाणामनुरूपमाहात्म्यसङ्कीर्तनं ॥ विशिष्य तत्र परं निर्भरो वा तज्ज्ञापकप्रबन्धबन्धनं वा तन्निरूपिताचारचारिता वा तदननुमन्यमानविवेकिजनदूषणं वा कवित्वेन चित्सुखात्मना प्रयुज्यते । न वा पुनः सार्वभौमपराभ्युदयसङ्कीर्तनदशायां मण्डलेशमान्ताधीशादीनां विभूतिस्तुतिर्वा तद्धामविभ्रमविशेषो वा तेन पुनस्तत्समानानुमहनिग्रहौ वा समुदितस्तौ स्याताम् । प्रकृतेऽपि तत्स्थानीये नन्वगुणे ब्रह्मण्युपास्यमस्तप्रत्ययधारे तरङ्गमण्डलादिनायकस्थानीयमगुणार्पसम्पत्ते. किमारिमकेत्यवस्थिनी नो-

दितशङ्कासमाधानचेष्टाया अवकाशः ।

११६ कुमत्यनुवादे वा ब्रह्म सगुण गुणि चेत्तदयुक्तमिति निरूपणम् ।

यदपि पुन "ननु च सत्यं ज्ञानमनन्तं ब्रह्मेत्यत्र सत्यज्ञानादयो गुणाः प्रतीयन्ते नेत्युच्यते । सामानाधिकरण्येनैकार्थत्वप्रतीतेरि" ति किञ्चिच्छङ्कित्वाऽन्तर्लापिकतयोच्चरितं यदेव पुनर्निमित्तीकृत्य श्रुतप्रकाशिकाकृता विजृम्भितं तदप्यनादेयमेवातितरां तथाहि । न ह्यादित्यप्रभेवात्मस्वरूपभूतानां तावत्सत्यज्ञानादीनां गुणत्वेनाभिव्याहारे मानं किञ्चित्पश्यामः । नो खलु गुणत्वावच्छिन्नसामान्यप्रत्यासत्त्या तथात्वमेषां तदभानादेव शक्यसाधनम् । न पुनर्बुध्यादिमदात्मसामान्यादेव गुणवत्ता सा परेऽप्यात्मन्यस्तीत्युपपद्यते । तन्न्यायात्तर्हि तस्मिन्नपि दुःखादियोगित्वापत्तेर्दुष्परिहरत्वात् । न हीह परमत्वात्तदयोगितावगतिरिति चेद्धन्त तर्हि तस्मिंस्तस्यास्ते स्वपक्षद्दष्टिपातो गाढतर आलक्ष्यते । एवं तर्हि कदर्थप्रवृत्त्यौपयिकव्यामोहापस्मारप्रहाणाय शिक्षयितव्य एवासि त्वं यथान्यायं तथा हि । जानास्येव हि गुणाः कामं स्वस्वभाववर्त्तनाधीनेतरेतरव्यतिभिद्यमानक्रियाविशेषधूर्वहा एकाकारतां गुणिनो बाधितुमीशत इति । यद्येकभावनामेवासञ्जयेयुस्तदा स्वनिष्ठस्वभाववैरूप्यं सर्वथो भिद्येत । सामयिकस्वरूपनिर्वाहहेतवे तथा ते भवन्त आदरणीया एवात्मन्यान्नस्थेनेति चेन्नादरणीया एवात्मानमाकर्षन्तो निजभावानुगुण्येन विक्रियां यथायथमापादयन्तश्च । न चैते प्राकृतगुणाविलक्षणा आत्ममात्रासाधारणाश्च न तानितरां परवशीकर्तुमीशत इति वाच्यम् । एवञ्चेदेते स्वरूपभूतत्वाज्जहन्तो हि गुणभावमात्मनां दधाना एवैकात्म्यमात्मना समं पर्यवस्येयुः । न ह्यस्वरूपभूता अप्येतेऽङ्गानीव देहस्य चारा इव च राज्ञो न विकुर्वन्तीत्युपपद्यते । सत्यप्याङ्गिनि देहे स्वावयवानामविकारवति विकारवत्तया सञ्छेद्यतायाः पुना राजन्यभिद्रोहितायाश्चाराणामात्मवैकल्यसम्पादिकाया आनुमानिकत्वात् । अत एव "ममात्मा भद्रसेन" इत्यौपचारिकी वात्सैनिकमनुजविशेषे "चाङ्गुष्ठं मे निरामयामि"ति प्रयुज्यमाना सङ्गच्छते । मन्यमाना हि ब्रह्मण्यमी गुणाः किमवच्छेदेन । अनवच्छेदकमनेकं ननु गुणगतनानात्वसमावेशाय कल्प्यमानमितरेतरव्यवहितप्रकाराक्रान्तं सततसन्निहितसमाचारापरिचायकं पुनर्भृगतृष्णिकोदकस्थानीयमाश्रयद्रूपकं मित्यविशेषकं प्रत्युत विहायकमात्मानं विकुर्यात् । एकदेशावच्छेदेन चेत्पटगतरूपादय इव परिच्छिन्नाश्च विनाशविषयाः स्युः । सर्वदेशेन तर्हि साधर्म्यनिधुरात्वे परस्परवैमत्येन सतत-

मभिमाऽप्यभिमावकभावविशेषपरिवासिततया न कश्चिद्वा तेषां स्थायिभावमापद्येत । साधर्म्यमेव तेषां मनुषे तदा एकेनैव गुणेनोपपन्त्या परिशिष्टानामस्त्येव वैयर्थ्यम् । नरनराधिपयोरिव धनुर्धन्विनोरिव जालजालवतोरिव वा प्रकृतेऽपि सत्यज्ञानादीनां किल गुणानां तद्वतश्च ब्रह्मणो नियम्यनियामकभावावगत्या तन्निरूपितत्वायत्तताया मुभयोर्न न्यूनतेति चेन्न । निमित्तानामनुगतानां समवधाने वैरस्योत्पन्त्या नियम्यानियामकभावभङ्गप्रसङ्गस्य प्रजाप्रजेश्वरयोर्विशिष्टसम्प्रयोगगोचरकौशलाभावप्रयुक्तवैकल्यवन्त्वेन जालिकजालयोर्वा धनुष्मद्धनुषोरनुभूयमानत्वात् ।

ननु सत्यज्ञानादीनामपलपति गुणभावं भवाननुमोदते किम्भूततां तर्हि निरूपकम्मन्यो वा चास्माभिर्न मन्यते कलया वा विचारणाकुशलैरिति । मैवम् । प्रागेव विचारणाया अपह्नवचेतास्तस्यास्तमप्राप्तमतिरेव सन्नर्होऽस्यासमन्ताद्यतः । निरस्तायां हि गुणात्मिकतायां धर्मधर्म्याद्यात्मिकताया अप्यर्थादेवापाकृततया परिशेषात्तदादिकल्पनामालिन्यसंसर्गसामान्यहीना चिदेव पर्यवस्यन्ती शङ्कामिमामनवकाशीकरोति हि मन्दमतिप्रसृताम् । ननु श्रुतप्रकाशिकाकृता "सत्यज्ञानशब्दौ सत्यत्वादिपरौ यथा द्व्येकयोर्द्विवचनैकवचन इति पाणिनीयसूत्रस्थद्व्येकशब्दौ द्वित्वैकत्वपरौ अन्यथा द्व्येकेष्विति वक्तव्यमि" ति तन्न । वर्णितगत्या सत्यज्ञानशब्दौ लक्षणया सत्यज्ञानसामान्योपलक्षितचिन्मात्रस्वरूपपरौ न तु जातु सत्यत्वादिसामान्यपरौ । स्वरूपतः सत्यत्वादितरस्य भावसाधनभूतस्य निर्धर्मके ब्रह्मण्यप्राप्तेः । नहीह 'द्व्येकयोर्द्विवचनैकवचन' इति पाणिनिस्मरणमप्यननुकूलम् । सामान्यतः प्रतीतयोरेव द्वित्वैकत्वयोर्वाचिनावमू द्व्येकशब्दौ लक्षणावृन्त्या क्वचिन्नीयमानौ प्रवृत्तिमसाधारणीं कथञ्चिद्वा बाधेते । एवञ्चान्यथा द्व्येकेष्विति वक्तव्यमित्यापत्तेरनवकाशः । आपत्तेस्त्वप्रयोजिकया अपि मत्या केन चिद्रूपस्याप्यमानत्वात् । न च "तथा श्रीवत्साङ्कमिश्रा गुणाः सत्यज्ञानप्रभृतय उतेती" ति विकल्पोपन्यसनमुपपन्नम् । विकल्पोपन्यासामासस्य त्वस्य संवृत्तासन्निरूपणेन प्रत्युक्तत्वात् । न ह्यमी श्रीवत्साङ्कमिश्रः कुहस्विद्वा विद्यावतां वार्त्ताविषयः । सति चैवं कुतस्त्यं तस्य प्रशंसाविषयत्वम् । न चार्वाचीनकतिपयगौडाभासजनाविभेदमृते सामानाधिकरण्येन वा गौडेषु कश्चिद्वा जग्राह मतं रामानुजीयम् । विद्याविशेषरहस्यपारदर्शित्वात्प्रायेण प्रभूतास्वेवेत· पूर्ववृत्तपञ्चविधगौडब्राह्मणश्रेणीष्ववच्छेदकावच्छेदेन भगवत्पूज्यपादपरम्परापरिप्राप्तवैदिकराद्धान्तैकानिष्ठागरिष्ठासु प्रत्युतैन-

त्सिद्धान्तातिरिक्तशिवद्वोहिदैत्ययोन्युपस्थापितदुर्मतसामान्यपरीहारबद्धश्रद्धासु ।
यदुक्तं प्रमेयमालायामुपन्यस्तं सामानाधिकरण्यमिति तदेतन्निर्युक्तिकमिति न नि-
ष्प्रमाणकमिति रामानुजमुखमर्दनादौ दीक्षितादिभिः सुशिक्षितमस्त्येवेत्यस्मात्परमा-
मः । न हि "लटः शतृशानचौ तत्पुरुषः समानाधिकरण,, इत्याद्यधिकृत्य सू-
त्रविभेदे भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमित्यत्र
भगवता पतञ्जलिना परिष्कृतं सामानाधिकरण्यं प्रतिपद्यामहे । कैयटभट्टैरेव भिन्न-
प्रवृत्तिनिमित्तप्रयुक्तस्यानेकस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमुच्यते
इति तु व्युत्पादितमुपलभ्यते । अस्तु तावदेवं तथाऽपि "विशेष्यभूतप्रधानार्थविष-
या वृत्तिः प्रवृत्तिः विशेष्यप्राधान्यं च गुणानां प्रतिपत्तिरपि गुणिप्रतिपत्त्यर्थेत्यनेन
सिद्धं तस्याः प्रवृत्तेर्निमित्तं द्वारं "निमित्तमात्रं भव सव्यसाचि,, त्रितीदमादि वा
न शोभनम् । गुणगुण्याद्यभेदप्रतिपादितादपर्यपर्यालोचनया सिद्धान्ते सुपरिनिश्चित-
स्यार्थस्य "निमित्तमात्रं भव सव्यसाचि,, त्रिति प्रयोगं पुरस्कृत्य द्वारत्वप्रति-
पादनानुपपत्तेः ।

यदप्युक्त "मत्र मृषावादिन आहुः समानाधिकरणं वाक्यमखण्डार्थं त-
थाहि सामानाधिकरण्यस्य तावदेकार्थपरत्वमविगीतमित्यनूद्य तत्र समानाधिकरण-
पदानि किं विशेषणमात्रपराण्युत तत्तद्विशेषणविशिष्टपराण्युत स्वरूपमात्रपराणीति
विवेचनीयमिति,, विकल्प्य न तावद्विशेषणमात्रपराणि विशेषणानामनेकत्वादेका-
र्थत्वासिद्धेः नापि विशेष्यपराणि विकल्पासहत्वात् किं क्रमेण युगपद्वा विशिष्टा-
र्थप्रतिपादनं पदानामित्यादिनाऽवान्तरविकल्पमुखेन तदप्यखण्डार्थयाथार्थ्यशिक्षा-
विशेषपुण्यानवाप्तिनिबन्धनम् ।

अखण्डार्थतामावेदयन्त्याः श्रुतिशिरोवाचो विकृतार्थप्रत्यापनायत्तत्वेनश्रा-
रस्य स्वदादेरेव मृषावादित्वात् । जगन्मृषात्ववादिनस्तु वस्तुतो वेदा एव । वय-
म्पुनस्तन्निरूढाभिसन्धिप्रत्यापनाधीनाभियुक्तसामीतिकर्त्तव्यताकास्तदास्मान ए
षामवामस्सम्पत्या ननु परया वैष्णव्या । एवञ्च मृषात्वं जगतामननुभवन्ननु-
भवन्त्या पर्यया परमासुर्या तद्धारणाविघटनाऽनुकूलविरूपप्रकृत्या पराभूतकरणग्र-
यो विदुषामग्रे पा मृषाभाष्येवासि धार्ष्ट्यमुखेन । वद तावत्त्वं किमखण्डार्थतामेव
नाम्युपैप्युत सखण्डार्थतामपि तत्रापि द्वे अपि ते शब्दतो वाऽर्थतः । न द्वितीयः ।
सखण्डार्थतायामभिमतायां ते प्रतियोगिमुद्रयाऽखण्डार्थतायासिद्देरार्थकत्वात्सभे-

दनिर्भेदशब्दप्रत्ययवत् । नापि प्रथमः । सखण्डपक्षाभ्युपगतेरेव ते तिरस्कारकारित्वादनभिमनेरेतस्य । न वा तृतीयः । शब्दत उररीकार ऊरीकरणस्यैवार्थतस्त्वभ्युपगमनसा गम्यमानत्वात् । न हि ते कुहेतवोऽत्र वाङ्मालिन्यमात्रफलिनो वितेयव्यक्तीकारलेशाय वाऽवकल्पन्ते । अपि तु "स्वयम्नष्टः पराशयती,,तिन्यायस्य परमुदाहरणभूताश्चलचेतोवञ्जनमात्रवृत्यपहारका आपद्यन्ते । युक्तचनुभूतिप्रकर्षपरिपाकरमावद्देदशिरोरहस्यविदान्तु ज्ञानत्वमाखण्डार्थमेव ततोऽतिरिक्तम्पुनरज्ञानमेव । विपयविषयिसम्बन्धसमास्पदत्वात्तस्याऽसमन्तात् । न हीदृशं वस्तु ज्ञानतया शास्त्रमभिधत्ते । शास्त्रादृतेऽपि प्राकृताना वा तदवगतेः । वेदपदप्रवृत्तिनिमित्तालौकिकार्थप्रतिपत्तिव्याकोपप्रसङ्गाच्च । यदाहुः "प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदन्ति वेदेन तस्माद्वेदस्य वेदते,,ति वार्त्तिककारपादा मीमांसायाः । कारिकाया एतस्याश्श्रुतिः किल मूलीभूता "नावेदविन्मनुते तं बृहन्त,,मित्याद्या आलक्ष्यते । अत्र ह्यलौकिकत्वमखण्डार्थत्वाभिप्रायकम् । एवं हि "कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोती,,त्यारभ्य "सर्वं तत्प्रज्ञानेत्रं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म,,त्यैतरेयिभिराम्नायते । अत्र हि 'प्र, इत्युपसर्गसमभिव्याहृतज्ञानशब्दो जातिगुणक्रियाविशेषलक्षणोपाध्यनवच्छिन्नामेव धियन्तावद्ब्रियोनयत्यव्यवच्छिन्नत्वात्दारात्तदवच्छिन्नाम् । न चेह बहिर्मुखाभ्युपेतमूर्त्तिविशेषविषयं ज्ञानमिष्यते मनागपि । तस्यापि मूर्त्तत्वेनापारमार्थत्वात् । अत एव "दिव्यो ह्यमूर्त्तः पुरुषस्स बाह्याभ्यन्तरो ह्यज,,इत्याद्या वा श्रुतिकाली चकास्ति नूनं त्वद्व्यूहकरालाकारप्रकारविध्वंसिनी । न खल्वसितस्वभाविता धीरखण्डार्थाऽभिमन्यते नेत्युक्ति क्वचिदपि कृतिकृतकीर्तिकरपदीव्य द्विधायन्त्रितमस्मीकारासहाऽऽबध्यते । खण्डप्रत्ययप्रसारमार्गवर्त्मतावच्छेदेन स्वानुभूतिसञ्जीवनप्रयोजनैकहेतवे स्थितसत्तासमृद्धसँराधनफलिने प्रतिपदमखण्डप्रतीतिधारायास्स्वानुगतायाः स्थिततरत्वात् । सा पुनरनिच्छतोऽपि स्वां नूनं जनानात्मेच्छानीयमानयोजनावनो निजेच्छाभिरनुगताकारप्रकारपर्यवसायिनीभीरहस्यमावेदयन्ती विविक्ततया सम्प्रतीयते । नत्वे स्यात्पूर्वमाविरहस्यम्पुनर्निराबाधं व्यक्तं हन्त वस्तुतरमावि प्रतीतिमभ्यागच्छेज्जातु चित् । सेयं प्रतीतिस्वरस्या निदानदशान्तामखण्डार्थापरपर्यायभूतान्तावत्सर्वशो निरवशेषां लक्ष्मी-

करोत्येवाङ्गजस्येन । इदमेवोदितमानोपपत्यनुमूत्यातिशयितामभिप्रेत्याखण्डार्थतां "संसर्गासङ्गिसम्यग्धीहेतुता या गिरामियम् । उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थते,,ति तत्वप्रदीपिकाकारास्तस्या लक्षणं जगुरत्रातिविशदम् । अभ्यूचिरे च पञ्चपादिकाचार्य्याः "पदानां परस्परानवच्छिन्नार्थानामनन्याकाङ्क्षाणामव्यतिरिक्तैकरसप्रातिपदिकार्थमात्रान्वय,, इति । वाच्यतासम्बन्धेनेतरेतराविशेषितार्थानामितरेतरवाच्यवाचकानां पर्यायातिरिक्तानामित्यर्थः । यस्मादनतिरेकिंचिद्विशेषणाविशिष्टं तस्मादेकरसम् । संसर्गसमास्पदीभूतप्रतीतिसामान्याविषयम् । एवमात्मनः प्रातिपदिकार्थमात्रस्य वा अन्वयः उपलक्षणविधया विशिष्टानुभूतिसम्पादकतावच्छेदकयोग्यतानयमन्वयः ॥

ननु न कथाप्येवमात्मा पदान्वयः पदपदार्थमर्यादाप्रकारावलम्बी तद्रूपाभिज्ञैराळक्ष्यते । नैष दोषः । विना शक्तिं विना लक्षणां विना च सम्बन्धान्तरं निद्रितोत्थापकनिर्व्याजवाक्यवन्महावाक्यकदम्बकैरखण्डार्थस्यानितरस्वरूपसत्तापर्य्यवसायिनस्समादरैकयोग्यत्वात् । न चेहाप्युदितापत्तिरप्यूहेत्याशङ्कनीयम् । घटपदादिप्रतिनियतसामग्र्याः प्राक्कालीनक्लृप्तिविभेदमारूढायास्सामान्यमुखेनात्र विचारणाविषयत्वेऽपि साद्यस्कप्रज्ञायास्तदादिनिरपेक्षाया अविवादमनुभूयमानत्वात् । न ह्येवमनुभूतेऽर्थे पूर्वाभ्यस्तवस्तुसन्तानगोचरामाकाङ्क्षां स्वयं वा तटस्थजनः कश्चन कुर्वीत् । चारितार्थ्यस्य तावतैवोपपत्तावाशङ्कासामान्यस्य स्वतो निरस्तत्वात् । नो खलु निन्हवार्हमर्थं निर्व्यग्रप्रज्ञाः कुहस्वित्प्रक्रमन्ते । प्रक्रममाणा ह्यनाकलितवस्तुतत्त्वा एवेत्यास्तान्तावदियं बाह्यपेनाऽचिन्ता ॥

निबन्धोऽयं भागद्वयमितविगह्यार्थभिन्नयो
यशोराशेर्वाऽपि प्रथितजनपाखण्डिवचसाम् ।
निहन्ता निस्सीमामृतमयसुमानावळिभिर-
प्युदारार्थप्रोतस्थितिभिरभिरक्षेत्सुहृदयान् ॥ १ ॥
तदिह निहतवस्तुन्यत्रविज्ञानधाम्नि
व्यवहितमतिमत्तामाप्य धीराः सुमत्या ।
यदि यदनविनोदव्यापृताः स्युः समन्ता-
त्स्फुरितमतिविभावाः ह्लावभावान् लभेरन् ॥ २ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यवर्यपदवाक्यप्रमाणपारावारपारीण-त्वाद्यनेकपदाङ्कितजगद्गुरुश्रीमच्छङ्कराचार्यश्रीशारदापीठद्वारकासंस्थानाधी-श्वरश्रीमत्केशवाश्रमस्वामिदेशिकवरकरकमलसञ्जातजगद्गुरुश्रीमच्छङ्करा-चार्यश्रीशारदापीठद्वारकासंस्थानाधीश्वरश्रीमद्राजराजेश्वरशङ्कराश्रमस्वामि-विरचितायां त्रिदण्डिमतविभेदिन्यां प्रथमो भागः ॥

श्रीमच्छङ्करभगवत्पूज्यपादाचार्याणामवतारशकाब्दाः २३९२

मार्गशीर्षशुक्लसप्तम्यां भौमे विक्रमशकाब्दा. १९४८ उज्जयिन्यां नः

शिष्यसञ्चारशालिन्या राजते वसतिः श्रीमहाकालनाथमन्दिरे ॥



अस्माभिरारचितस्य हि निबन्धस्यास्य व्यवस्थितविषयविशेषाणामनुकूलस्यापि
स्वस्वस्याविभेदस्य श्रीमज्जयपुराधिपतीनमहीपालमहामात्यादितिनिर्गतातिशयात्मनः
श्रीमत्या यथाशास्त्रं काशिकायाः समवाप्तजन्मनः प्रतिरूपकामिह जिज्ञासूनामनुमहा-
य गुर्जरदेशीयपाटणनगरीजैनपुस्तकालयात्तत्रत्यनारायणभारतीमहोदयेनाधिगतस्यो-
द्धाटयते तथा हि ॥

श्रीविश्वेश्वरो जयतु । जयति श्रौतधर्मार्कः स्मार्तधर्मोहगोदयः । सत्पुराणै-
रुद्यमानः पाषण्डध्वान्तनाशकः ॥ १ ॥ इदानीं बहवो मुग्धजना रामानुजीयानां
दम्भमत्याचारङ्गाविलोक्य तद्विप्रलब्धाः सन्तः शास्त्रसम्मतमपि स्वकुलधर्ममपहाय
तन्मार्गे प्रविशन्ति । स च मार्गः श्रुतिस्मृत्यादिमूलविधुरोऽत्यन्तनीचजात्युद्भूतपुरु-
षप्रवर्तित इति । तत्र प्रविष्टा वर्णाश्रमधर्माधिकारच्युता भवन्तीति । तेषामेव
ग्रन्थे प्रोक्ता तन्मूलपुरुषोत्पत्तिस्तावदुच्यते । श्रीनिवासाचारिकृते दिव्यसूरिचरिते
चतुर्थे सर्गे । अस्ति पूर्वपयोराशेः कापि पश्चिमगोचरा । मण्डले पाण्ड्यभूपस्य
नगरी कुरुकाह्वया ॥ तत्रासीत्पादजातेषु कश्चिद्भागवताग्रणीः । श्रीमत्पल्लीविना-
शीन्द्रः सीमातीतगुणोल्बणः ॥ तस्य धर्मधरो नाम तनयः समजायत । चक्रपाणि-
स्ततो जातश्चक्रपाणिपरायणः ॥ अजायत सुतस्तस्माद्रत्नराजेति संज्ञितः । सुमति
सुषुवे सोऽपि सुतं पाटललोचनम् ॥ पुत्रं प्रासूत पाकारि पुत्रं पाटललोचनः । का-
रीतिरिति तनयो जातः कारीतिरहितस्ततः ॥ ततो जातः सुतस्तस्माच्छठकोप इतीरि-
तः । तमाहुः कारिजं सन्तः शठकोपं पराङ्कुशम् ॥ वकुलाभरणाख्यं च तमेव का-
रितनन्दनम् ॥ इति ॥ अत्र शूद्रः स्यात्पादजो दास इति त्रिकाण्डशेषकोशे शूद्रवर्गा-
रम्भे प्रोक्तत्वात्पल्लीसंज्ञकस्य शूद्रस्य वंशे जातः शठकोपः स च रामानुजीयमार्ग-
स्य प्रथमप्रवर्तकश्चाद्याचार्यः । तथा हि रामानुजीयानां गुरुपरम्परायामुक्तम् । अ-
स्मद्देशिकमस्मदीयपरमाचार्यानशेषान्गुरून् श्रीमल्लक्ष्मणयोगिपुङ्गवमहापूर्णौ मुनिं
यामुनम् । रामं पद्मविलोचनं मुनिवरं नाथं शठद्वेषिणं सेनेशं श्रियमिन्दिरासहचरं
नारायणं संश्रये । इति । अत्र पूर्वं स्वकीयगुरुपरमगुरुपरात्परगुरुप्रभृतींश्चाश्रित्य रा-
मानुजप्रभृतीन्क्रमेणाश्रयति तदुपासकः । तत्र लक्ष्मणयोगिपुङ्गव इति रामानुजस्य
संज्ञा कृता । रामानुजस्य गुरुर्महापूर्णः । तस्य गुरुर्यामुनः । यामुनस्य राम इत्येवं
क्रमो ज्ञेयः । पद्मविलोचन इति पुण्डरीकाक्षस्य संज्ञा । शठद्वेषीति शठकोपस्य
संज्ञा । अयमेवास्य मार्गस्य मनुष्येषु प्रथमं प्रवर्तक इत्यस्मादेव श्लोकान्निश्चीयते ।

अनन्तरञ्च सेनेशो विष्वक्सेन श्रीर्लक्ष्मी नारायणश्चेत्यन्ते त्रयो देवविशेषाः । तेषाञ्चरित्रं चार्षग्रन्थसम्मतमेव प्रमाणं नान्येनोक्तमिति । शठकोपान्तैर्वेयं परम्परेति । वेदान्ताचार्यकृतायां दिव्यसूरिप्रभावदीपिकायाञ्च । परः पद्माभर्त्तुः प्रथमपतिरन्यावयववान् प्रपत्तौ भक्तौ च प्रतिनियतचित्तः कविवरः । हरिर्नित्यो यद्वाजनिमदवरो दैशिकवरः प्रतीतः पूज्योसावमृत इह वेदातिगमतिः ॥ नित्यो नित्यजीवः पञ्चप्रकारेषु जीवेषु कदाचिदप्यप्राप्तसंसारो नित्यजीव इत्युच्यते । श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥ जनिमन्तो जीवा यस्मात्स जनिमवरः जनिमत्सु ब्राह्मणादिषु अवरः कनिष्ठः शूद्र इत्यर्थः वेदमतिगताऽतिक्रान्ता मतिर्यस्य स वेदातिगमतिः । इत्यत्र असौ शठकोपः इह जगति पूज्य इत्यन्वयः अन्यत्सर्वं शठकोपस्य विशेषणम् । प्रथमपतिरिति मार्गस्य प्रथमः प्रवर्तक इत्यर्थः । अत एव दैशिकेषु आचार्येषु वरः श्रेष्ठ इत्यर्थः अन्यावयववानिति, अन्ये भक्तिसारादयो द्वादश आलवारसंज्ञका रामानुजीयाः नामाचार्या अवयवाः सन्ति यस्य सोऽन्यावयववान् । भक्तिसारादयोऽपि नीचजातीया एव । तथाहि दिव्यसूरिचरित्रे द्वितीयसर्गे ९२ श्लोके भक्तिसारस्य स्वरूपवर्णनम् । विचक्षणो विश्वविमोहहेतोः कुलोचिताचारकलानुवक्तः । पुण्ये महीसारपुरे विधाय विक्रीय शूर्पं विचचार योगी । इति । एवं भिल्लजातीयः परकालः । चाण्डालजातीयो मुनिवाहन इत्याद्य येषामपि वर्णनं तस्मिन्नेव ग्रन्थे तै छुने भार्गवपुराणे प्रपन्नामृते च द्रष्टव्यम् । पुनर्वेदान्ताचारिणा, नित्योऽथ मुक्तनूतनद्गणको मुमुक्षुर्योसादिवद्भगवता किमनुप्रविष्टः । अब्यादिसूनुरिह वर्णयुगक्रमात्किमासीत्पुराणपुरुषः शठवैरियोगी । इत्याचार्योक्तेरित्युक्तम् । अत्र वर्णक्रमो युगक्रमश्चेति कृते ब्राह्मणस्यात्रेः पुत्रो दत्तात्रेयः । त्रेतायां क्षत्रियस्य दशरथस्य पुत्रो रामः । द्वापरे वैश्यस्य नन्दस्य पुत्रः कृष्णः । कलौ च शूद्रस्य कारिणः शठकोपः इति स्पष्टमायाति । नेतु द्राविडता वेदान्तत्रैवर्णिकता गतः । मद्भक्तः शठकोपाख्यो भविष्यति मदिच्छया इत्युदाहरणे च त्रैवर्णिकातिरिक्त एवात्रैवर्णिक इति स्पष्टम् । अस्य तुरीयवर्णावतारोऽपि नाचार्यत्वभञ्जकः । तुरीयवर्णो भगवत्पादजन्मत्वात्सकलेतरवैलक्षण्ययुक्तः परम्परायाः प्रथमप्रवर्त्तकत्वात् । गुरुपरम्परामध्येऽप्यस्यैव निवेश इत्यादि वेदान्ताचारिणा बहुशः सिद्धान्तितत्वात् । विस्तरावलोकनेच्छा चेत्तत्कृतदिव्यसूरिप्रभावदीपिकायां द्रष्टव्यम् । यद्यपि क्वचि

दत्राभिनायन्ते योगिनः सर्वयोनिषु। प्रत्यासितात्मनाथानां नैषां चित्रं कुलादिक-
मिति तेनोक्तं तथाप्यस्य श्लोकस्यार्षत्वाभावात्तद्वाक्येन भारद्वाजसंहितास्थत्वात्।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत इत्याद्यार्षशास्त्रविरोधादप्रामाण्यमेव। य-
द्यपि च भागवतादिषु "त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भजन्। सलिङ्गान्ताश्रमां-
स्त्यक्त्वा चेदविधिगोचर इत्यादिषु वर्णाश्रमधर्मानादरः श्रूयते तदपि वर्णाश्रमा-
चारवता पुरुषेण परः पुमान्विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम्। वर्णाश्र-
मेषु ये धर्माः शास्त्रोक्ता नृपसत्तम। तेषु तिष्ठन्नरो विष्णुमाराधयति कश्चनेति वच-
नसद्भावे कथं संस्कारमयूखेऽन्यत्र चोभयविधान्यपि वाक्यान्युपन्यस्यैतेषां विधि-
निषेधानां वैष्णवपरतया व्यवस्थेति केचित्। बहवस्तु द्विविधानामपि निर्मू-
लतामाहुरिति बहवइति निर्देशेन निर्मूलतैव सम्मता तेषामिति ज्ञायते। अस्मा-
भिरपि बहूनामनुग्रहो न्याय्य इति तथैव स्वीकर्तव्यम्। तच्चासत्यपि विनियोजकवा-
क्येऽस्मिन्नेव वाक्ये विधिः कल्प्यते तन्मन्दम्। न धार्यं देवताचिन्हमित्यादिना
निषेधात्। न च सामान्यनिषेधस्य विशेषविधिना अग्नीषोमीयं पशुमालभेतेति
विशेषविधिना भूतहिंसानिषेधकसामान्यवचस्येव सङ्कोच एवेति वाच्यम्। पुराणेषु
अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः। अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः।
तप्तमुद्रा ह्यन्त्यजाय हरिणा निर्मिता पुरा। भूदेवस्तप्तमुद्रान्तु चिन्हं कृत्वा विमूढ-
धीः। इह जन्मन्यशुद्धः स्यान्मेत्य श्वा च भविष्यतीत्यादिना विशेषतोऽपि निषेधा-
त्। न च पौराणनिषेधेन कथं श्रौतस्य धारणस्य बाधः स्यात्। विरोधे
त्वनपेक्षं स्यादसति ह्यनुमानमिति मीमांसासूत्रोक्तविरोधाधिकरणाविरोधादिति
वाच्यम्। श्रुतेरन्यपरत्वस्योक्तत्वात्। अस्तु वा श्रुतिस्तथापि स्मृतिः
पुरुषवाक्यानुसारेण कुण्डगोलादिरेव तत्राधिकारी। इष्यते हि। प्रतिपादन-
मस्ति एतदीयधर्मस्य गन्धोऽपि नास्ति अत एतैरुदाहृतं वचनमानमुपलभ्य सद्भिः
सहसा प्रामाण्यग्रहो न कार्यः। किन्तु कुत्रत्यमेतदिति पूर्वं तस्य मूलान्वेषणं
कर्तव्यं कृते च मूलान्वेषणे कृत्रिमग्रन्थस्यमेव तद्भविष्यति आर्षग्रन्थस्थं चार्षप्रक-
रणादिभिरन्यार्थमेवेति निश्चयः। इदानीं धर्मे प्रमाणभूतानां शास्त्राणां कृत्रिम-
ग्रन्थैः सङ्कीर्णत्वात्तन्निर्धारणोपाय उच्यते। यावन्तो वेदस्य तदङ्गोपाङ्गानां च
सोपबृंहणानामध्ययनाध्यापने प्रचुरव्यवहारो वर्तते येषाञ्च सर्वैः प्रामाण्यत्वेना-
ङ्गीकृता व्याख्यास्ति तत्र नास्ति सन्देहः तदितरस्सर्वं सन्देहास्पदमेव सन्दिग्ध-

त्वासन्दिग्धाद्विलक्षणधर्मप्रतिपादकं चेदकृत्रिममेवेति निश्चयः । प्रकृते तु रामानुजमते तन्मतस्याद्याचार्यैः शठकोपादिभिः पूर्वं स्वभाषायामेव ग्रन्थं निर्माय स्वशिष्या उपदिष्टाः स च ग्रन्थो द्रविडभाषायामेवास्ति । तदनुयायिभिस्तु तस्य द्रविडवेदसंज्ञया व्यवहारः क्रियते । पश्चादुत्तरोत्तरमुत्पन्नास्तदनुयायिनो अपि तन्मतप्रविष्टा बभूवुः । ते चाधीत्याधीत्य संस्कृतेऽपि व्युत्पन्ना भूत्वा द्रविडवेदस्य संस्कृतभाषायां व्याख्याञ्चक्रुः सा च व्याख्या तदनुयायिभिर्द्राविडभाष्यसंज्ञया व्यवह्रियते । अनन्तरञ्च श्रीभाष्यप्रभृतयो बहवो ग्रन्थास्तन्मतपोषकास्तैर्निर्मिताः । किञ्च आर्षशास्त्रेषु तन्मतस्य मूलमनुपलभ्य मूलारोपणार्थं बहवो ग्रन्था आर्षनाम्ना रचितास्तेषु च बहूनामपरिशीलितश्रुतिस्मृतीनां सत्यत्वभ्रमो जायतेऽतः पाषण्डभीरुभिः पूर्वोक्तप्रकारेण तेषां निर्धारणं कर्तव्यम् । अथैतैर्लिखितानि शिवमुनिब्राह्मणादिनिन्दावाक्यानि यथा एतैर्निर्मितायां वसिष्ठस्मृतौ तापादिपञ्चसंस्कारा महाभागवताः स्मृताः । चक्रादिहेतिभिस्तप्तं ताप इत्यभिधीयते । संस्कारः प्रथमः प्रोक्तो द्वितीयः पुण्ड्रधारणम् । तृतीयं नामकरणं वैष्णवं पावनं परम् । सार्थज्ञानं चतुर्थस्तु मन्त्राध्ययनमुच्यते । पञ्चमस्तु हरेः पूजा पञ्चरात्रोक्तमार्गतः । तदीयार्चनपर्यन्तं हरेराराधनं स्मृतम् । इत्येवमादिसंस्कारो महाभागवतः स्मृतः । अन्ये त्ववैष्णवाः प्रोक्ता हीनास्तापादिभिर्द्विजाः । तथा ह्यवैष्णवा ज्ञेयाः प्राकृताः पापकारिणः । वादशास्त्रेषु निपुणास्ते वै नरकगामिनः । अवैष्णवत्वं विप्राणां महापातकसंज्ञितम् । अवैष्णवस्तु यो विप्रः सर्वकर्मसु गर्हितः । रौरवं नरकं प्राप्य चाण्डालीं योनिमाप्नुयात् । चतुर्वेदी च यो विप्रो वैष्णवत्वं न विन्दति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः । पाषण्डिनञ्च पतितमुन्मत्तं शवहारिणम् । अवैष्णवं द्विजं स्पृष्ट्वा सवासा जलमाविशेत् । चक्रादिचिह्नहीनेन स्थाप्यते यत्र कर्मणि । न सान्निध्यं हरिर्याति क्रियाकोटिशतैरपि । अवैष्णवस्थापितानां प्रतिमानाञ्च वन्दनम् । यः करोति स मूढात्मा रौरवं नरकं व्रजेत् । शूद्रादीनान्तु रुद्राद्या अर्चनीयाः प्रकीर्तिताः । रुद्रार्चनं त्रिपुण्ड्रञ्च यत्पुराणेषु गीयते । तदब्राह्मण्यविषयमेवमाह प्रजापतिः । तस्मात् त्रिपुण्ड्रं विप्राणां न धार्यं मुनिसत्तमाः । यदज्ञानात्तं बिभ्रियुः पतितास्ते न संशयः । अवैष्णवस्तु यो विप्रश्चाण्डालादधमः स्मृतः । न तेन सह भोक्तव्यमापद्यपि कदाचन । इत्यादि । एवं हारीतस्मृतौ च चक्रादिचिह्नरहितं प्राकृतं कलुषान्वितम् । अवैष्णवन्तु तं दूराच्छ्व-

पाकमिव सन्त्यजेत् । रुद्रार्चनाद्ब्राह्मणस्तु शूद्रेण समतां व्रजेत् । न भस्म धारयेद्विप्रः परमापद्गतोऽपि वा । मोहाद्वै बिभृयाद्यस्तु स सुरापो भवेद् ध्रुवम् । इत्यादि । एतेषां पराशरस्मृतौ च विना यज्ञोपवीतेन विना चक्रस्य धारणात् । विना द्वयेन वै विप्रश्चाण्डालत्वमवाप्नुयात् । अचक्रधारिणं विप्रं यः श्राद्धे भोजयिष्यति । रेतोमूत्रपुरीषादि स पितृभ्यः प्रयच्छति । शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः । स जीवन्नेव चाण्डालः सर्वधर्मबहिष्कृतः । इत्यादि । ये चैतेषां पाषण्डशास्त्राणाम्प्रामाण्यमधिगच्छन्ति ते कथञ्चिच्छूद्रशिष्यस्वगर्हामगणयित्वापि चक्रादिधारणं कृत्वा स्वस्य चाण्डालत्वं दूरीकुर्वन्तु नाम किन्त्वेतद्धर्मस्य स्वल्पकालावधिप्रचलितत्वान्मृतपूर्वपुरुषाणां तद्धारणाभावादिदानीं धारयितुमशक्यत्वाच्चैषां चाण्डालत्वमेवाङ्गीकार्यं स्यात् । तथा च सति चाण्डालानां सन्ततय एव एते इदानीं तप्तचक्रादिधारणेन ब्राह्मणोत्कृष्टजन्मानो भवन्तीत्यत्याश्चर्यपर्यवसानं भवति । वस्तुतस्तु १२ अध्याये ९५ श्लोके मनुः, या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य तमोनिष्ठा हि ताः स्मृताः । उत्पद्यन्ते च्यवन्ते च यान्यतोऽन्यानि कानिचित् । तान्यर्वाक्कालिकतया निष्फलान्यनृतानि च । इति । प्रेत्यतमोनिष्ठाः परलोके नरकनिष्पादका इत्यर्थः । तस्मान्मन्वादिभिर्निषिद्धान्याधुनिकवचनानि नरकभीरुभिर्हेयान्येव । किञ्चैतैः कल्पितेषु ग्रन्थेषु श्रुतिस्मृतिपुराणादिभिः परमाराध्यत्वेन प्रतिपादितस्य भगवतः शिवस्याप्यपूज्यत्वप्रतिपादनं दृश्यते । स्वयन्त्वेते शूद्रशूर्पकारभिल्लचाण्डालादिजातीयानां शठकोपभक्तिसारपरकालमुनिवाहनादीनां द्वादशानामाळवारसंज्ञया प्रसिद्धानां तन्मतप्रवर्तकानामाद्याचार्याणां प्रतिमास्थापनपूर्वकं पूजनं तदुच्छिष्टभोजनञ्च कुर्वन्ति । तत्र प्रमाणं चैतैः स्वमतानुसारेणैव दिव्यसूरिप्रभावदीपिकायां बहुलतरं लिखितम् । विष्णुपुराणे त्वेतादृशानां निन्दा स्पष्टतया श्रूयते तथा हि ६ अंशे १ अध्याये १४ श्लोके सर्वमेव कलौ शास्त्रं यस्य यद्वचनं द्विज । देवताश्च कलौ सर्वाः सर्वः सर्वस्य चाश्रमः । इति । किञ्च एतेषां नारायणसारसङ्ग्रहे पद्मोत्तरखण्डे च कणादं गौतमं शक्तिमुपमन्युं च जैमिनिम् । कपिलं चैव दुर्वासं मृकण्डञ्च बृहस्पतिम् । भार्गवं जमदग्निञ्च दशैतांस्तामसान् ऋषीन् । मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च । आग्नेयञ्च षडेतानि तामसानि प्रचक्षते । मानवी याज्ञवल्क्यी च आत्रेयी दाक्षिणी तथा । कात्यायनी वैष्णवी च राजसी स्वर्गदा

स्मृतिः । गौतमी बार्हस्पत्यी च सांवर्ती च यमस्मृतिः । शाङ्खी चौशनसी देवि ताम-सी निरयप्रदा । इत्याद्युपक्रम्य सात्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदा मताः । तथैव तामसा देवि निरयप्राप्तिहेतव इत्युक्तम् । अत्र श्लोकाभ्यां निर्दिष्टानां स्मृतिपुराणानां सात्विका मोक्षदाः प्रोक्ता इत्यादिपुंल्लिङ्गेन सह सम्बन्धासङ्गतेर्वाङ्मर-चितान्येवैतानि वचनानि वायुपुराणादिषु विशुद्धसत्वप्रधानत्वेनोक्तानामृषीणां ता-मसत्वेन कीर्तनमपि पाषण्डत्वसूचकमेव । येचैतानि मत्स्यपुराणादीनां नरकप्रद-त्वप्रतिपादकानि वचनानि सत्यानीति स्वीकुर्वन्ति तैर्मत्स्यपुराणादिकर्तारो मुनयो वञ्चका इति वक्तव्यम् । मुनिभिस्तत्तच्छास्त्रस्य फलस्तुतिषु श्रेयःसाधनत्वेन प्रशं-सितत्वात् । तथा हि मात्स्ये वाराहचरित्रे इदं पुराणं परमं पुण्यं वेदैश्च सम्म-तमिति । अन्तिमाध्याये च यदेनत्सर्वशास्त्राणां पुराणं मूर्ध्नि संस्थितमिति । वामन-पुराणे १२ अध्याये श्रुतिर्यथायद्वादेहागमेषु मुख्यं पुराणेषु यथैव मात्स्यमिति भागव-तेऽपि ८ स्कन्धे २४ अध्याये मात्स्यमधिकृत्योक्तम् । पुराणसंहितां दिव्यां सा-ङ्ख्ययोगक्रियावतीमित्यादि । एवं सर्वेषामार्षशास्त्राणामुपादेयत्वप्रतिपादकानि श-तशो मुनिवाक्यान्युपलभ्यन्ते । तानि तु विस्तरानुमेयानि । तथैनेषां भारद्वाजसं-हितायां । नातिसङ्गं परिचरेत । पित्रादीनप्यवैष्णवान् । ब्रह्मरुद्रादिगौरशार्कतच्छ-क्तिप्रसवादयः । नित्यमभ्यर्चने वर्ज्याः कामोपि स्यात्तन्मूलः इत्याद्युक्तम् । तन्तु मन्वादिभिरतीव विरुद्धं, तथा हि । २ अध्याये २२९ श्लोके मातरं पितर-मुपनेतारञ्चाधिकृत्याह मनुः । तेषां त्रयाणां शुश्रूषा परमं तप उच्यते । न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् । सर्वे तस्यादृता धर्मा यस्यैते त्रय आ-दृताः । अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः । इति । योगी याज्ञवल्क्यः ब्रह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः । तल्लिङ्गैरेव मन्त्रैस्तान् पूजयेन्नित्यमादरादिति ब्रह्मरुद्रादीनां पूजा ब्रह्महं कार्यवेति विदधाति । तथा न शूद्रा भगवद्भक्ता वि-प्राः भागवताः स्मृताः । सर्ववर्णेषु ते शूद्रा ये न भक्ता जनार्दने । श्वपचोपि महीपाल विष्णुभक्तो द्विजाधिकः । विष्णुभक्तिविहीनस्तु द्विजोऽपि श्वपचाधम इ-त्यादयः श्लोकाः स्वमाहात्म्यप्रतिपादनार्थं तदविरोधिब्राह्मणनिन्दनार्थं चैतैर्निर्मित-स्तेऽपि मनोः प्रथमाध्यायस्य ९८-९९ श्लोकाभ्यां तथा ९ अध्यायस्य ३१७-३११ श्लोकाभ्यां निरसनीयाः यथा । उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती । स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते । ब्राह्मणो जायमानो हि पृथिव्यामधि-

जायते । ईश्वरं सर्वभूतानां धर्मकोशस्य गुप्तये । अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् । एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु । सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् । इति । किञ्च न शूद्रा इत्यादिवचनानां तात्पर्यान्वेषणे क्रियमाणे श्रुतिस्मृत्यादिषु विष्णुभक्तेरभक्तेर्वा इहैव जन्मनि ब्राह्मणत्वशूद्रत्वापादकत्वेनानुक्तत्वात्तथा व्यवहारादर्शनाच्च । चातुर्वर्ण्यसाङ्कर्यप्रतिपादनपरत्वमेव तद्वचनप्रामाण्यवादिषु तथा व्यवहारदर्शनात् । तादृशाचारश्च विष्णुपुराणे ३ अंशे ७८ अध्याये चतुर्णां यत्र वर्णानां मैत्रेयात्यन्तसङ्करः । तत्रास्थासाधुवृत्तीनामुपघातोपजायते । ब्राह्मणाद्याश्च ये वर्णाः स्वधर्मादन्यतोमुखम् । यान्ति ते नरकंसंज्ञान्तु हीनकर्मस्ववस्थिताः । तस्मादेतान्नरोन रवांश्चापीसंल्यागदूषितान् । सर्वदा वर्जयेत्प्राज्ञ आलापस्पर्शनादिषु । इति निन्द्यैव कृत्वा तथा श्वपचोपि महीपाल इत्यत्र पूर्वार्द्धे विष्णुभक्तेभ्यो द्विजेभ्यो विष्णुभक्तस्य श्वपचस्याधिक्यम् । उत्तरार्धे च विष्णुभक्तिहीनेभ्य श्वपचेभ्यो विष्णुभक्तिहीनस्य द्विजस्याधमत्वं विवक्षितम् । अन्यथा अर्थापत्तिरेव । पूर्वार्द्धे द्विजस्याधमत्वे उत्तरार्द्धे च श्वपचस्योत्तमत्वे प्राप्ते पुनरुक्तत्वं स्यात् । तदेतादृशवचनरचने कस्यार्थस्य प्रवृत्तिः सम्भाव्यते । यच्च ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्राः । ये वा ललाटपटले लसदूर्ध्वपुण्ड्रा ते वैष्णवा भुवनमाशु पवित्रयन्ति । इत्यादि वचनानि स्वकीयलिङ्गधारणकारणत्वेन निर्मितानि । तदपि मत्स्यपुराणे १६ अध्याये वर्जयेल्लिङ्गिन सर्वाञ्छ्राद्धकाले तु धर्मवित् । इति । मात्स्ये एवमेव प्रतिष्ठाप्रकरणे च नैताद्धे शीलेन न दाक्षिकेन न लिङ्गिना स्थापनमत्र कार्यम् । विप्रेण कार्यं श्रुतिपारगेण गृहस्थधर्माभिरतेन नित्यमिति लिङ्गधारणस्य निषिद्धत्वापादकत्वेनोक्तत्वाद् दूषितान्येव । वास्तवन्तु विष्णुभक्तलक्षणे विष्णुपुराणे ३ अंशे ७ अध्याये प्रोक्तम् । न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्तमिति । एवमेतेषां सर्वमप्याचरणं शास्त्रविरुद्धं प्रदर्शितम् । उपासनाप्येतेषां विना द्वयेन वै विप्रहनाणरान्त्वमवाप्नुयादित्यभोक्तो द्वयमन्त्रो यथा । श्रीमन्नारायणचरणौ शरणं प्रपद्ये । श्रीमते नारायणाय नमः इति । अयमेवैतेषां परमोपास्यो मन्त्रः । अस्यातीव महिमा स्वग्रन्थेष्वेतैरुक्तः किन्त्वस्यानुपूर्वी आर्षे मूले नास्त्येवेति निश्चयः । सिद्धान्तोऽप्येतेषां विशिष्टाद्वैत

ति । तस्यार्थस्तु चिच्छब्दवाच्या जीवा अचिच्छब्दवाच्यो जडप्रपञ्चः तदुभयविलक्षणं ब्रह्म तत्र स्थूलचिदचिद्विशिष्टं ब्रह्मकार्यं सूक्ष्मचिदचिद्विशिष्टं ब्रह्मकारणं विशिष्टञ्च विशिष्टञ्च विशिष्टे विशिष्टयोरद्वैतं विशिष्टाद्वैतमिति । एतच्चाद्वैतवादिभिर्बहुशो निराकृतमित्यस्माभिरुपरम्यते । वस्तुतस्तु विशिष्टाद्वैतशब्दस्यार्थत्वाभावात् एतादृशविचारस्य च वेदान्तविषयत्वात् रामानुजमतस्य च शूद्रादिभ्यः प्रचलितत्वात् शूद्रस्य च श्रवणाध्ययनार्थप्रतिषेधादिति वेदान्तसूत्रे १ अध्याये ३ पादे ९ अधिकरणे ब्रह्मविचाराधिकारनिषेधात् । मनुना च ४ अध्याये ८० श्लोके न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम् । न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेदिति शूद्रं प्रत्युपदेशमात्रस्य निषिद्धत्वात्किमुत वक्तव्यं शूद्रादुपदेशग्रहणस्य निषेध इति । तथा पराशरस्मृतौ १ अध्यायान्ते कपिला क्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्रश्चाण्डालतां व्रजेदिति वेदसम्पर्कमात्रं यत्र निषिद्धं तत्र तद्रहस्यविचाराधिकारः कथं सम्भाव्यते । तस्मादस्य सिद्धान्तस्य युक्तत्वायुक्तत्वविचारो वन्ध्यासुतस्य सौन्दर्यासौन्दर्यसम्भावनवच्छशविषाणस्य तैक्ष्ण्यातैक्ष्ण्यसम्भावनवत्खपुष्पस्य सुरभित्वासुरभित्वसम्भावनवच्चासम्भावित एव । अथ वा शूद्रेण क्रियमाणे वेदपाठे ज्योतिष्टोमादौ वा शुद्धाशुद्धसम्पन्नासम्पन्नविचारवदनावश्यक एवेत्यलं विस्तरेण । तोताद्रिस्थं मुख्यमास्थानमन्यथास्मान्मान्यं नास्ति रामानुजानाम् । श्रेष्ठो यो भूतत्र पट्टाभिषिक्तो जीरोपाख्यो विष्णुचित्तत्रिदण्डी ॥ १ ॥ रामाभूयुक्ष्मामिते विक्रमाब्दे प्राप्तः काश्यामाश्विने शुक्लपक्षे । सोऽन्येद्युर्वादौ दीर्घमुत्काचतुष्कं प्रज्वाल्याग्रे प्राविशद्राजमार्गम् ॥ २ ॥ सत्सिद्धान्ताभावजं ध्वान्तमत्रव्याप्तं प्राहोल्काचतुष्कस्य हेतुम् । अन्यथास्याकर्ण्य शिष्यैस्तदीयैर्गर्वोत्कर्षाद्धोषितं तत्र तत्र ॥ ३ ॥ ये सन्त्यत्र सद्युक्तियुक्तिपटवो राद्धान्तपारङ्गताः शक्ता दूषयितुं श्रुतिस्मृतिनुतं रामानुजीयं मतम् । तेऽसीतीरविनिर्मिते खलु जगन्नाथाश्रिते मन्दिरे शुक्रोऽर्जासितपञ्चमीयुतदिने वादार्थमायान्त्विति ॥ ४ ॥ श्रुत्वैतेषां तत्र जग्मुर्द्विजेन्द्रा धर्मश्रौतस्मार्तमालम्बमानाः । तैराहूतास्ते च रामानुजीया भीतानैवेयुर्गुरुकेपितश्च ॥ ५ ॥ तदा द्विजैः सर्वजगद्धितार्थे सद्धर्मरक्षाकरपत्रमेतत् । प्रकाशितं यस्य विलोकनेन रामानुजीयाश्चकिता बभूवुः ॥ ६ ॥ निरुत्तराधोवदनाः स्वकीयं विज्ञाय पाषण्डमतं निकृष्टम् । स्वीकृत्य सर्वं द्विजभाषितं ततो गताख्रिदण्ड्यादय इत्यमेतम् ॥ ७ ॥ गुणाभ्युपात्तवर्गताम् ।

श्रीविश्वेश्वरो विजयतेतराम् । अथ वाराणसीपूर्वतो वरवसरसन्निधौ वीरपुरे
निवसतोस्सन्यास्यङ्कितवैष्णवयोर्विवाद सम्भूत । तत्र सन्यासिना श्रीवाराणसीस्थ
विद्वज्जनसम्मतप्राचीनव्यवस्थापत्रमवष्टभ्य शङ्खचक्राभ्यामङ्कितब्राह्मणादेरुत्कृष्टजन्म-
नः शरीरदाहो न कर्तव्य इत्युक्तम् । तदसहमानेन वैष्णवाभासेन स्वमते श्रुतिस्मृ
तयो ऽनेकशस्सन्तीति वदता महान्कोलाहलः कृतस्तदर्थमुभाभ्यां वाराणस्यामागमन
कृतम् । विवादपरिहारार्थञ्च महादेवाश्रमगौडस्वामितारकाश्रमपण्डितरामकृष्णा-
श्रमास्त्रितयतोऽन्यस्मात्तत्र महादेवाश्रमपण्डितरामकृष्णाभ्याञ्चोभावेव विवादभयात्य-
क्तौ । उभाभ्याञ्च सकलशास्त्रपारगाभ्यां कथमश्रौतस्य श्रौतत्वमस्माभिर्बलादापा-
द्येतेत्युक्तम् । तदुत्तरमङ्कितवैष्णवेन किञ्चिद्द्रव्यव्ययेन काशीनाथादिभ्यस्तप्तमु-
द्राधारणेनुमतिरूपो व्यवस्थापत्र सम्पादितम् । इतरैश्च वाराणसीस्थपण्डितैर्यथाशा
स्त्रनिर्णयं रोचयद्भिर्यथाशास्त्रनिर्णीय निरूपितं तदेह लिख्यते । तत्र श्रेयस्साधन
श्रौतस्मार्तकर्म । तत्र श्रौतं ज्योतिष्टोमादि स्मार्तं गृह्यादि । उभयसम्भेदेनैव सता-
माचारः प्रवर्तते । यत्र न वयङ्काङ्कितश्रुतिं स्मृतिं वाऽङ्किताचारपरामुपलभामहे इति
किमित्येतमाचारं श्रौतस्मार्तं वा बलादापादयाम । अयमेव निर्णयश्शाण्डिल्यसूत्रवृ-
त्तिभक्तिचन्द्रिकाव्याख्याने कृत इति तद्ग्रन्थएव लिख्यते । यत्तु लिङ्गधारणप्रा-
मे, ये कण्ठलग्नतुलसीनलिनाक्षमाला ये बाहुमूलपरिचिह्नितशङ्खचक्रा । ये वा ललाट-
फलके लसदूर्ध्वपुण्ड्रास्ते वैष्णवा भुवनमाशु पवित्रयन्तीत्यादि वैष्णवानाम् । तथा
शूलादिधारणं शैवानां तत्र वेदाधिकारिणाम् । किन्तु तप्तशङ्खादिधारणं शूद्राणां
कुण्डगोलकादीनाञ्च । विष्णुस्मृतौ, शङ्खचक्राद्यङ्कनञ्च गीतनृत्यादिकन्तथा ।
एकजातेरयं धर्मो न जातु स्याद् द्विजन्मनः । यथा श्मशानजं काष्ठं सर्वकर्मसु गर्हि-
तम् । तथा चक्राङ्कितो विप्रस्सर्वकर्मसु गर्हितः । शङ्खचक्रं मृदा यस्तु कुर्यात्तप्ता-
यसेन वा । स शूद्रवद्बहिष्कार्यस्सर्वस्माद् द्विजकर्मणः इत्यादिना तप्तमुद्राधारणस्य
शूद्रपरत्वावगमात् । ननु महाभारते नारायणीयोपाख्याने प्रशंसितपञ्चरात्रागमप्र-
सिद्धाचारस्य किमिति विरुद्धस्मृत्यवष्टम्भेन निन्दा क्रियते इति चेत्सत्यम् । द्वि-
विधत्वात्पञ्चरात्रागमस्य न वयम्भारतप्रसिद्धपञ्चरात्रागमनिन्दामस्तस्य वेदानी-
न्तत्रैव दृश्यमानतया निर्देशात् । तथा हि । उपरिचरवसुसञ्ज्ञकं राजानमुपक्रम्य
स च राजा श्रिया युक्तो भविष्यति महान्प्रभुः । संस्थिते तु नृपे तस्मिञ्छास्त्र
मेतत्सनातनम् । अन्तर्धास्यति तत्सर्वमेतद्वः कथितम्मयेति । यच्चेदानीमुपलभ्यते

तस्यैव निन्दाऽपि यथा कौर्मे सात्वतो नाम परमो विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदांवरः ॥ नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रम्प्रवर्तयामास कुण्डगोलादिभिः श्रितम् ॥ अत एव वाक्यादभिनवोऽपि पञ्चरात्रागमः कश्चिदस्ति ॥ साम्बपुराणे पञ्चरात्रं सात्वतं यत्तन्त्रं वैखानसाभिधम् । वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान् । इति पञ्चरात्रं सात्वतमिति समानाधिकरणम् । तेन प्राचीनपञ्चरात्रागमव्यवच्छेदः । ततस्तच्छास्त्रप्रसिद्धतप्तमुद्रादिधारणस्य कुण्डगोलादिपरत्वं निश्चीयते । किञ्च महाभारते निर्दिष्टपञ्चरात्रेन शङ्खादिधारणमभ्यनुज्ञायते । यच्च पवित्रन्ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तस्तत्समाशतइति श्रुतिस्तप्तमुद्रादिधारणे प्रमाणत्वेनोपन्यस्यते यश्च तदर्थे ब्रह्मणस्पतेश्चतुर्मुखस्यापि नायक प्रभुस्त्वं विश्वत सर्वेषां गात्राणि शरीराणि पर्येषि व्याप्नोषि ते व्यापकस्य तव विततम्पवित्रञ्चक्रं सुदर्शनं सहस्रारं पवित्रञ्चरणम्पवित्रीरिति नैघण्टुक । अत्र यदस्तीत्यध्याहार्ये तेनातप्ततनू अत एवामः अपक्व अदग्धपाप इति यावत् । तदप्रसिद्धं मोक्षलक्षण सुखविशेषन्नाश्नुते तत्पवित्र सदावहन्त एव शृतास परिपक्वास्तत्सुखमाशत अश्नुवत इत्युत्प्रेक्ष्यते तत्सर्वं न कैश्चिच्छिष्टैरङ्गीक्रियते । तत्र प्रमाणाभावात् न हि स्वकल्पनया यः कश्चिदेव वेदार्थं सम्पादनीय ॥ तत्त्वे सति कथमुपक्रमादेर्वेदार्थतात्पर्यग्राहकत्वेनोपन्यास शिष्टपरिगृहीत सम्पद्येत । अतो वेदव्याख्यातृषु सर्वशिष्टसम्मते सायणाचार्यैर्यथा व्याख्यात तथैव मन्त्रद्वयमिति तदीयं व्याख्यानं लिख्यते । ऋग्वेदे सप्तमाष्टके तृतीयाध्याये पूयमानप्रकरणे पवित्रन्त इति पञ्चर्चं षोडशं सूक्तम् । तत्र प्रथमा पवित्रन्त इति हे ब्रह्मणस्पते मन्त्रस्य स्वामिन् सोम ते पवित्रं शोधकमङ्ग विततं सर्वत्र विस्तृत स प्रभु प्रभविता त्वं गात्राणि पातुरङ्गानि पर्येषि परिगच्छसि विश्वतः सर्वतस्तव तत्पवित्रम् । अतप्ततनूः पयोव्रतादिना असन्तप्तगात्र आम अपरिपक्वो नाश्नुते न व्याप्नोतीति शृतासइत् शृता एव परिपक्वा एव वहन्तो यागं निर्वहन्त । तत्पवित्र समाशत व्याप्नुवन्तीति तदर्थं । न चैतेन मन्त्रेण शङ्खचक्राङ्कन कुर्यादित्येवं स्मार्तविनियोगो ऽपि विनान्यत्र विनियुक्तस्याप्येतदर्थप्रकाशनमपि ज्ञायेत । सति च कस्मिन्नन्यथा इत्यादिविष्णुपुराणीय ३ अंशस्य ८ अध्यायस्य वचनविरोधात् । ये दैवाद्वर्णाश्रमाधिकारच्युता व्रात्यपतितादय आधुनिकमार्गो

वञ्चनरूपदोषरहिताः सन्तो भगवद्भक्तिं कुर्वन्ति तेषां प्रोत्साहनपर एव। अथ वा यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते इत्यादि भगवद्वचनात्तत्तदभिमानत्यागमात्रं विवक्षितं न स्वरूपत एव धर्मत्यागः। किञ्च तेषु वचनेष्वाधुनिकमार्गाश्रयणाभ्यनुज्ञा नोपलभ्यते। विष्णुपुराणे च तेन तिष्ठन्निति वर्णाश्रमधर्मेषु स्थितिरेव विष्ण्वाराधनमित्युक्तं नान्यस्य धर्मान्तरस्यानुष्ठानापेक्षा कृता। प्रत्युत नान्यः पन्थास्तत्तोषकारणमिति मार्गान्तराश्रयणस्य निषेधः स्पष्टतया कृतः। एवमाधुनिकमार्गे प्रविष्टा ये भगवन्नामग्रहणं कुर्वन्ति तदपि तेषां निष्फलमेव। नाममाहात्म्येष्वाधुनिकमार्गप्रवेशानुज्ञाभावात्तदुक्तनामापराधग्रस्तत्वाच्चास्वीकृताधुनिकमार्गपरमेव नाममाहात्म्यमित्यलं पल्लवितेन। तस्माच्छठकोपादिनीचजातिप्रवर्तितश्रुतिस्मृत्यादिविरुद्धाधुनिकमार्गे प्रविष्टा रामानुजीया निष्फलश्रमा वर्णाश्रमधर्माधिकारच्युता भवन्तीति सिद्धम्। एतेन रामानुजीयानामाचारस्य शास्त्रमूलकत्वशङ्का दूरतोऽपास्ता। न हि शूद्रात्प्रथमं प्रवृत्तः कोऽपि धर्मः शास्त्रमूलको दृष्टः। सर्वस्यापि धर्मस्य वेदमूलकत्वात्। शूद्रस्य च वेदश्रवणमात्रस्याप्यधिकाराभावात्। अतो रामानुजीया यानि वाक्यानि स्वकीयाचारे प्रमाणभूतानि वदन्ति तानि सर्वाण्यपि कल्पितानि सर्वथा निर्मूलान्येवेति सुधीभिरवधेयम्। एतच्चास्माभिर्बहुलतरयत्नेनैतेषां ग्रन्थान्सम्पाद्य यत्र यत्रार्षनाम्ना लिखितं वचनं दृष्टं तस्य तस्यान्वेषणं बहुपुस्तकेषु कृतम्। न तु कुत्रचिद्रामानुजीयाचारानुकूलवचनस्य लेशोऽप्यार्षशास्त्रे दृष्टः। किन्त्वेतैः पाषण्डिभिः कल्पिताः कतिचिद्ग्रन्थाः शिवब्राह्मणमुनिशास्त्रादीनां निन्दापराः सन्ति तेष्वेतेषां धर्मप्रतिपादकानि वचनान्युपलभ्यन्ते नान्यत्र। ते ग्रन्थास्तु वसिष्ठस्मृतिः हारीतस्मृतिः पराशरस्मृतिः इत्यादयः स्मृतयः। पद्मपुराणीयोत्तरखण्डप्रभृतीनि पुराणानि। भारद्वाजसंहिता परमेश्वरसंहिता इत्यादयः संहिताः। इत्येवं विधा बहवो ग्रन्था एतैः कल्पिताः प्रचरन्ति। सत्या अपि वसिष्ठादिमुनिप्रोक्ताः स्मृतय उपलभ्यन्ते तत्रैतैः कल्पितेषु ग्रन्थेषु शिवब्राह्मणादीनां निन्दा एतदीयधर्मस्य प्रशंसा चास्ति। सत्येषु तु केवलं वर्णाश्रमादिधर्ममात्रस्य प्रतिश्रौतस्याप्यश्वमेधादेः स्मृतिपुराणादिगतेन कलिनिषिद्धपरिगणनादिना सङ्कोचः। अन्यथा कलावप्यश्वमेधादिकं स्यात् स्याच्च पतितस्यापि तत्। तस्माच्च तद्वैदिकानामिति सिद्धम्। एतेन तप्तमुद्राधारणस्य दुःविशेषनिषेधवाक्यं रागप्राप्तनिषेधाभिप्रायमिति निरस्तम्। तप्तमुद्राधारणस्य दुःखरूपत्वेन रागाप्राप्तत्वात्। न च तत्प्राप्तस्य निषेधायोगात्प्रापकस्य शास्त्र-

स्योपजीव्यत्वेन प्रबलत्वात्तेनैव वाक्येन निषेधस्य बाधः स्यादिति शङ्क्यम् । यजतिषु ये यजामहङ्करोति नानुयाजेष्वित्यादौ सामान्याद्विशेषस्य प्रबलतया अ- त्रापि प्रापकसामान्यविधितो विशेषनिषेधस्यैव प्रबलत्वात्सामान्यस्यैव बाधनादि- त्यास्तां विस्तरः ॥ इति श्रौतस्मार्ताचरणविनिविष्टानां काशीस्थविदुषाम्परामर्शः । ये च वेदबाह्याचारास्तान्त्रिकवैष्णवास्तैर्वैदिकानपि धनलोभपरवशानतिचपलमतीन- विश्वसनीयत्वेन लोकप्रसिद्धान्काशीस्थसंस्थेश्वरीदत्तप्रभृतिपण्डिताननुकूलीकृत्य व्य- वस्थाभासस्सम्पादितः । न तत्र कश्चिच्छ्रौतस्मार्तो वा विद्वानपक्षपाती सम्मतिमकु- रुतेति शिवम् ॥ ऋष्याकाशानवेन्दुसंवति शुचौ पक्षे सिते वासरे शुक्रे शुक्लकु- लोद्भवैर्बुधजनैः सम्भूय सन्निर्मितः । शास्त्रार्थोऽनलदग्धवैष्णवमतध्वंसीनवान्याशित- यौ प्रासादे च दधातु पण्डितमनस्वान्तप्रसादं चिरम् ॥ श्रीकाशीविश्वेश्वराय नमः ॥

श्रीमत्परमहंसपरिव्राजकाचार्यकैवल्यानन्दयोगीन्द्रभगवत्पूज्यपादमतानुया- यितीर्थाश्रमसरस्वत्युपनामकानां काशीस्थपञ्चशतदण्डिनामत्रार्थे सम्मतिः ॥ १ ॥ अत्रैवार्थे सुब्रह्मण्यशास्त्रिणः सम्मतिः । नतुम्मत्तबद्धचाल्ययातुर्वैष्णवस्य ॥ २॥ सम्म- तिरत्र महानन्दस्य ॥ ३ ॥ श्रुतिस्मृतिपुराणबहिर्भूतं रामानुजीयानां चक्रादिधार- णमित्यत्र सम्मतिः शीतलमिश्रस्य ॥ ४ ॥ सम्मतिरत्र कार्तिकेयमिश्रस्य ॥ ५ ॥ सम्मतिरत्र ऊजनाशङ्करशर्मणः ॥ ६ ॥ एतदर्थे सम्मतिः शालग्रामोपाध्यायस्य ७ सम्मतिरत्र वैद्यनाथशर्मणः ८ सम्मतिरत्र भोजदत्तस्य शर्मणः ९ श्रीमच्चतुर्वेदी हीरानन्दशर्मपण्डितस्य सम्मतिरत्र १० सम्मतिरत्र द्विवेदिनो शिवदत्तस्य ११ सम्मतिरत्र बलदेववैद्यस्य १२ श्रीदेवदत्तशर्मणो द्विवेदोपनामकस्य सम्मतिरत्र १३ सम्मतिरत्र गङ्गारामशर्मणः १४ सम्मतिरत्र शिवचरणशर्मणो ज्योतिर्विदः १५ श्रीदुर्गादत्तशर्मणः पाण्डेयोपाह्वयस्यात्र सम्मतिः १६ सम्मतोऽयमर्थः सोमणो- पाह्वश्रीनागेश्वरशर्मणः १७ सम्मतिरत्र श्रीहीरारामवैदिकस्य १८ श्रीशुक्ल- यदुनाथशर्मणोऽत्र सम्मतिः १९ सम्मतिरत्रार्थे शैवोपाह्वनीलकण्ठशास्त्रिणः २० सम्मतिरत्र हरिभक्तवैदिकस्य २१ पाठकोपाह्वहरिकृष्णशर्मणोऽत्र सम्मतिः २२ सम्मतिरत्र बद्रीमिश्रशर्मणः २३ सम्मतिरत्र गणेशवैदिकस्य २४ श्रीगौरीश- ङ्करशर्मणो द्विवेदोपनामकस्यात्र सम्मतिः २५ सम्मतिरत्र घनश्याममिश्रस्य २६ सम्मतिरत्र श्रीलक्ष्मणशर्मणः २७ सम्मतिरत्रार्थे अग्निहोत्रिविश्वनाथशर्मणः २८ स-

म्मतिरत्र विश्वम्भरशास्त्रिणः २९ सम्मतिरत्र मोतीरामशर्मणः ३० अत्रार्थे सम्मतिः श्रीतुलसीरामशर्मणः ३१ सम्मतिरत्र गौडअमीचन्दपण्डितस्य ३२ सम्मतिर्मोतीरामशर्मणो वैदिकस्य ३३ अत्रार्थे सम्मतिर्गणेशमिश्रस्य ३४ अन्वमंस्तामुमर्थं हर्डीकरोपाभिधो गणेशशर्मा ३५ सम्मतिरत्र श्रीरूपरामशर्मण. ३६ सम्मतिरत्रार्थे गङ्गाधरशर्मणः पत्रान्तरे तुष्यत्विति न्यायेन लेखः ३७ सम्मतिरत्रार्थे वेणीरामशर्मण. ३८ अत्रार्थे सम्मतिः श्रीविश्वेश्वरदत्तशर्मणः ३९ सम्मतिरत्र दयारामशास्त्रिणः ४० सम्मतिरत्रार्थे जीवनाथपण्डितराजस्य राजगुरोर्नेपालवासिनः ४१ अत्रार्थे सम्मतिर्लोमिच्छान्योपनामकविष्णुशर्मणो याज्ञिकस्य पार्वतीयस्य ४२ सम्मतिरत्र कृष्णशर्मणः ४३ रामानुजीयानां मतं निर्मूलमित्यत्र सम्मतिः शितिकण्ठशास्त्रिणः ४४ सम्मतिरत्रार्थे हरिशर्मणः ४५ अत्रार्थे चण्डीश्वरशर्मणस्सम्मतिः ४६ एतदर्थे लक्ष्मणशर्मणः सम्मतिः ४७ अत्रार्थे सम्मतिः श्रीकृष्णदेवसार्वभौमभट्टाचार्याणाम् ४८ अत्रार्थे सम्मतिरभयचरणदेवशर्मणाम् ४९ सम्मतिरत्रार्थे शम्भुशर्मणः ५० सम्मतो ऽयमर्थो ज्योतिर्विदकुलमकरमणिरामशर्मणः ५१ सम्मतिरत्रार्थे त्रिपाठ्युपपाहशिवदयालशर्मणः ५२ सम्मतिरत्रार्थे द्विवेदोपनामकवस्तीरामशर्मणः ५३ अत्रार्थे सम्मतिर्भवानीचरणदेवशर्मणाम् ५४ वस्तुतोऽयमेव सिद्धान्तोऽनुमतो रामेश्वरस्य पत्रान्तरे लेखस्तु केषाञ्चित्सन्तोषमूलमाहार्यः ५५ सम्मतिरत्रार्थे गोपालशास्त्रिणः ५६ सम्मतिरत्र शिवरामद्राविडस्य ५७ अत्रार्थे सम्मतिर्मेङ्करेत्युपनामकनारायणशर्मणः ५८ तत्र तु तान्त्रिकत्वेनात्र तु वैदिकत्वेन ॥ सम्मतिरत्रार्थे गाडगिलोपनामकरामकृष्णस्य ५९ सम्मतिरत्रार्थे चिन्तामणिदैवज्ञस्य ६० सम्मतिरस्मिन्नर्थे पद्मनिधेः पर्वतीयस्य ६१ सम्मतिरत्रार्थे धर्माधिकारिरामचन्द्रशर्मण. ६२ सम्मतिरत्रार्थे गणपतिदीक्षितस्य ६३ सम्मतिरत्रार्थे गोपालकृष्णयाज्ञिकस्य ६४ सम्मतिरत्रार्थे नन्दरामशर्मणः ६५ अयमेव सिद्धान्तो ऽनुमतो हरिनारायणस्य ६६ सम्मतिरत्रार्थे रामदत्तशर्मणः ६७ सम्मतिरत्रार्थे प्रयागदत्तशर्मणस्त्रिपाठिनः ६८ सम्मतिरत्र रामसुन्दरशास्त्रिण. ६९ सम्मतिरत्र रामनमनपाण्डेयस्य ७० सम्मतिरत्र सामवेदिनो दीक्षितोपनामककल्याणजीशर्मणः ७१ सम्मतिरत्र सामवेदिनो द्विवेदिनो गङ्गाधरशर्मण. ७२ सम्मतिरत्र मोक्षनाथविदुषः ७३ सम्मतिरत्रार्थे पाण्डेयोपनामकमहादेवदत्तशर्मणः ७४ सम्मतिरत्रार्थे गङ्गारामत्रिपाठिशर्मण कूर्माचलनिवासिन. ७५ सम्मतिरत्रार्थे पाण्डे

योपनामकलक्ष्मीकान्तशर्मणः कूर्माचलवासिनः ७६ सम्मतिरत्रार्थे पन्तोपनामककूर्माचलवासिन. आदिकेशवशर्मणः ७७ सम्मतिरत्रार्थे पन्तोपनामककूर्माचलनिवासिन' हरिरामशर्मणः ७८ सम्मतिरत्रार्थे चिन्तामणिशास्त्रिणः ७९ सम्मतिरत्रार्थे *गिरिजाशङ्करपाठकस्य* ॥ ८० ॥

ससम्मतेरस्या व्यवस्थायां अशुद्धिबहुलाया अपि पुस्तकान्तरस्य तु परिशुद्धस्याप्राप्त्याऽकृत्वैव शोधनमुदितावस्थायामेव मुद्रणमाज्ञापितं भवतीत्यत्रत्यस्खलनरूपमत्रभारयन्तु स्वत एव व्युत्पन्नमतय इत्यलमल्पावेदनेन ॥

